देवसेनापते स्कन्द भगवन् शंकरप्रिय ।
[ बलिः प्रीतेन मनसा षण्मुख प्रतिगृह्यताम् ॥ ४८ ॥
नारायणामितगते पद्मनाभ सुरोत्तम ।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयार्पितः ॥ ४९ ॥ ]
महादेव महायोगिन्देवदेव सुरोत्तम ।
संप्रगृह्य बलिं देव रक्ष विघ्नान्सदोत्थितान् ॥ ५० ॥
देवदेवि महाभागे सरस्वति हरिप्रिये ।
प्रगृह्यतां बलिर्मातर्मया भक्त्या समर्पितः ॥ ५१ ॥
सर्वभूतानुभावज्ञ लोकजीवन मारुत ।
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयार्पितः ॥ ५२ ॥
नानानिमित्तसंभूताः पौलस्त्याः सर्व एव ते ।
राक्षसेन्द्रा महासत्त्वाः प्रतिगृह्णीत मे बलिम् ॥ ५३ ॥
लक्ष्मीः सिद्धिर्मतिर्मेधा सर्वलोकनमस्कृताः ।
मन्त्रपूतमिमं देव्यः प्रतिगृह्णन्तु मे बलिम् ॥ ५४ ॥
[ देववक्त्र सुरश्रेष्ठ धूमकेतो हुताशन ।
भक्त्या समुद्यतो देव बलिः संप्रतिगृह्यताम् ॥ ५५ ॥ ]
सर्वग्रहाणां प्रवरं तेजोराशे दिवाकर ।
भक्त्या मयोद्यतो देव बलिः संप्रतिगृह्यताम् ॥ ५६ ॥

---

१. 'देवसेनापविस्कन्द' का. २. 'प्रीतेन मनसा देव षण्मुख प्रतिगृह्यताम्' का. ३. 'मन्त्रसंस्कारसस्कृत.' का.; क-ख-पुस्तकयो. पद्यार्धमेतदत्र नास्ति, इतस्तृतीये श्लोके 'भावज्ञः सर्वभूताना' इत्यादिपद्यस्योत्तरार्धत्वेन वर्तते. ४. 'देवदेव महायोगिन्' घ.' ५. 'देविदेवि' का. ६. श्लोकोऽयं घ-पुस्तके 'लक्ष्मीः सिद्धिः' इत्यादि श्लोकोत्तर वर्तते, का-पुस्तकेऽपि तथैव, परं का-पुस्तके 'नानानिमित्तसंभूताः' इत्यादिपद्यमस्य श्लोकस्य पुरो वर्तते.; 'भावज्ञ (ः) सर्वभूतानां' क-ख-पुस्तकयो'. ७. 'मारुत (ः)' क-ख. ८. 'मयोद्यत.' घ-का. ९. 'प्रतिगृह्णन्त्विमं बलिम्' इति का. १०. 'देव्य. सिद्धिबुद्धिलक्ष्म्यै( क्ष्म्य' )' क-ख. ११. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १२. 'सं॰ पूज्य' क-ख.

सर्वग्रहपते सोम द्विजराज जगत्प्रिय ।
प्रगृह्यतां[1] बलिर्देव मन्त्रपूतो मयोद्यतः ॥ ५७ ॥
महागणेश्वराः सर्वे नन्दीश्वरपुरोगमाः ।
प्रगृह्यतां[2] बलिर्भक्त्या मया संप्रतिचोदितः ॥ ५८ ॥
नमः पितृभ्यः सर्वेभ्यः प्रतिगृह्णन्त्विमं[3] बलिम् ।
भूतेभ्यश्च[4] नमो नित्यं येषामेष[5] बलिः प्रियः ॥ ५९ ॥
कामपाल नमो नित्यं यस्यायं ते विधिः कृतः[6] ।
नारदस्तुम्बुरुश्चैव[7] विश्वावसुपुरोगमाः ॥ ६० ॥
प्रतिगृह्णन्तु मे सर्वे गन्धर्वा बलिमुद्यतम्[8] ।
यमो मित्रश्च भगवानीश्वरौ लोकपूजितौ ॥ ६१ ॥
इमं मे प्रतिगृह्णीतां बलिं मन्त्रपुरस्कृतम् ।
रसातलगतेभ्यश्च[9] पन्नगेभ्यो नमोनमः ॥ ६२ ॥
दिशन्तु सिद्धिं नाट्यस्य पूजिताः पवनाशनाः[10] ।
सर्वाम्भसां पतिर्देवो वरुणो हंसवाहनः ॥ ६३ ॥
पूजितः प्रीतिमानस्तु[11] ससमुद्रनदीनदः ।
वैनतेय महासत्त्व सर्वपक्षिपते विभो[12] ॥ ६४ ॥
प्रगृह्यतां बलिर्देव मन्त्रपूतो मयोद्यतः[13] ।
धनाध्यक्षो यक्षपतिर्लोकपालो धनेश्वरः ॥ ६५ ॥
सगुह्यकः[14] सयक्षश्च प्रतिगृह्णातु मे बलिम् ।
नमोऽस्तु नाट्यमातृभ्यो ब्राह्म्याद्याभ्यो[15] नमोनमः ॥ ६६ ॥

---

१. 'प्रगृह्यतामेष बलिर्मन्त्रपूतो मयोद्यत.' ष.; 'प्रगृह्यतामेष बलिर्मन्त्रपूतपुरस्कृतः' का. २. 'प्रतिगृह्णन्त्विमं भक्त्या बलिं सम्यक्प्रचोदितम्' का. ३. 'प्रतिगृह्णन्तु मे बलिम्' फ-स. ४. श्लोकार्धमिदं फ-स. पुस्तकयोर्नास्ति. ५. 'वेषामेव' का. ६. 'बलि.' का. ७. 'तुम्बर.' फ-स. ८. 'उत्तमम्' पा. ९. 'चरेभ्यस्तु' का. १०. 'पावनाशनाः' ब-भ-का. ११. 'प्रतिमानस्तु (!)' फ.; 'प्रतिमानस' स. १२. 'प्रभो' का. १३. 'मयोदितः' फ-स. १४. 'सगुह्यकैश्च यक्षैश्च' का. १५. 'ब्राह्म्यादिभ्यो' का.

सुमुखीभिः प्रसन्नाभिर्बलिः संप्रतिगृह्येताम् ।
रुद्रप्रहरणं सर्वं प्रतिगृह्णातु मे बलिम् ॥ ६७ ॥
विष्णुप्रहरणं चैव विष्णुभक्त्या मयोद्यतम् ।
तथा कृतान्तः कालश्च सर्वप्राणिवधेश्वरौ ॥ ६८ ॥
मृत्युश्च नियतिश्चैव प्रतिगृह्णातु मे बलिम् ।
याश्चास्यां मत्तवारण्यां संश्रिता वास्तुदेवताः ॥ ६९ ॥
मन्त्रपूतमिमं सम्यक्प्रतिगृह्णन्तु मे बलिम् ।
अन्येऽपि ये देवगणा दिशो दश समाश्रिताः ॥ ७० ॥
दिव्यान्तरिक्षभौमाश्च तेभ्यश्चायं बलिः कृतः ।
कुम्भं सलिलसंपूर्णं पुष्पमालापुरस्कृतम् ॥ ७१ ॥
स्थापयेद्रङ्गमध्ये तु सुवर्णं चात्र दापयेत् ।
आतोद्यानि तु सर्वाणि कृत्वा वस्त्रोत्तराणि तु ॥ ७२ ॥
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यैर्भोज्यैश्च पूजयेत् ।
पूजयित्वा तु सर्वाणि दैवतानि यथाक्रमम् ॥ ७३ ॥
जर्जरस्त्वभिसंपूज्यः स्यात्ततो विघ्नजर्जरः ।
श्वेतं शिरसि वस्त्रं स्यान्नीलं रौद्रेऽथ पर्वणि ॥ ७४ ॥
विष्णुपर्वणि पीतं स्याद्रक्तं स्कन्दस्य पर्वणि ।
मूलपर्वणि चित्रं तु देयं वस्त्रं हितार्थिना ॥ ७५ ॥
सदृशं च प्रदातव्यं धूपमाल्यानुलेपनम् ।
आतोद्यानि च सर्वाणि वासोभिरवगुण्ठयेत् ॥ ७६ ॥
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यभोज्यैश्च पूजयेत् ।
सर्वमेवं विधिं कृत्वा गन्धमाल्यानुलेपनैः ॥ ७७ ॥

१. 'अथ प्रगृह्यताम्' क-ख. २. 'चव' का. ३. 'विष्णुप्रहरण' का. ४. 'मयोदितम्' क-ख. ५. 'सर्वप्राणधनेश्वर.' क-ख.; 'सर्वप्राणिवशेश्वरौ' का. ६. 'अन्ये ये देवगन्धर्वा' च-का. ७. 'दिव्यान्तरिक्षा' का. ८. 'वर्णमाला' क-ख.; 'सलिलपूर्णं च वर्णमाला' का. ९. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १०. 'जर्जरः प्रतिसंपूज्य' का. ११. 'च.' च-का. १२. 'वै पीत' च.; 'स्यात् पीतं' का. १३. 'गुपपर्वणि(?)' क-ख. १४. 'माल्यधूपानुलेपनम्' का. १५. 'गन्धमाल्यैश्च' का. १६. 'सर्वमेव' का. १७. 'धूपमाल्यानुलेपनैः' का.

विघ्नजर्जरणार्थं तु जर्जरं त्वभिमन्त्रयेत्[1] ।
अत्र[2] विघ्नविनाशार्थं पितामहमुखैः सुरैः ॥ ७८ ॥
निर्मितस्त्वं महावीर्यो[3] वज्रसारो[4] महातनुः ।
शिरस्ते रक्षतु ब्रह्मा सर्वैर्देवगणैः[5] सह ॥ ७९ ॥
द्वितीयं च[6] हरः पर्व[7] तृतीयं तु[8] जनार्दनः ।
चतुर्थं च कुमारश्च पञ्चमं पन्नगोत्तमाः[9] ॥ ८० ॥
नित्यं सर्वेऽपि[10] पान्तु त्वां पुनस्त्वं च शिवो भव ।
नक्षत्रेऽभिजिति त्वं च[11] प्रसूतो रिपुसूदनः ॥ ८१ ॥
जयं चाभ्युदयं चैव पार्थिवस्य[12] समावह ।
जर्जरं पूजयित्वा[13] च बलिं सर्वं निवेद्य च ॥ ८२ ॥
अग्नौ होमं ततः कुर्यान्मन्त्राहुतिपुरस्कृतम्[14] ।
हुत्वा स एव दीप्ताभिरुल्काभिः परिमार्जनम् ॥ ८३ ॥
नृपतेर्नर्तकीनां च कुर्याद्दीप्त्यभिवर्धनम् ।
अभिद्योत्य सहातोद्यैर्नृपतिं नर्तकीं तथा[15] ॥ ८४ ॥
मन्त्रपूतेन तोयेन पुनरभ्युक्ष्य तान्वदेत् ।
महाकुले प्रसूताः[16]स्थ गुणौघैश्चाप्यलंकृताः' ॥ ८५ ॥
यद्वो जन्मगुणोपेतं तद्वो[17] भवतु नित्यशः ।
एवमुक्त्वा[18] ततो वाक्यं नृपतेर्भूतये बुधः ॥ ८६ ॥
नाट्यप्रयोगसिद्ध्यर्थमाशिषः संप्रयोजयेत् ।
सरस्वती धृतिर्मेधा ह्रीःश्रीर्लक्ष्मीर्धृतिर्मतिः[19] ॥ ८७ ॥

---

१. 'चाभिमन्त्रयेत्' फ. २. 'विघ्नानां शमनार्थं हि देवैर्ब्रह्मपुरोगमैः' का. ३. 'महावीर्यं' क-ख. ४. 'वज्रसत्त्वे' क-ख. ५. 'सर्वदेवगणैः' का. ६. 'तु' ग. ७. 'पातु' ग. ८. 'च' ग-का. ९. 'पन्नगोत्तमः' का. १०. 'सर्वे हि पान्तु त्वां सुराः' का. ११. 'नक्षत्रेऽभिजितं त्वं तु सर्पोऽहितसूदनः' (?) क-ग. १२. 'पार्थिवाय प्रयच्छ नः' का. १३. 'पूजयित्वैवं' का. १४. 'पुरस्कृतः' क-ख. १५. 'नर्तकीस्तथा' का. १६. 'प्रसूतास्ताः' क-ख.; 'प्रसूताश्च' का. १७. 'तद्वै' ग. १८. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १९. 'मतिः स्मृतिः' का.

पान्तु वो मातरः सौम्याः सिद्धिदाश्च भवन्तु वः।
होमं कृत्वा यथान्यायं हविर्मन्त्रपुरस्कृतम् ॥ ८८ ॥
भिन्द्यात्कुम्भं ततश्चैव नाट्याचार्यः प्रयत्नतः।
अभिन्ने तु भवेत्कुम्भे स्वामिनः शत्रुतो भयम् ॥ ८९ ॥
भवेद्भिन्ने तु कुम्भे तु स्वामिनः शत्रुसंक्षयः।
भिन्ने कुम्भे ततश्चैव नाट्याचार्यः प्रयत्नतः ॥ ९० ॥
प्रगृह्य दीपिकां दीप्तां सर्वरङ्गं प्रदीपयेत्।
क्ष्वेडितैः स्फोटितैश्चैव वल्गितैर्विप्रधावितैः ॥ ९१ ॥
रङ्गमध्ये तु तां दीप्तां सशब्दां संप्रयोजयेत्।
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैः पणवैस्तथा ॥ ९२ ॥
सर्वातोद्यैः प्रणदिते रङ्गयुद्धानि कारयेत्।
तत्र च्छिन्नं च भिन्नं च दारितं च सशोणितम् ॥ ९३ ॥
क्षतं प्रदीप्तमायस्तं निमित्तं सिद्धिलक्षणम्।
सम्यगिष्टस्तु रङ्गो वै स्वामिनः शुभमावहेत् ॥ ९४ ॥
पुरस्य बालवृद्धस्य तथा जनपदस्य च।
दुरिष्टस्तु तथा रङ्गो [12]दैवतैर्दुरधिष्ठितः ॥ ९५ ॥
नाट्यविध्वंसनं कुर्यान्नृपस्य च तथाशुभम्।
य[13] एवं विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ॥ ९६ ॥
प्राप्नोत्यपचयं शीघ्रं तिर्यग्योनिं च गच्छति।
यज्ञेन [14]संमितं ह्येतद्रङ्गदैवतपूजनम् ॥ ९७ ॥
अपूजयित्वा रङ्गं तु नैव प्रेक्षां प्रयोजयेत्।
पूजिताः पूजयन्त्येते मानिता मानयन्ति च ॥ ९८ ॥

---

१. 'सर्वाः' का. २. 'भिद्यात्' क-ख-का. ३. 'भिन्ने चैव तु विज्ञेयः' च-का. ४. 'सर्वरङ्ग' क-ख. ५. 'श्च प्रधावितैः' च-का. ६. 'मृदङ्गपणवैस्तथा' च-का. ७. 'प्रणुदितैः' क-ख. ८. 'रङ्गे' का. ९. 'भिन्नं च छिन्नं च' का. १०. 'क्षतं' च. 'क्षतप्रदीप्तमायत्तं' का. ११. 'पुनरस्य बालवृद्धस्य' च. १२. 'देवतैः (?)' च. १३. 'यस्त्वेवं' का. १४. 'संमत' क-ख-च. १५. 'प्रेक्ष्यं' क-ख.

तस्मात्सर्वप्रयत्नेन कर्तव्यं रङ्गपूजनम् ।
न तथा[1]शु दहत्यग्निः प्रभञ्जनसमीरितः ॥ ९९ ॥
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ।
शास्त्रज्ञेन[2] विनीतेन शुचिना दीक्षितेन च ॥ १०० ॥
नाट्याचार्येण शान्तेन कर्तव्यं रङ्गपूजनम् ।
स्थानभ्रष्टं तु यो दद्याद्बलिमुद्विग्नमानसः ॥ १०१ ॥
मन्त्रहीनो यथा होता प्रायश्चित्ती भवेत्तु सः ।
इ[3]त्ययं यो विधिर्दिष्टो रङ्गदैवतपूजने ॥ १०२ ॥
नवे नाट्यगृहे का[4]र्यः प्रेक्षायां च[5] प्रयोक्तृभिः ।

इति श्री[6]भारतीये नाट्यशास्त्रे र[7]ङ्गदैवतपूजाविधानं नाम तृतीयोऽध्यायः ।

---

अ[8]थ च[9]तुर्थोऽध्यायः ।

एवं तु पूजनं कृत्वा मया प्रोक्तः[10] पितामहः ।
आज्ञापय वि[11]भो क्षिप्रं कः प्रयोगः प्रयुज्यताम् ॥ १ ॥
ततोऽस्म्युक्तो भगवता योजयामृतमन्थनम् ।
एतदुत्साहजननं सु[12]रप्रीतिकरं तथा[13] ॥ २ ॥
योयं स[14]मवकारस्तु धर्मकामार्थसाधकः ।
मया प्रग्रथितो विद्वन्स प्रयोगः प्रयुज्यताम् ॥ ३ ॥
[15]तस्मिन् समवकारे तु प्रयुक्ते देवदानवाः ।
हृष्टाः समभवन् सर्वे कर्मभावानुदर्शनात् ॥ ४ ॥
कस्यचित्त्वथ कालस्य मामाहाम्बुजसंभवः ।
नाट्यं संदर्शयामोऽ[16]र्थं त्रिनेत्राय महात्मने ॥ ५ ॥

---

१. 'तथाशु(शु ?)' क-ख. २. 'शास्त्रज्ञे च' क-ख. ३. 'एवमेव विधि.' का. ४. 'कार्यम् (?)' का. ५. 'तु' का. ६. 'श्री' इति नास्ति का-पुस्तके. ७. 'रङ्गदैवतपूजनं' ग.; 'रङ्गदेवतापूजनं' का. ८. क-ख-पुस्तकयोः 'अथ' इति नास्ति. ९. 'चतुर्थाध्यायप्रारम्भ.' का. १०. 'प्रोक्त पितामह' क-ख. ११. 'प्रभो' का. १२. 'सर्वे' क-ख. १३. 'महद्' का. १४. 'समवकारस्य.' १५. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १६. 'अत्र' का.; 'अन्यं' क-ख.

ततः सार्धं सुरैर्गत्वा वृषभाङ्कनिवेशनम् ।
[1]समभ्यर्च्य शिवं पश्चादुवाचेदं पितामहः ॥ ६ ॥
मया समवकारस्तु योऽयं सृष्टः सुरोत्तम ।
श्रवणे दर्शने चास्य प्रसादं कर्तुमर्हसि ॥ ७ ॥
पश्याम इति देवेशो द्रुहिणं वाक्यमब्रवीत् ।
ततो मामाह भगवान्सज्जो भव महामते ॥ ८ ॥
ततो हिमवतः पृष्ठे नानानग[2]समाकुले ।
[3]बहुचूतद्रुमाकीर्णे रम्यकन्दरनिर्झरे ॥ ९ ॥
पूर्व[4]रङ्गे कृते पूर्वं तत्रायं द्विजसत्तमाः ।
[6]तथा त्रिपुरदाहश्च [5]डिमसंज्ञः प्रयोजितः ॥ १० ॥
ततो भूतगणा हृष्टाः कर्मभावानुकीर्तनात् ।
महादेवश्च सुप्रीतः पितामहमथाब्रवीत् ॥ ११ ॥
अहो नाट्यमिदं सम्यक्त्वया [7]सृष्टं महामते ।
यशस्यं च शुभार्थं च पुण्यं बुद्धिविवर्धनम् ॥ १२ ॥
मयापीदं स्मृतं [8]नृत्यं संध्याकालेषु नृत्यता ।
नानाकरणसंयुक्तैरङ्गहारैर्विभूषितम् ॥ १३ ॥
पूर्वरङ्गविधावस्मिंस्त्वया सम्यक्[9]प्रयोज्यताम् ।
[10]वर्धमानकयोगेन [11]गीतेष्वासारितेषु च ॥ १४ ॥
महागीतेषु [12]चैवार्थान् [13]सम्यगेवाभिनेष्यसि ।
यश्चायं पूर्वरङ्गस्तु त्वया शुद्धः प्रयोजितः ॥ १५ ॥
[14]एतद्विमिश्रितश्चायं चित्रो नाम भविष्यति ।
श्रुत्वा महेश्वरवचः प्रत्युक्तं [15]च स्वयंभुवा ॥ १६ ॥

---

१. 'अभ्यर्च्य च' का. २. 'उपस्कृते' का. ३. 'बहुभूतगणाकीर्णे' का. ४. '°दारस्यो' क-ख. ५. 'हिम' क-ख. ६. 'ततो' क-ख. ७. 'दृष्ट' क-ख. ८. 'नित्यं' क-ख. ९. 'प्रयुज्यताम्' का. १०. श्लोकार्धमिदं क-ख पुस्तकयोर्नास्ति, ग-पुस्तके च प्रक्षिप्तत्वेन वर्तते. ११. 'गीतेष्वासादितेषु च' का. १२. 'चैवार्थो.' क-ख. १३. 'सम्यक्त्वमभिनेष्यसि' क-ख. १४. 'एभि' का. १५. 'तु' ग.

प्रयोगमङ्गहाराणामाचक्ष्व सुरसत्तम ।
ततस्तण्डुं समाहूय प्रोक्तवान्भुवनेश्वरः ॥ १७ ॥
प्रयोगमङ्गहाराणामाचक्ष्व भरताय वै ।
ततो ये तण्डुना प्रोक्तास्त्वङ्गहारा महात्मना ॥ १८ ॥
नानाकरणसंयुक्तान्व्याख्यास्यामि सरेचकान् ।
स्थिरहस्तोऽङ्गहारस्तु तथा पर्यस्तकः स्मृतः ॥ १९ ॥
सूचीविद्धस्तथा चैव ह्यपविद्धस्तथैव च ।
आक्षिप्तकस्तु विज्ञेयस्तथा चोद्घट्टितः स्मृतः ॥ २० ॥
विष्कम्भश्चैव संप्रोक्तस्तथा चैवापराजितः ।
विष्कम्भापसृतश्चैव मत्ताक्रीडस्तथैव च ॥ २१ ॥
स्वस्तिको रेचितश्चैव पार्श्वस्वस्तिक एव च ।
वृश्चिकश्चैव संप्रोक्तो भ्रमरश्च तथापरः ॥ २२ ॥
मत्तस्खलितकश्चैव मदाद्विलसितस्तथा ।
गतिमण्डलो विज्ञेयः परिच्छिन्नस्तथैव च ॥ २३ ॥
परिवृत्तरेचितः स्यात्तथा वैशाखरेचितः ।
परावृत्तोऽथ विज्ञेयस्तथा चैवाप्यलातकः ॥ २४ ॥
पार्श्वच्छेदोऽथ संप्रोक्तो विद्युद्भ्रान्त[15]स्तथैव च ।
[16]ऊरूद्वृत्तस्तथा चैव स्यादालीढस्तथैव च ॥ २५ ॥
रेचितश्चापि विज्ञेयस्तथैवाच्छुरितः स्मृतः ।
आक्षिप्तरेचितश्चैव संभ्रान्तश्च तथापरः ॥ २६ ॥

---

१. 'सुरसत्तम' का.　२. 'वै' का.　३. 'अङ्गहारान्' (?) का.　४. 'ताश्च' क-ख.　५. 'तथा च स्यात् सूपविद्ध.' का.　६. 'आक्षिप्तकोऽथ' का.　७. 'चोद्घा-द्दित.' क.; 'वीयाद्धित' ख.; 'चोद्घटित.' का.　८. 'अङ्गसृतश्चैव' क.; 'अपसृतश्चैव' का.　९. 'रचितश्चैव' क-ख.　१०. 'चमरश्च' क-ख-का.　११. 'विलसतस्तथा' क-ख.　१२. 'रेचितोऽथ स्यात्' का.; 'वृश्चिपरिवृत्त' क-ख.　१३. 'वैशाख एव च' क-ख.　१४. 'द्वलाठक.' (?) क.; 'द्वलाटक' (?) ख.　१५. 'विद्युद्दान्तः' क-ख.; 'विद्युद्भ्रान्त.' का.　१६. 'उद्वृत्तकस्तथैव [स्यात्]' क-ख.; 'उरुद्वृत्त.' का.　१७. 'स्मृत.' इति त्रुटितं क-ख-पुस्तकयोः.

अपसर्पस्तु विज्ञेयस्तथा चार्धनिकुट्टकः।
द्वात्रिंशदेते संप्रोक्ता अङ्गहारास्तु नामतः॥ २७॥
एतेषां तु प्रवक्ष्यामि प्रयोगं करणाश्रयम्।
हस्तपादप्रचारश्च यथा योज्यः प्रयोक्तृभिः॥ २८॥
अङ्गहारेषु वक्ष्यामि करणेषु च वै द्विजाः।
सर्वेषामङ्गहाराणां निष्पत्तिः करणैर्यतः॥ २९॥
तान्यतः संप्रवक्ष्यामि नामतः कर्मतस्तथा।
हस्तपादसमायोगो नृत्यस्य करणं भवेत्॥ ३०॥
द्वे नृत्यकरणे चैव भवतो नृत्यमातृका।
द्वाभ्यां त्रिचतुराभिर्वाप्यङ्गहारस्तु मातृभिः॥ ३१॥
त्रिभिः कलापकं चैव चतुर्भिर्मण्डकं भवेत्।
पञ्चैव करणानि स्युः संघातक इति स्मृतः॥ ३२॥
षड्भिर्वा सप्तभिर्वापि अष्टभिर्नवभिस्तथा।
करणैरिह संयुक्ता अङ्गहारा इति स्मृताः॥ ३३॥
एतेषामेव वक्ष्यामि हस्तपादविकल्पनम्।
तलपुष्पपुटं पूर्वं वर्तितं वलितोरु च॥ ३४॥
अपविद्धं समनखं लीनं स्वस्तिकरेचितम्।
मण्डलस्वस्तिकं चैव निकुट्टकमथापि च॥ ३५॥
तथैवार्धनिकुट्टं च कटिच्छिन्नं तथैव च।
अर्धरेचितकं चैव वक्षःस्वस्तिकमेव च॥ ३६॥

---

१. 'असर्पितोऽथ विज्ञेयः' का. २. 'लङ्गहारास्तु' का. ३. 'एषां चैव प्रवक्ष्यामि' का. ४. 'करणाश्रितम्' का. ५. 'तु' का. ६. 'अङ्गहारप्रयोगेषु' क-ख. ७. 'तथाहं द्विजसत्तमाः' का. ८. 'भवेत्' का. ९. 'तान्यहं' का. १०. 'समायोगि' ख. ११. 'नृत्तस्य' का. १२. 'नृत्तकरणे' ग. १३. 'नृत्तमातृका' ग.; 'नृत्तमातृकाः' का. १४. 'त्रिभिश्चतुर्वापि' ग. १५. 'त्रिभिः कलापको ज्ञेयश्चतुर्भिर्मण्डकस्तथा' का. १६. 'षण्डकं तथा' क-ग. १७. 'करणैरिह संयुक्तो अङ्गहार इति स्मृतः।' क-ख. १८. 'इह' का. १९. 'चैव' का. २०. 'चलितोरु च' क-ख-का. २१. 'मण्डलं स्वस्तिकं चैव' क-ग-का. २२. 'कटिच्छन्नं' क.; 'कटिच्छिन्नं' ख.

उन्मत्तं स्वस्तिकं चैव पृष्ठस्वस्तिकमेव च ।
दिक्स्वस्तिकमलातं च तथैव च कटीसमम् ॥ ३७ ॥
आक्षिप्तरेचितं चैव विक्षिप्ताक्षिप्तकं तथा ।
अर्धस्वस्तिकमुद्दिष्टमञ्चितं च तथापरम् ॥ ३८ ॥
भुजङ्गत्रासितं प्रोक्तमूर्ध्वजानु तथैव च ।
निकुञ्चितं च मत्तल्लि त्वर्धमत्तल्लि चैव हि ॥ ३९ ॥
स्याद्रेचकनिकुट्टं च तथा पादापविद्धकम् ।
वलितं घूर्णितं चैव ललितं च तथापरम् ॥ ४० ॥
दण्डपक्षं तथा चैव भुजङ्गत्रस्तरेचितम् ।
नूपुरं चैव संप्रोक्तं तथा वैशाखरेचितम् ॥ ४१ ॥
भ्रमरं चतुरं चैव भुजङ्गाञ्चितमेव च ।
दण्डरेचितकं चैव तथा वृश्चिककुट्टनम् ॥ ४२ ॥
कटिभ्रान्तं तथा चैव लतावृश्चिकमेव च ।
छिन्नं च करणं प्रोक्तं तथा वृश्चिकरेचितम् ॥ ४३ ॥
वृश्चिकं व्यंसितं चैव तथा पार्श्वनिकुट्टकम् ।
ललाटतिलकं क्रान्तं कुञ्चितं चक्रमण्डलम् ॥ ४४ ॥
उरोमण्डलमाक्षिप्तं तथा तलविलासितम् ।
अर्गलं चाथ विक्षिप्तमावृत्तं दोलपादकम् ॥ ४५ ॥
विवृत्तं विनिवृत्तं च पार्श्वक्रान्तं निशुम्भितम् ।
विद्युद्भ्रान्तमतिक्रान्तं विवर्तितकमेव च ॥ ४६ ॥
गजक्रीडितकं चैव तलसंस्फोटितं तथा ।
गरुडप्लुतकं चैव गण्डसूचि तथापरम् ॥ ४७ ॥

१. 'ननात्तं' (?) ख. २. 'तथा चैव' का. ३. 'विक्षिप्तकं तथा' ख. ४. 'निकुञ्चितमतल्लि च अर्धमतल्लि चैव हि' क-ख. ५. 'घूर्णितं चैव वलितं' का. ६. 'वृश्चिककुट्टितम्' का. ७. 'पादनिकुट्टनम्' का. ८. 'वक्रमण्डलम्' क-ख. ९. 'आर्तवं' क-ख. १०. 'दोलपादुकम्' का.

परिवृत्तं समुद्दिष्टं पार्श्वजानु तथैव च ।
[1]गृध्रावलीनकं चैव सन्नतं सूच्यथापि च ॥ ४८ ॥
अर्धसूचीति करणं सूचीविद्धं तथैव च ।
अपक्रान्तं च संभ्रोक्तं मयूरललितं तथा ॥ ४९ ॥
सर्पितं दण्डपादं च हरिणप्लुतमेव च ।
प्रेङ्खोलितं नितम्बं च [2]स्खलितं करिहस्तकम् ॥ ५० ॥
[3]प्रसर्पितकमुद्दिष्टं सिंहविक्रीडितं तथा ।
[4]सिंहाकर्षितमुद्वृत्तं तथोपसृतमेव च ॥ ५१ ॥
[5]तलघट्टितकं चैव जनितं [6]चावहित्थकम् ।
[7]निवेशमेलकाक्रीडमूरूद्वृत्तं [8]तथैव च ॥ ५२ ॥
मदस्खलितकं चैव विष्णुक्रान्तमथापि च ।
[9]संभ्रान्तमथ विष्कम्भमु[10]द्घट्टितमथापि च ॥ ५३ ॥
वृषभक्रीडितं चैव लोलितं च तथापरम् ।
[11]नागापसर्पितं चैव [12]शकटास्यं तथैव च ॥ ५४ ॥
[13]गङ्गावतरणं चैवेत्युक्तमष्टाधिकं शतम् ।
[14]अष्टोत्तरशतं [15]ह्येतत्करणानां मयोदितम् ॥ ५५ ॥
[16]नृत्ते युद्धे नियुद्धे च तथा गतिपरिक्रमे ।
[17]गतिचारे प्रवक्ष्यामि युद्धचारीविकल्पनम् ॥ ५६ ॥
यत्र तत्रापि संयोज्यमाचार्यैर्नाट्यशक्तितः ।
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः ॥ ५७ ॥
चरणस्यानुगश्चापि दक्षिणस्तु भवेत्करः ।
हस्तपादप्रचारं तु [18]कटिपार्श्वोरुसंयुतम् ॥ ५८ ॥

---

१. 'गृद्धावलीनकं' का. २. 'खलितं' क. ३. 'प्रसर्पित समुद्दिष्ट' का. ४. 'सिंहकम्पितं' क-ख. ५. 'तलसंघट्टितं' का. ६. 'च बहिस्त्रिकम्' क ख. ७. 'निवेशं मौलिकाक्रीडं' क-ख-का. ८. 'तथैव च' का. ९. 'सक्रान्त' क-ख. १० 'उद्घाटितं' क ख. ११. 'सामापसर्पितं' क ख. १२. 'शकटास्यं' क-ख. १३. 'रङ्गावतरणं' क-ख. १४. पद्यार्धमेतत् का-पुस्तके नास्ति. १५ 'चैतद्' क-ख. १६. 'नृत्ये' क-ख. १७. 'मतिचारे' क.; 'गतिप्रचारे वक्ष्यामि' का. १८. 'कटी' क-ख.

उरः पृष्ठोदरोपेतं वक्ष्यमाणं निबोधत ।
यानि स्थानानि याश्चार्यो नृत्तहस्तास्तथैव च ॥ ५९ ॥
सा मातृकेति विज्ञेया तद्योगात्करणं भवेत् ।
कटीकर्णसमा यत्र को ( कूं ? ) र्परासशिरस्तथा ॥ ६० ॥
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ।
वामे पुष्पपुटः पार्श्वे पादोऽग्रतलसंचरः ॥ ६१ ॥
तथा च सनतं पार्श्वे तत्पुष्पपुटं भवेत् ।
कुञ्चितौ मणिबन्धे तु व्यावृत्तपरिवर्तितौ ॥ ६२ ॥
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत् ।
शुकतुण्डौ यदा हस्तौ व्यावृत्तपरिवर्तितौ ॥ ६३ ॥
ऊरू च वलितौ यस्मिन्वलितोरुकमुच्यते ।
आवर्त्य शुकतुण्डाख्यमूरुपृष्ठे निपातयेत् ॥ ६४ ॥
वामहस्तश्च वक्षःस्थो ह्यपविद्धं तु तद्भवेत् ।
श्लिष्टौ समनखौ पादौ करौ चापि प्रलम्बितौ ॥ ६५ ॥
देहः स्वाभाविको यत्र भवेत्समनखं तु तत् ।
पताकाञ्जलि वक्षःस्थं प्रसारितशिरोधरम् ॥ ६६ ॥
निकुञ्चितांसकूटं च तल्लीनं करणं स्मृतम् ।
स्वस्तिकौ रेचितौ विद्धौ विश्लिष्टौ कटिसंस्थितौ ॥ ६७ ॥
यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम् ।
स्वस्तिकौ तु करौ कृत्वा प्राङ्मुखोर्ध्वतलौ समौ ॥ ६८ ॥

१. 'रससमार्गे' का. २. पद्यमेतत् क-ख-पुस्तकयोर्नास्ति; 'करौ कर्णसमौ' का. ३. 'कूर्परांऽशशिरस्तथा' का. ४. 'समुन्नतमुरश्चैव' का. ५. 'पुष्पपुटं' का. ६. 'पार्श्वे' क-ख. ७. 'कुञ्चितौ' क-ख. ८. 'च' क-ख. ९. 'व्यावर्तपरिवर्तिते' क-ख. १०. 'शुक' क-ख. ११. 'व्यावर्तं' क-ख. १२. 'पुरो' क.; 'उरो' ख. १३. 'यत्र' का. १४. 'वलितोरु तदुच्यते' क-ख.; 'वलितोरु तदुच्यते' का. १५. 'आवृत्त' का. १६. 'वाम[ः]स्थो वामहस्तश्च' का. १७. 'ह्यपप्रविद्धं' क. १८. 'निकुञ्चितांस' क. १९. 'रेचितविद्धौ' क. २०. 'कटिसंस्थितौ' क. २१. 'प्राङ्मुखोर्ध्वतलौ' का.

तथा च मण्डलं स्थानं [1]मण्डलस्वस्तिकं [2]तु तत् ।
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसोऽन्तरे ॥ ६९ ॥
पादौ [3]निकुट्टितौ चैव [4]ज्ञेयं तत्तु निकुट्टनम् ।
अञ्चितौ [5]बाहुशिरसी [6]हस्तस्त्वभिमुखाङ्गुलिः ॥ ७० ॥
निकुञ्चितार्धयोगेन [7]भवेदर्धनिकुट्टकम् ।
[8]पर्यायशः कटिश्छिन्ना बाहू शिरसि पल्लवौ ॥ ७१ ॥
पुनः पुनश्च करणं कटिच्छिन्नं तु तद्भवेत् ।
[9]अपविद्धकरः सूच्या पादश्चैव [10]निकुट्टितः ॥ ७२ ॥
संनतं यत्र पार्श्वं [11]च तद्भवेदर्धरेचितम् ।
स्वस्तिकौ चरणौ यत्र करौ [12]वक्षःस्थरेचितौ ॥ ७३ ॥
निकुञ्चितं तथा वक्षो वक्षःस्वस्तिकमेव [13]तत् ।
अञ्चितेन तु पादेन रेचितौ तु करौ [14]यदा ॥ ७४ ॥
उन्मत्तं करणं तत्तु विज्ञेयं [15]नृत्यकोविदैः ।
[16]हस्ताभ्यामथ पादाभ्यां भवतः स्वस्तिकौ यदा ॥ ७५ ॥
तत्स्वस्तिकमिति प्रोक्तं करणं करणार्थिभिः ।
[17]विक्षिप्ताक्षिप्तबाहुभ्यां स्वस्तिकौ चरणौ यदा ॥ ७६ ॥
[18]अपक्रान्तार्धसूचीभ्यां तत्पृष्ठस्वस्तिकं भवेत् ।
पार्श्वयोरग्रतश्चैव यत्र [19]श्लिष्टकृतो भवेत् ॥ ७७ ॥

---

१. 'मण्डलं' क-ख-का. २. 'हि' क-ख. ३. निकुटितं' क-ख. ४. 'विज्ञेयं चैव कुट्टकम्' क-ख.; 'ज्ञेयं तत्तु निकुट्टकम्' का. ५. 'बाहुशिखरौ' क-ख.; 'बाहुशिरसि' ग. ६. 'हस्तस्त्वा' (?) क-ख. ७. 'निकुट्टितार्धभागेन' क-ख. 'निकुञ्चितश्च पादः स्यात्' का.; 'भवेदर्धकुट्टितम्' क-ख.; 'ज्ञेयमर्धनिकुट्टकम्' का. ८. 'पर्यायस(शः) कटी छिन्ना बाह्वोः शिरसि पल्लवे' क-ख. ९. 'अपविद्धकरः' क-ख-का. १०. 'निकुट्टकः' का. ११. 'तु' क-ख. १२. 'वक्षसि रेचितौ' का. १३. 'च' क-ख-का. १४. 'तदा' क-ख. १५. 'वृत्त' ग-का. १६. तदेतत्पद्यं क-ख. पुस्तकयोर्नास्ति । परं पद्यस्यास्य प्रथमपादोऽव्यवहितोत्तरपद्ये पूर्वपादत्वेनोपलभ्यते । 'उभाभ्यां हस्तपादाभ्या' का. १७. 'हस्ताभ्यामथ पादाभ्यां' क-ख. १८. 'अपक्रान्तार्धसूचिभ्यां' ख-का. १९. 'श्लिष्टगतो' ग.; 'श्लिष्टः कृतो' का.

स्वस्तिको हस्तपादाभ्यां तद्विस्वस्तिकमुच्यते ।
[1]अलातं चरणं कृत्वा व्यंसयेद्दक्षिणं करम् ॥ ७८ ॥
ऊर्ध्वजानुक्रमं [2]कुर्यादलातकमिति [3]स्मृतम् ।
स्वस्तिकापसृतः पादः करौ [4]नाभिकटिस्थितौ ॥ ७९ ॥
पार्श्वमुद्वाहितं चैव करणं तत्कटीसमम् ।
हस्तौ हृदि भवेद्वामः सव्य[5]श्चाक्षिप्तरेचितः ॥ ८० ॥
रेचितश्चापविद्धश्च तत्स्यादाक्षिप्तरेचितम् ।
विक्षिप्तं हस्तपादं [6]च तस्यैवाक्षेपणं पुनः ॥ ८१ ॥
यत्र तत्करणं ज्ञेयं विक्षिप्ताक्षिप्तकं द्विजाः ।
स्वस्तिकौ चरणौ कृत्वा [7]करिहस्तं च दक्षिणम् ॥ ८२ ॥
वक्षःस्थाने तथा वामम[8]र्धस्वस्तिकमादिशेत् ।
व्यावृत्तपरिवृत्तस्तु स एव तु करो यदा ॥ ८३ ॥
अञ्चितो नासिकाग्रे तु तदञ्चितमुदाहृतम् ।
कुञ्चितं पादमुत्क्षिप्य व्यस्र[9]मूरुं [10]विवर्तयेत् ॥ ८४ ॥
[11]कटिजानू विवर्तौ च भुजङ्गत्रासितं भवेत् ।
कुञ्चितं पादमुत्क्षिप्य [12]जानु स्तनसमं न्यसेत् ॥ ८५ ॥
प्रयोगवशगौ हस्तावूर्ध्वजानु प्रकीर्तितम् ।
[13]वृश्चिकं चरणं कृत्वा करं पार्श्वे निकुञ्चयेत् ॥ ८६ ॥
नासाग्रे दक्षिणं चैव ज्ञेयं [14]तत्तु निकुञ्चितम् ।
वामदक्षिणपादाभ्यां [15]घूर्णमानोपसर्पणैः ॥ ८७ ॥
उद्वेष्टितापविद्धैश्च हस्तैर्[16]मत्तल्ल्युदाहृतम् ।
स्खलितापसृतौ पादौ वामहस्तश्च रेचितः ॥ ८८ ॥

---

१. 'प्रजातं' ख. २. 'चैव' का. ३. 'भवेत्' का. ४. 'नाभीकटीस्थितौ' का. ५. 'स्या' क-ख. ६. 'तु' का. ७. 'कटिहस्तं' क-ख. ८. 'अभ्रम्' ग. ९. 'ऊरु' का. १०. 'प्रवर्तयेत्' क-ख. ११. 'कटी जानुविवर्तौ च' क-ख.; 'कटिजानु विवृत्तं च' का. १२. 'जानुमूर्ध्नं प्रसारयेत्' क-ख-का. १३. 'करणं वृश्चिकं कृत्वा' का. १४. 'ननु' (?) ख., 'तद्धि' का. १५. 'पूर्ण' क-का. १६. 'मतल्लि' क-ख.

सव्यहस्तः[1] कटिस्थः स्यादर्धमत्तल्लि तत्स्मृतम् ।
रेचितो दक्षिणो हस्तः पादः सव्यो निकुट्टितः ॥ ८९ ॥
दोला चैव भवेद्वामस्तद्रेचितनिकुट्टितम्[2] ।
कार्यौ नाभितटे हस्तौ[3] प्राङ्मुखौ खटकामुखौ[4] ॥ ९० ॥
सूचीविद्धावपक्रान्तौ पादौ पादापविद्धके[5] ।
अपविद्धो भवेद्धस्तः सूचीपादस्तथैव च ॥ ९१ ॥
तथा त्रिकं विवृत्तं च वलितं[6] नाम तद्भवेत् ।
वर्तिता[7]घूर्णितः सव्यो हस्तो वामश्च दोलितः ॥ ९२ ॥
स्वस्तिकापसृतः पादः करणं घूर्णितं तु[8] तत् ।
करिहस्तो भवेद्वामो दक्षिणश्चापवर्तितः[9] ॥ ९३ ॥
बहुशः कुट्टितः पादो ज्ञेयं तल्ललितं बुधैः ।
ऊर्ध्वजानु[10] विधायैत[11]त्तस्योपरि लतां न्यसेत् ॥ ९४ ॥
दण्डपक्षं तु तत्प्रोक्तं करणं नृत्तवेदिभिः ।
भुजङ्गत्रासितं कृत्वा यत्रोभावपि रेचितौ ॥ ९५ ॥
वामपार्श्वस्थितौ हस्तौ भुजङ्गत्रस्तरेचितम् ।
त्रिकं सुवलितं कृत्वा लतारेचितकौ करौ ॥ ९६ ॥
नूपुरं च तथा पादं करणे नूपुरे न्यसेत् ।
रेचितौ हस्तपादौ च कटी[12] ग्रीवा च रेचिता ॥ ९७ ॥
वैशाखस्थानकेनैतद्भवेद्वैशाखरेचितम् ।
आक्षिप्तः[13] स्वस्तिकः पादः करौ चोद्वेष्टितौ तथा ॥ ९८ ॥
त्रिकस्य वलनं[14] चैव ज्ञेयं भ्रमरकं तु तत् ।
अञ्चितः स्यात्करो वामः सव्यश्चतुर एव च ॥ ९९ ॥

---

१. 'अर्धमतल्लि' क-ख. 'अर्धमत्तल्लिमादिशेत्' का. २. 'रेचकनिकुट्टके' क-ख.; 'रेचकनिकुट्टितम्' का. ३. 'नाभिमुखे'. ४. 'खटिकामुखौ' क-ख.; 'स्टकामुखौ' का. ५. 'पादापविद्धकौ' का. ६. 'स्खलितं' क-ख. ७. 'वर्तितो' का. ८. 'हि' क-ख. ९. 'प्रवर्तितः' क-ख., 'विवर्तित' का. १०. इत प्रभृति श्लोकचतुष्टयं क-ख. पुस्तकयोर्नास्ति । 'ऊर्ध्वं जानु' का. ११. 'विधायाथ' का. १२. 'कटिग्रीवो च रेचितो' का. १३. 'दोलितो वामक- पाद-' क-ख. १४. 'वलनाचैव' क-ख-का.

दक्षिणः कुट्टितः पादश्चतुरं तत्प्रकीर्तितम् ।
भुजङ्गत्रासितः पादो दक्षिणो रेचितः करः ॥ १०० ॥
लताख्यश्च करो वामो भुजङ्गाञ्चितकं भवेत् ।
विक्षिप्तं हस्तपाद तु समन्ताद्यत्र दण्डवत् ॥ १०१ ॥
रेच्यते तद्धि करणं ज्ञेयं दण्डकरेचितम् ।
वृश्चिकं चरणं कृत्वा द्वावप्यथ निकुट्टितौ ॥ १०२ ॥
विघातव्यौ करौ तत्तु ज्ञेयं वृश्चिककुट्टितम् ।
सूचीं दत्त्वापविद्धं च दक्षिणं चरणं न्यसेत् ॥ १०३ ॥
रेचिता च कटिर्यत्र कटिभ्रान्तं तदुच्यते ।
अञ्चितः पृष्ठतः पादः कुञ्चितोर्ध्वतलाङ्गुलिः ॥ १०४ ॥
लताख्यश्च करो वामस्तल्लतावृश्चिकं भवेत् ।
अलपद्म. कटीदेशे छिन्ना पर्यायशः कटी ॥ १०५ ॥
वैशाखस्थानकेनेह तच्छिन्नं करणं भवेत् ।
वृश्चिकं चरण कृत्वा स्वस्तिकौ च करावुभौ ॥ १०६ ॥
रेचितौ विप्रकीर्णौ च करौ वृश्चिकरेचितम् ।
बाहुशीर्षाञ्चितौ हस्तौ पादः पृष्ठाञ्चितस्तथा ॥ १०७ ॥
दूरसंनतपृष्ठं च वृश्चिक तत्प्रकीर्तितम् ।
आलीढ स्थानकं यत्र करौ वक्षसि रेचितौ ॥ १०८ ॥
ऊर्ध्वाधो विप्रकीर्णौ च व्यंसितं करणं तु तत् ।
हस्तौ तु स्वस्तिकौ पार्श्वे तथा पादो निकुट्टित. ॥ १०९ ॥

---

१. 'रेचितो दक्षिण' क ख का. २ 'भुजङ्गाञ्चितके' क-ख. ३. 'च' क-ख. ४. 'ल्पावेन' क ख. ५ 'करण' का. ६. 'द्वावप्ययनिकुट्टितौ' क-ख. ७. 'तद्धि' क्र. ८. 'कृत्वा' क ख का. ९. 'अर्धेलतद्गुलि' क-ख. १०. 'छिन्नपर्यायश्च कटीम्' (?) क ख. ११. 'रेचितापसृतौ चैव' का. १२. 'कार्यौ' क-ख.; 'कार्यं' का. १३. 'वृश्चिकरेचिते' क-ख. १४. 'आलीढस्थानको' का. १५. 'तद्विदुर्बुधा' का. १६. 'पादौ' क-ख.

यत्र तत्करणं ज्ञेयं बुधैः पार्श्वनिकुट्टितम् ।
वृश्चिकं चरणं कृत्वा पादस्याङ्गुष्ठकेन तु ॥ ११० ॥
ललाटे तिलकं कुर्याल्ललाटतिलकं तु तत् ।
पृष्ठतः कुञ्चितं कृत्वा व्यतिक्रान्तक्रमं ततः ॥ १११ ॥
आक्षिप्तौ च करौ कार्यौ क्रान्तके करणे द्विजाः ।
आद्यः पादो नतः कार्यः सव्यहस्तश्च कुञ्चितः ॥ ११२ ॥
उत्तानो वामपार्श्वस्थस्तत्कुञ्चितमुदाहृतम् ।
प्रलम्बिताभ्यां बाहुभ्यां यद्गात्रेणानतेन च ॥ ११३ ॥
अभ्यन्तरापविद्धं स्यात्तज्ज्ञेयं चक्रमण्डलम् ।
स्वस्तिकापसृतौ पादावपविद्धक्रमौ यदा ॥ ११४ ॥
उरोमण्डलको हस्त उरोमण्डलिकं तु तत् ।
आक्षिप्तं हस्तपादं च क्रियते यत्र वेगतः ॥ ११५ ॥
आक्षिप्तं नाम करणं विज्ञेयं तद्द्विजोत्तमाः ।
ऊर्ध्वाङ्गुलितलः पादः पार्श्वेनोर्ध्वं प्रसारितः ॥ ११६ ॥
प्रकुर्यादञ्चिततलौ हस्तौ तलविलासिते ।
पृष्ठतः प्रसृतः पादो द्वौ तालावर्धमेव च ॥ ११७ ॥
तस्य चैवानुगो हस्तः पुरतस्त्वर्गलं तु तत् ।
विक्षिप्तं हस्तपादं च पृष्ठतः पार्श्वतोऽपि वा ॥ ११८ ॥
एकमार्गगतं यत्र तद्विक्षिप्तमुदाहृतम् ।
प्रसार्य कुञ्चितं पादं पुनरावर्तयेद्द्रुतम् ॥ ११९ ॥

---

१. 'पार्श्वनिघुट्टकम्' क-ख.; 'पार्श्वनिकुट्टनम्' का. २. 'करणं' का. ३. 'च' का. ४. 'कुर्यादतिक्रान्तं समन्ततः' का. ५. 'पादोऽञ्चितः' का. ६. 'वामपार्श्वश्च'. ७. '°प-विद्धा' का. ८. 'पादौ पादावर्धक्रमौ' क-ख-का. ९. 'उरोमण्डलकौ हस्तौ' क-ख.; 'उरोमण्डलिकौ'. १०. 'उरोमण्डलकं' क-ख-का. ११. '°पादौ तु क्रियेते' क-ख. १२. 'करणं नाम' क-ख-का. १३. 'तद्विज्ञेयं द्विजर्षभाः' का. १४. 'पार्श्वेणोर्ध्वं' का. १५. 'तलावूर्ध्वमेव च' क-ख.; 'तलावूर्ध्वमेव च' का. १६. 'तस्यैव चानुगो हस्तः' ख.; 'तस्यैवानुगतो हस्तः' का. १७. 'तु' का. १८. 'ऽथवा' का. १९. 'पुर आवर्तयेद्रुतम्' क-ख.

प्रयोगवशगौ हस्तौ [1]तदावर्तमुदाहृतम् ।
कुञ्चितं [2]पादमुत्क्षिप्य पार्श्वात्पार्श्वं तु दो[3]लयेत् ॥ १२० ॥
प्रयोगवशगौ हस्तौ डो( दो ? )लपादं [4]तदुच्यते ।
आक्षिप्तं हस्तपादं च त्रिकं चैव वि[6]वर्तयेत् ॥ १२१ ॥
रेचितौ च तथा हस्तौ विवृत्ते [7]करणे द्विजाः ।
सूचीविद्धं विधायाथ त्रिकं तु विनिवर्तयेत् ॥ १२२ ॥
करौ च रेचितो कार्यौ विनिवृत्ते द्विजोत्तमाः ।
[8]पार्श्वक्रान्तक्रमं कृत्वा पुरस्तादथ पातयेत् ॥ १२३ ॥
प्रयोगवशगौ हस्तौ पार्श्वक्रान्तं [9]तदुच्यते ।
पृष्ठतः [10]कुञ्चितः पादो वक्षश्चैव समुन्नतम् ॥ १२४ ॥
तिलके च करः स्थाप्यस्तन्निशुम्भितमुच्यते ।
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ॥ १२५ ॥
[11]सर्वतो [12]मण्डलाविद्धं विद्युद्भ्रान्तं तदुच्यते ।
[13]अतिक्रान्तं क्रमं कृत्वा [14]पुरस्तात्संप्रसारयेत् ॥ १२६ ॥
प्रयोगवशगौ हस्तावतिक्रान्ते प्रकीर्तितौ ।
आक्षिप्तं हस्तपादं च त्रिकं चैव विवर्तितम् ॥ १२७ ॥
[15]द्वितीयो रेचितो हस्तो विवर्तितकमेव तत् ।
[16]कर्णेऽञ्चितः करो वामो लताहस्तश्च दक्षिणः ॥ १२८ ॥
दोलापादस्तथा चैव [17]गजक्रीडितके भवेत् ।
द्रुतमुत्क्षिप्य चरणं पुरस्तादथ पातयेत् ॥ १२९ ॥
तलसंस्फोटितौ हस्तौ तलसंस्फोटिते [18]स्मृतौ ।

१. 'तदावृत्तमुदाहृतम्' का. २. 'उत्क्षिप्तं' क-ख. ३. 'डोलयेत्' ग. ४. 'तदुक्तं दोलपादकम्' क-ख.; 'दोलपादं प्रकीर्तितम्' का. ५. 'चक्रपादं च' क-ख. ६. 'च परिवर्तयेत्' क-ख.; 'चैव विवर्तितम्' का. ७. 'विरते' क-ख. ८. 'पार्श्वजानुक्रमं' का. ९. 'पार्श्वक्रान्तमुदाहृतम्' का. १०. 'कुञ्चितो पादौ' का. ११. 'हस्तौ च मण्डलाविद्धौ' का. १२. 'मण्डलाबद्धं' क-ख. १३. 'प्रतिक्रान्तं क्रम' क-ख. १४. 'संप्रयोजयेत्' क-ख. १५. 'पुनश्च रेचयेद्धस्तं' का. १६. 'कर्णाञ्चित-करो' क-ख. १७. 'गजक्रीडितकं' ग. १८. 'मतौ' ग.

पृ[1]ष्ठप्रसारितौ पादौ लतारेचितकौ करौ ॥ १३० ॥
समुन्नत[2]मुरश्चैव गरुडप्लुतके भ[3]वेत्।
सूचीपादोन्नतं पार्श्वमेको वक्षःस्थितः करः ॥ १३१ ॥
द्वितीयश्चाञ्चितो ग[4]ण्डे ग[5]ण्डसूची तदुच्यते।
ऊर्ध्वा[6]पवेष्टितौ हस्तौ सूचीपादो विवर्तितः ॥ १३२ ॥
परिवृत्त[7]त्रिकं चैव परिवृत्तं तदुच्यते।
एकः समस्थितः पाद ऊरु[8]पृष्ठे स्थितोऽपरः ॥ १३३ ॥
मुष्टिहस्तश्च वक्षःस्थः पार्श्वजानु तदुच्यते।
पृष्ठप्रसारितः पादः किंचिदञ्चितजानु[9]कः ॥ १३४ ॥
यत्र प्रसारितौ बाहू तत्स्याद्गृध्रावलीनकम्।
उत्प्लुत्य चरणौ कार्यावग्रतः स्वस्तिक[10]स्थितौ ॥ १३५ ॥
संनतौ च तथा हस्तौ संनतं तदुदाहृतम्।
कुञ्चितं पादमुत्क्षिप्य कुर्यादग्रस्थितं भुवि ॥ १३६ ॥
प्रयोगवशगौ हस्तौ तत्सूचि परिकीर्तितम्।
अ[11]लपद्मः शिरोहस्तः सूचिपादश्च दक्षिणः ॥ १३७ ॥
यत्र तत्करणं ज्ञेयमर्धसूचीति नामतः।
पादसूच्या यदा पा[12]दो द्वितीयस्तु प्रविध्यते ॥ १३८ ॥
क[13]टिवक्षःस्थितौ हस्तौ सूचीविद्धं तदुच्यते।
कृत्वोरुवलितं पादमपक्रान्तक्रमं न्यसे[14]त् ॥ १३९ ॥
प्रयोगवशगौ हस्तावपक्रान्तं तदुच्यते।
वृश्चिकं च[15]रणं कृत्वा रेचितौ च तथा करौ ॥ १४० ॥

---

१. '°त· पादः' का.; 'तं (?) पादौ' क-ख. २. '°तं शिर.' क-ख. ३. 'कं' ग. ४. '°ण्डौ' क-ख.; '°ण्डौ' का. ५. '°चि' क-ख-का. ६. '°वचेष्टितौ हस्तौ' का.; तदेतत्पद्यं क-खपुस्तकयोर्नास्ति. ७. '°तनिकश्चैव' का. ८. 'पार्श्वस्थित. पर.' का. ९. '°कम्' ग. १०. '°ष्ठौ' क-ख. ११. 'वामः पाद शिरोदेशे' क-ख का. १२. पादौ (?)' का. १३. 'कटीदेशस्थितौ' क-ख. १४. 'नयेत्' ग. १५. 'करणं' क-ख-का.

तथा त्रिकं विवृत्तं च मयूरललितं भवेत् ॥
अञ्चितापसृतौ पादौ शिरश्च परिवाहितम् ।
रेचितौ च तथा हस्तौ तत्सर्पितमुदाहृतम् ॥ १४१ ॥
नूपुरं चरणं कृत्वा दण्डपादं प्रसारयेत् ।
क्षिप्तविद्धकरं चैव दण्डपादं तदुच्यते ॥ १४२ ॥
अतिक्रान्तं क्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
जङ्घाञ्चितोपरिक्षिप्ता तद्विद्याद्धरिणप्लुतम् ॥ १४३ ॥
दोलापादक्रमं कृत्वा समुत्प्लुत्य निपातयेत् ।
परिवृत्तं त्रिकं चैतत्प्रेङ्खोलितकमुच्यते ॥ १४४ ॥
भुजावूर्ध्वविनिष्क्रान्तौ हस्तौ चाभिमुखाङ्गुली ।
बद्धाचारी तथा चैव नितम्बे करणे भवेत् ॥ १४५ ॥
दोलापादक्रमं कृत्वा हस्तौ तदनुगावुभौ ।
रेचितौ घूर्णितौ वापि स्खलितं करणं न्यसेत् ॥ १४६ ॥
वामो वक्षःस्थितो हस्तः प्रोद्वेष्टिततलोऽपरः ।
अञ्चितश्चरणश्चैव प्रयोज्यः करिहस्तके ॥ १४७ ॥
एकस्तु रेचितो हस्तो लताख्यस्तु तथापरः ।
प्रसर्पिततलौ पादौ प्रसर्पितकमेव तत् ॥ १४८ ॥
अलातं च पुरः कृत्वा द्वितीयं च द्रुतक्रमम् ।
हस्तौ पादानुगौ चापि सिंहविक्रीडिते स्मृतौ ॥ १४९ ॥
पृष्ठप्रसारितः पादस्तथा हस्तौ निकुञ्चितौ ।

---

१. '°ललिते' क-ख. २. 'अन्तरापसृतौ' क-ख. ३. 'करौ यत्र' का. ४. 'क्षिप्रा-विद्धकर' च.; 'क्षिप्रविद्ध करं' का. ५. '°क्रान्तकमं' च. ६. 'विन्द्यात्' क-ख. ७. 'डोला' च.; 'दोलापाद' क-ख. ८. 'घृत्तनिक चैव तत्' च. ९. 'नितान्तकरणे' क-ख. १०. 'दोलापाद क्रम' क-ख.; 'दोलापादकमं' का. ११. 'रेचिताघूर्णितं वापि' क-ख. १२. 'च' का. १३. 'तद्रुतकमम्' क-ख. १४. 'वापि' क-ख. १५ '°प्रसर्पित' क-ख.; 'पृष्ठ प्रसर्पित' का. १६. 'कुञ्चितावर्तितौ करौ' का.

पुनस्तथैव [1]कर्तव्यौ [2]सिंहाकर्षितके द्विजाः ॥ १५० ॥
आक्षिप्तहस्त[3]माक्षिप्तपादमाक्षिप्तदेहकम् ।
[4]उद्वृत्तगात्रमित्येतद[5]द्वृत्तं करणं स्मृतम् ॥ १५१ ॥
आक्षिप्तश्[6]चरणश्चैको हस्त[7]स्तस्यैव वशानुगः ।
आनतं च तथा गात्रं तयोपसृतकं भवेत् ॥ १५२ ॥
[8]दोलापादक्रमं कृत्वा तल[9]संघट्टितौ करौ ।
रेचयेच्च करं वामं तलसंघट्टिते [10]सदा ॥ १५३ ॥
एको वक्षःस्थितो हस्तो द्वितीयश्च प्रलम्बितः ।
तलाग्रसंस्थितः पादो जनिते करणे भवेत् ॥ १५४ ॥
जनितं [11]करणं कृत्वा हस्तौ चाभिमुखाङ्गुली ।
[12]शनैर्निपतितौ चैव ज्ञेयं [13]तदवहित्थकम् ॥ १५५ ॥
करौ वक्षःस्थितौ कार्यावुरो निर्भुग्नमेव च ।
मण्डलं स्थानकं चैव [14]निवेशकरणं [15]तु तत् ॥ १५६ ॥
तलसंचरपादाभ्यामुत्प्लुत्य पतनं तु यत् ।
संनतं वलितं गात्रमे[16]लकाक्रीडितं तु तत् ॥ १५७ ॥
करमावृत्तकरणमूरुपृष्ठेऽञ्चितं न्यसेत् ।
जङ्घाञ्चिता तथोद्वृत्ता [17]ह्यूरूद्वृत्तं तदुच्यते ॥ १५८ ॥
करौ प्रलम्बितौ कार्यौ शिरश्च परिवाहितम् ।
पादौ च वलिताविद्धौ मदस्खलितके द्विजाः ॥ १५९ ॥
पुरः [18]प्रसारितः पादः कुञ्चितो गमनोन्मुखः ।

---

१. 'कर्तव्यं' क-ख. २. 'सिंहकम्पितके' क-ख. ३. 'आक्षिप्तदेहमाक्षिप्तपादकम्' ग. ४. 'उद्वृत्य' क-ख. ५. 'उद्वृत्तं' क-ख. ६. 'चरणः कार्यो' क-ख-का. ७. 'हस्तस्यैव...चानुग.' क-ख.; 'हस्तौ तस्यैव चानुगौ.' ८. 'दोलापादं' क-ख. ९. 'संघटितौ' का. १०. 'तथा' का. ११. 'चरणं' क-ख. १२. 'निपातितौ' का. १३. 'तत्तु वहित्थिकम्' क-ख. १४. 'निवेशं करणं' ग. १५. 'च' क-ख. १६. 'मनिकाक्रीडितं तु तत् ।' क-ख.; 'भवेद्' ग. १७. 'तदूरुद्वृत्तम्' का. १८. 'प्रसर्पितः' क-ख.




करौ च रेचितौ यत्र विष्णुक्रान्तं तदुच्यते ॥ १६० ॥
करमावर्तितं कृत्वा ह्यूरुपृष्ठे निकुञ्चयेत् ।
ऊरुश्चैव तथा विद्धः संभ्रान्तं करणं तु तत् ॥ १६१ ॥
अपविद्धः करः सूच्या पादश्चैव निकुट्टितः ।
वक्षःस्थश्च करो वामो विष्कम्भे करणे भवेत् ॥ १६२ ॥
पादावुद्घट्टितौ कार्यौ तलसंघट्टितौ करौ ।
नितम्बपार्श्वं कर्तव्यं बुधैरुद्घट्टिते सदा ॥ १६३ ॥
प्रयुज्यालातकं पूर्वं हस्तौ चापि हि रेचयेत् ।
कुञ्चितावञ्चितौ चैव वृषभक्रीडिते सदा ॥ १६४ ॥
रेचितावञ्चितौ हस्तौ लोलितं वर्तितं शिरः ।
[ उभयोः पार्श्वयोर्यत्र तल्लोलितमुदाहृतम् ॥ १६५ ॥
स्वस्तिकापसृतौ पादौ शिरश्च परिवाहितम् ।
रेचितौ च तथा हस्तौ स्यातां नागापसर्पिते ॥ १६६ ॥ ]
निषण्णाङ्गस्तु चरणं प्रसार्य तलसंचरम् ।
उद्वाहितमुरः कृत्वा शकटास्यं प्रयोजयेत् ॥ १६७ ॥
ऊर्ध्वाङ्गुलितलः पादस्त्रिपताकावधोमुखौ ।
हस्तौ शिरः संनतं च गङ्गावतरणं त्विति ॥ १६८ ॥
[ यानि स्थानानि याश्चार्यो व्यायामे गदितानि तु ।

पादप्रचारस्तेषां तु करणानामयं भवेत् ॥ १६९ ॥
ये चापि नृत्तहस्तास्तु गदिता नृत्तकर्मणि ।
तेषां समासतो योगः करणेषु विभाव्यते ॥ १७० ॥
प्रायेण करणे कार्यो वामो वक्षःस्थितः करः ।
चरणश्चानुगश्चापि दक्षिणस्तु भवेत्करः ॥ १७१ ॥
चार्यश्चैव तु याः प्रोक्ता नृत्तहस्तास्तथैव च ।
सा मातृकेति विज्ञेया तद्भेदात्करणानि तु ॥ १७२ ॥
अष्टोत्तरशतं ह्येतत्करणानां मयोदितम् ।
अतः परं प्रवक्ष्यामि ह्यङ्गहारविकल्पनम् ॥ १७३ ॥
प्रसार्योत्क्षिप्य च करौ समपादं प्रयोजयेत् ।
व्यंसितापसृतं सव्यं हस्तमूर्ध्वं प्रसारयेत् ॥ १७४ ॥
प्रत्यालीढं ततः कृत्वा तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं स्वस्तिकं ततः ॥ १७५ ॥
नितम्बं करिहस्तं च कटिच्छिन्नं च योगतः ।
स्थिरहस्तो भवेदेष त्वङ्गहारो हरप्रियः ॥ १७६ ॥
तलपुष्पापविद्धे द्वे वर्तितं सनिकुट्टकम् ।
[प्रत्यालीढं ततः कृत्वा तथैव च निकुट्टकम् ॥ १७७ ॥]
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ।
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ॥ १७८ ॥
एष पर्यस्तको नाम ह्यङ्गहारो हरोद्भवः ।
अलपल्लवसूच्यौ च कृत्वा विक्षिप्तमेव च ॥ १७९ ॥
आवर्तितं ततः कुर्यात्तथैव च निकुट्टकम् ।
ऊरूद्वृत्तं तथाक्षिप्तमुरोमण्डलमेव च ।
करिहस्तं कटिच्छिन्नं सूचीविद्धो भवेदयम् ॥ १८० ॥

१ 'ऊर्ध्वं हस्त' का. २. 'स्वस्तिकाक्षिप्तमेव च' क-ख. ३. 'करिहस्तय' कटिच्छिन्नं तथैव च' का. ४. 'भवेदेवमङ्गहारहरप्रिया.' क-ख. ५. 'तलपुष्पापविद्धे च वर्तितं संप्रसारयेत्' का. ६. एतत्पद्यार्धं क-ख-का पुस्तकेषु नास्ति. ७. तदेतत्पद्यं का-पुस्तके नास्ति. ८. 'आरात्रिकं' क-ख. ९. 'उरोमण्डलकं तथा' का.

अपविद्धं तु करणं सूचीविद्धं तथैव च ।
उद्वेष्टितेन हस्तेन त्रिकं तु परिवर्तयेत् ॥ १८१ ॥
उरोमण्डलकौ हस्तौ कटिच्छिन्नं तथैव च ।
अपविद्धोऽङ्गहारश्च विज्ञेयोऽयं प्रयोक्तृभिः ॥ १८२ ॥
करणं रं नूपुकृत्वा विक्षिप्ताल्यतके पुनः ।
पुनराक्षिप्तकं कुर्यादुरोमण्डलकं तथा ॥ १८३ ॥
नितम्बं करिहस्तं च कटिच्छिन्नं तथैव च ।
आक्षिप्तकः स विज्ञेयो ह्यङ्गहारः प्रयोक्तृभिः ॥ १८४ ॥
उद्वेष्टितापविद्धस्तु करः पादो निकुट्टितः ।
पुनस्तेनैव योगेन वामपार्श्वे भवेदथ ॥ १८५ ॥
उरोमण्डलकौ हस्तौ नितम्बं करिहस्तकम् ।
कर्तव्यं सकटिच्छिन्नं नृत्ते तद्घटिते सदा ॥ १८६ ॥
पर्यायाद्वेष्टितौ हस्तौ पादौ चैव निकुट्टितौ ।
कुञ्चितावञ्चितौ चैवं ह्यूरूद्वृत्तं तथैव च ॥ १८७ ॥
[ चतुरस्रं करं कृत्वा पादेन च निकुट्टकम् ।
भुजंगत्रासितं चैव करं चोद्वेष्टितं पुनः ॥ १८८ ॥ ]
परिच्छिन्नं च कर्तव्यं त्रिकं भ्रमरकेण तु ।
करिहस्तं कटिच्छिन्नं विष्कम्भः परिकीर्तितः ॥ १८९ ॥
दण्डपादं करं चैव विक्षिप्याक्षिप्य चैव हि ।
व्यंसितं वामहस्तं च सह पादेन सर्पयेत् ॥ १९० ॥
चतुरश्रं करं कृत्वा पादेन च निकुट्टकम् ।
भुजङ्गत्रासितं चैव करं चोद्वेष्टितं पुनः ॥ १९१ ॥

---

१. 'अपविद्धाङ्गहारस्तु विज्ञेयस्तत्प्रयोक्तृभिः ।' का. २. 'पुरा विक्षिप्तकं कुर्यात्' क-ख. ३. 'नितम्बः करिहस्तश्च' का. ४. 'आक्षिप्तकस्तु विज्ञेय.' का. ५. 'नितम्बः करिहस्तकः' का. ६. 'कर्तव्य. स कटिच्छेदो नृत्ते तद्घटिते बुधैः' का. ७. 'पर्यायोद्वेष्टितौ' का. ८. 'च जरद्वृत्तं' का. ९. 'चतुरश्रं' ग-का. १०. 'भुजङ्गत्रासकं' का. ११. 'दण्डपादस्थं' ग. १२. श्लोकोऽयं क-ख-का-पुस्तकेषु नास्ति.

निकुट्टकद्वयं कार्यमाक्षिप्तं [1]मण्डलोरसि ।
[2]करिहस्तं कटिच्छिन्नं [3]कर्तव्यमपराजिते ॥ १९२ ॥
कुट्टितं करणं कृत्वा भुजंगत्रासितं तथा ।
रेचितेन तु हस्तेन पताकं [4]हस्तमादिशेत् ॥ १९३ ॥
आक्षिप्तकं प्रयुञ्जीत [5]ह्युरोमण्डलकं तथा ।
[6]लताख्यं सकटिच्छिन्नं विष्कम्भापसृते भवेत् ॥ १९४ ॥
[7]त्रिकं सुवलितं कृत्वा नूपुरं करणं तथा ।
भुजंगत्रासितं सव्यं [8]तथा वैशाखरेचितम् ॥ १९५ ॥
आक्षिप्तकं ततः कृत्वा परिच्छिन्नं तथैव च ।
[ बाह्यभ्रमरकं कुर्यादुरोमण्डलमेव च ॥ १९६ ॥
[9]नितम्बं करिहस्तं च कटिच्छेदं तथैव च । ]
मत्ताक्रीडो भवेदेष [10]ह्यङ्गहारो [11]हरप्रियः ॥ १९७ ॥
रेचितं हस्तपादं [12]तु कृत्वा वृश्चिकमेव च ।
पुनस्तेनैव योगेन [13]वृश्चिकं संप्रयोजयेत् ॥ १९८ ॥
निकुट्टकं तथा चैव सव्यासव्य[14]कृतं क्रमात् ।
[15]लताख्यः सकटिच्छेदो भवेत्स्वस्तिकरेचिते ॥ १९९ ॥
[16]पार्श्वस्वस्तिकपादौ च [17]कार्यं त्वर्धनिकुट्टकम् ।
[18]द्वितीयस्य च पार्श्वस्य विधिः [19]स्यादयमेव हि ॥ २०० ॥

१. 'मण्डलोरसा' का. २. 'करिहस्त कटिच्छेद' का. ३. 'कर्तव्यस्त्वपराजिते' का. ४. 'पताकाहस्तमादिशेत्' का. ५. 'हि' इति का-पुस्तके नास्ति. ६. 'तालाख्यं सकटिच्छिन्नं' क-ख.; 'लताख्यं सकटिच्छेदं' का. ७. 'त्रिकं तु वलितं कृत्वा' का. ८. 'चरणं चैव रेचितम्' का.; 'वैशेषरेचितम्' (?) का. ९. 'नितम्ब' का. १०. 'हि' इति का-पुस्तके नास्ति. ११. 'भवेत् प्रियः' का. १२. 'च' का. १३. 'कृत्वा वृश्चिकमेव तु'(?) का. १४. 'कृतैः क्रमैः' का. १५. 'लताख्यं सकलच्छेदो भवेत्स्वस्वररेचिते' क-ख. १६. 'पार्श्वे तु स्वस्तिकं बुद्धा कार्यं त्वय निकुट्टकम्' का. १७. 'कार्यं त्वर्ध्ये' क.; 'कार्यं त्वयोनिकुट्टकम्' ख. १८. 'द्वितीयस्तु' का. १९. '(व्या)स्यादयमेव हि' क-ख.; 'स्यादेष एव हि' का.

ततश्च कर[1]मावर्त्य [2]ह्यूरुपृष्ठे निपातयेत् ।
ऊरूद्वृत्तं ततः कुर्यादाक्षिप्तं पुनरेव हि ॥ २०१ ॥
नितम्बं [3]करिहस्तं च कटिच्छिन्नं तथैव च ।
पार्श्वस्वस्तिक इत्येष ह्यङ्गहारः प्रकीर्तितः ॥ २०२ ॥
वृश्चिकं [4]करणं कृत्वा लताख्यं हस्तमेव च ।
तमेव च करं भूयो नासाग्रे [5]सन्निकुञ्चयेत् ॥ २०३ ॥
तमेवोद्वेष्टितं कृत्वा नितम्बं [6]परिवर्तयेत् ।
करिहस्तं कटिच्छिन्नं [7]वृश्चिकापसृते भवेत् ॥ २०४ ॥
कृत्वा नूपुरपादं तु तथाक्षिप्तकमेव च ।
[8]कटिच्छिन्नं [9]च कर्तव्यं [10]सूचीविद्धं तथैव च ॥ २०५ ॥
नितम्बं [11]करिहस्तं चाप्युरोमण्डलकं तथा ।
[12]कटिच्छिन्नं ततश्चैव भ्रमरः स तु संज्ञितः ॥ २०६ ॥
मतल्लिकरणं कृत्वा कर[13]मावर्त्य दक्षिणम् ।
कपोलस्य प्रदेशे तु [14]कार्यं सम्यङ्निकुञ्चितम् ॥ २०७ ॥
अपविद्धं [15]द्रुतं चैव [16]तलसस्फोटसंयुतम् ।
[17]करिहस्तं कटिच्छिन्नं मत्तस्खलितके भवेत् ॥ २०८ ॥
दोलैः करैः प्रचलितैः स्वस्तिकापसृतैः [18]पदैः ।
[19]अञ्चितैर्वलितैर्हस्तै[20]स्तलसंघट्टितैस्तथा ॥ २०९ ॥
निकुट्टितं [21]च कर्तव्यमूरूद्वृत्तं तथैव च ।
करिहस्तं कटिच्छिन्नं मदाद्विलसिते भवेत् ॥ २१० ॥

---

१. 'आहृत्य' का. २. 'हि' इति च-का-पुस्तकयोर्नास्ति. ३. 'नितम्ब' का. ४. 'चरणं' क-ख. ५. 'सन्निवेशयेत्' का. ६. 'अथ वर्तयेत्' का. ७. 'वृश्चिकापसृतं भवेत्' क.; 'वृश्चिकापसृते भवेत्' ख.; 'वृश्चिके सम्प्रयोजयेत्' क. ८. 'परिच्छिन्नं च' क-ख. ९. 'तु' का. १०. 'सूचीपाद' क-ख-का. ११. 'करिहस्तश्च उरो' का. १२. 'कटिच्छेदं' का. १३. 'आहृत्य' का. १४. 'कर्तव्यं च निकुञ्चितम्' च.; 'कर्तव्यं तु निकुञ्चितम्' का. १५. 'हतं चैव' क-ख.; 'तथा चैव' का. १६. 'तलसस्फोटितं तथा' का. १७. 'करिहस्त कटिच्छेदो' का. १८. 'परै.' क-ख. १९. 'अचितै' (?) क. ख. २०. 'तलसघट्टिते' क-ख.; 'तलसघट्टितै.' का. २१. 'प्रकर्तव्यं' क-ख.

ताभ्यां सूची तथा चैव त्रिकं तु परिवर्तयेत् ।
लताख्यं संकटिच्छिन्नं कुर्यादुद्वृत्तके सदा ॥ २३१ ॥
आलीढव्यंसितौ हस्तौ बाहुशीर्षे निकुट्टयेत् ।
नूपुरश्चरणो वामस्तथालातश्च दक्षिणः ॥ २३२ ॥
तेनैवाक्षिप्तकं कुर्यादुरोमण्डलकौ करौ ।
करिहस्तं कटिच्छिन्नमालीढे संप्रयोजयेत् ॥ २३३ ॥
हस्तं तु रेचितं कृत्वा पार्श्वमानम्य रेचयेत् ।
पुनस्तेनैव योगेन गात्रमानम्य रेचयेत् ॥ २३४ ॥
[ कार्यं नूपुरपादं च भुजङ्गत्रासितं तदा । ]
रेचितं करणं कार्यमुरोमण्डलमेव च ॥ २३५ ॥
कटिच्छिन्नं तु कर्तव्यमङ्गहारे च रेचयेत् ।
नूपुरं चरणं कृत्वा त्रिकं तु परिवर्तयेत् ॥ २३६ ॥
व्यंसितेन तु हस्तेन त्रिकमेव विवर्तयेत् ।
पादं चालातकं कृत्वा सूचीमत्रैव योजयेत् ॥ २३७ ॥
करिहस्तं कटिच्छिन्नं कुर्यादाच्छुरिते सदा ।
रेचितस्वस्तिकौ[15] पादौ रेचितस्वस्तिकौ[16] करौ ॥ २३८ ॥
कृत्वा विक्षेपमेवं तु तेनैव विधिना पुनः ।
पुनरुत्क्षेपणं चैव रेचितैरेव कारयेत् ॥ २३९ ॥
उद्वृत्ताक्षिप्तके चैव हुरोमण्डलमेव च ।
नितम्बकरिहस्तं च कटिच्छिन्नं तथैव च ॥ २४० ॥

---

१. 'सकटिच्छेदं' का. २. 'उद्वृत्तकैः' क-ख.; 'उद्वृतके' का. ३. 'आलीढं' क-ख. ४. 'कटिच्छेदं आलीढं' का. ५. 'उद्यम्य' का. ६. पद्यार्धमेतत् क-ख-पुस्तकयोर्नास्ति. ७. 'कुर्यात्' का. ८. 'कटिच्छेदस्तु कर्तव्यो ह्यङ्गहारे तु रेचिते' का. ९. 'करणं' का. १०. 'त्रिकं चैव निवर्तयेत्' का. ११. 'वामं' का. १२. 'सूचिते नैव' क-ख.; 'सूचीं तत्रैव योजयेत्' का. १३. 'कटिच्छेदं' का. १४. 'आच्छुरितं तथा' का. १५. 'रेचितौ' का. १६. 'रेचितौ' का. १७. 'रेचितैरिव' क-ख. १८. 'उद्वृत्ताक्षिप्तकेनैव' क-ख.; 'उद्वृत्ताक्षिप्तकं चैव' का. १९. 'हि' इति नास्ति क-ख-पुस्तकयोः. २०. 'नितम्बकरिहस्तं च' क-ख.

[1]आक्षिप्तरेचितो ह्येष करणानां विधिः स्मृतः ।
[2]विक्षिप्तकरणं कृत्वा हस्तपादमुखानुगम् ॥ २४१ ॥
[3]वामसूचीसहकृतं विक्षिपेद्वामकं करम् ।
[4]वक्षःस्थाने भवेत्सव्यो वलितं त्रिकमेव च ॥ २४२ ॥
नूपुराक्षिप्तके चैव [5]ह्यूर्ध्वस्वस्तिकमेव च ।
नितम्बं करिहस्तं च [6]ह्युरोमण्डलकं तथा ॥ २४३ ॥
[7]कटिच्छिन्नं च कर्तव्यं संभ्रान्ते नृत्तयोक्तृभिः ।
[9]अपक्रान्तक्रमं कृत्वा व्यसितं हस्तमेव च ॥ २४४ ॥
कुर्यादुद्वेष्टितं चैव [10]ह्य[11]र्ध्वसूची तथैव च ।
[12]विक्षिप्तं सैकटिच्छि[13]न्नमुद्वृत्ताक्षिप्तके तथा ॥ २४५ ॥
करिहस्तं कटिच्छिन्नं कर्तव्य[14]मपसर्पिते ।
कृत्वा नूपुरपाद च द्रुतमाक्षिप्य च क्रमम् ॥ २४६ ॥
पादस्य चानुगौ [15]पादौ त्रिकं तु परिवर्तयेत् ।
निकुट्य करपादं चाप्युरोमण्डलकं पुनः ॥ २४७ ॥
[16]करिहस्तं कटिच्छिन्न कार्यमर्धनिकुट्टके ।
द्वात्रिंशदेते सम्प्रोक्ता ह्य[17]ङ्गहारा द्विजोत्तमाः ॥ २४८ ॥
चतुरो रेचकांश्चापि [18]गदतो मे निबोधत ।
पादरेचक एकः स्याद्द्वितीयः कटिरेचकः ॥ २४९ ॥
[[19]क[20]ररेचकस्तृतीयस्तु चतुर्थः कण्ठरेचकः ।
रेचिताख्याः पृथग्भावे वलने चाभिधीयते ॥ २५० ॥

१. 'आक्षिप्तरेचकश्चैष (?)' का. २. 'विक्षिप्तं' का. ३. 'वामसूचीकरं कृत्वा' का. ४. 'वक्षःस्थं च' का. ५. 'हि' इति नास्ति क-ख-पुस्तकयोः. ६. 'हि' इति नास्ति क-ख-पुस्तकयोः; 'स्यादुरोमण्डलं तथा' का. ७. 'कटिच्छेदश्च कर्तव्य' क-ख. ८. 'नृत्तयेत्क्वी' (?) क-ख.; 'उद्वृत्ताक्षिप्तकं चैव' का. ९. 'अपक्रान्तं' क-ख. १०. 'हि' इति नास्ति का-पुस्तके. ११. 'ऊर्ध्वसूची' क-ख. १२. 'विक्षिप्त' क-ख. १३. 'सकटिच्छेदम्' का. १४. 'उपसर्पिते' क-ख का. १५. 'हस्तौ' क-ख का. १६. 'करिहस्तः कटिच्छेदः कार्यस्त्वर्धनिकुट्टके'. १७. 'तु' का. १८. 'एव' का. १९. इतः प्रभृति सार्धश्लोकषट्कं क-ख-पुस्तकयोर्नास्ति पुस्तकद्वयेऽपि त्रुटिचिह्नं नास्ति. २०. 'कररेचः' का.

उद्वाहनात् पृथग्भावाच्चलनाच्चापि रेचक ।
पार्श्वात् पार्श्वे तु गमन स्खलितैश्चलितै पदैः ॥ २५१ ॥
[2]विविधैश्चेव पापस्य पादरेचक उच्यते ।
त्रिकस्योद्वर्तन चैव कटीवलनमेव च ॥ २५२ ॥
तथापि सर्पण चैव कटीरेचक उच्यते ।
उद्वर्तन परिक्षेपो विक्षेप परिवर्तनम् ॥ २५३ ॥
विसर्पण च हस्तस्य हस्तरेचक उच्यते ।
उद्वाहन सन्नमन तथा पार्श्वं च सन्नति ॥ २५४ ॥
भ्रमण चापि विज्ञेयो ग्रीवाया रेचको बुधै ।
रेचकैरङ्गहारैश्च नृत्यन्त वीक्ष्य शङ्करम् ॥ २५५ ॥
सुकुमारप्रयोगेण नृत्यन्ती चैव पार्वतीम् ।
मृदङ्गभेरीपटहैर्झर्झाडिण्डिमगोमुखे ॥ २५६ ॥
पणवैर्दर्दुरैश्चेव सर्वातोद्यै प्रमोदितै ।
दक्षयज्ञे विनिहते सध्याकाले महेश्वर ॥ २५७ ॥
नानाङ्गहारै प्रानृत्यल्लँयतालवशानुगैम् ।
[13]पिण्डीबन्धास्ततो दृष्ट्वा नन्दिभद्रमुखा गणा ॥ २५८ ॥
चक्रुस्ते नाम पिण्डीना बन्धमासा सलक्षणम् ।
ईश्वरस्येश्वरी पिण्डी नन्दिनश्चापि पट्टसी ॥ २५९ ॥
चण्डिकाया भवेत्पिण्डी तथा वै सिंहवाहिनी ।
तार्क्ष्यपिण्डी भवेद्विष्णो पद्मपिण्डी स्वयमुव ॥ २६० ॥

---

१ 'वलनात्' २ 'विविधश्चैव' का ३ 'चलन' का ४ 'उद्वर्तन' का ५ 'विक्षेपपरिवर्तनम्' का ६ 'पार्श्वस्य' का. ७ 'ट्यति स च पार्वती' का. ८. 'उडा' क, 'लञ्चा' ख, 'भाण्ड' का. ९ 'दर्दुराद्यैश्च' १० 'नानातोद्यै' का ११ 'ननत' क ख. १२ 'यै' का १३ 'डिण्डिमभ्रान्तितो' का १४ 'नन्दी' क-ख-का १५ 'नावानि' का १६ 'व धाश्चैव सल्क्षणान्' का. १७ 'ऐश्वरी वृषपिण्डी च' का १८ 'या वृधी' क ख, 'पादपी' का. १९ 'तथैव' क ख.

शक्रस्यैरावती पिण्डी झषा स्यान्मन्मथस्य तु ।
शिखिपिण्डी कुमारस्य रूपपिण्डी भवेच्छ्रियः ॥ २६१ ॥
धारापिण्डी च जाह्नव्याः पाशपिण्डी यमस्य च ।
वारुणी च नदीपिण्डी यांक्षी स्याद्धनदस्य तु ॥ २६२ ॥
हलपिण्डी बलस्यापि सर्पपिण्डी तु भोगिनाम् ।
गाणेश्वरी महापिण्डी दक्षयज्ञविमर्दिनी ॥ २६३ ॥
त्रिशूलाकृतिसंस्थाना रौद्री स्यादन्धकद्विषः ।
एवमन्यास्वपि तथा देवतासु यथाक्रमम् ॥ २६४ ॥
ध्वजभूताः प्रयोक्तव्याः पिण्डीबन्धाः सुविहिताः ।
रेचका अङ्गहाराश्च पिण्डीबन्धास्तथैव च ॥ २६५ ॥
सृष्ट्वा भगवता दत्तास्तण्डवे मुनये तदा ।
तेनापि हि ततः सम्यग् गानभाण्डसमन्वितः ।
नृत्तप्रयोगः सृष्टो यः स ताण्डव इति स्मृतः ॥ २६६ ॥

ऋषय ऊचु ।

यदा प्राप्त्यर्थमर्थानां तज्ज्ञैरभिनयः स्मृतः ।
कस्मान्नृत्तं कृतं ह्येतत्कं स्वभावमपेक्षते ॥ २६७ ॥
न गीतकार्थसंबद्धं न चाप्यर्थस्य भावकम् ।
कस्मान्नृत्तं कृतं ह्येतद्गीतेष्वासारितेषु च ॥ २६८ ॥

भरत उवाच ।

अत्रोच्यते न खल्वर्थं कंचिन्नृत्तमपेक्षते ।

---

१. 'ऊरुपिण्डी तु मान्मथी' का. २. 'ऊरुपिण्डी' क-ख. ३. 'तु' का. ४. 'यक्षा' क-ख. ५. 'च' का. ६. 'अथ' का. ७. 'च' क-ख. ८. 'गणेश्वरी' क-ख. ९. 'अन्तकद्विपः' का. १०. 'ध्वजभूता' इत्यादि पद्यं घ-पुस्तके नास्ति. ११. 'रेचिताः' का. १२. 'दत्ता ताण्डवे' क-ख.; 'दत्तास्ताण्डिने' का. १३. 'तथा' क-ख-का. १४. 'ताण्डिना' का. १५. 'गाकड (?)' क-ख. १६. 'नृत्तप्रयोग.' का. १७. 'ससृष्टो यस्ताण्डवमिति स्मृत' क-ख. १८. 'कस्मात्' क-ख. १९. 'नृत्ते कृते' का. २०. 'तत्' का. २१. 'सबन्धो' का. २२. 'वाच्यार्थस्य' का. २३. क-ख-घ-पुस्तकेषु नास्ति. २४. 'स्थानके' क. २५. 'नृत्तं कंचित्' का.

किंतु शोभां जनयतीत्यतो नृत्तं प्रवर्तितम् ॥ २६९ ॥
प्रायेण सर्वलोकस्य नृत्तमिष्टं स्वभावतः ।
मङ्गल्यमिति कृत्वा च नृत्तमेतत्प्रकीर्तितम् ॥ २७० ॥
विवाहप्रसवावाहप्रमोदाभ्युदयादिषु ।
विनोदकारणं चेति नृत्तमेतत्प्रवर्तितम् ॥ २७१ ॥
अतश्चैव प्रतिक्षेपाद्भूतसंघैः प्रवर्तिताः ।
ये गीतकादौ युज्यन्ते सम्यङ्नृत्तविभागकाः ॥ २७२ ॥
देवेन चापि संप्रोक्तस्तण्डुस्ताण्डवपूर्वकम् ।
गीतप्रयोगमाश्रित्य नृत्तमेतत्प्रवर्त्यताम् ॥ २७३ ॥
प्रायेण ताण्डवविधिर्देवस्तुत्याश्रयो भवेत् ।
सुकुमारप्रयोगश्च शृङ्गाररससंभवः ॥ २७४ ॥
तस्य तण्डुप्रयुक्तस्य ताण्डवस्य विधिक्रिया ।
वर्धमानकमासाद्य संप्रवक्ष्यामि लक्षणम् ॥ २७५ ॥
कलानां वृद्धिमासाद्य ह्यक्षराणां च वर्धनात् ।
वर्धनान्नर्तकीनां च वर्धमानकमुच्यते ॥ २७६ ॥
कृत्वा कुतपविन्यासं यथावद्द्विजसत्तमाः ।
आसारितप्रयोगस्तु ततः कार्यः प्रयोक्तृभिः ॥ २७७ ॥
तत्र तूपोहनं कृत्वा तन्त्रीगानसमन्वितम् ।
कार्यः प्रवेशो नर्तक्या भाण्डवाद्यसमन्वितः ॥ २७८ ॥
विशुद्धकरणायां तु जात्यां वाद्यं प्रयोजयेत् ।

---

१. 'जनयतामिति' क-ख. २. 'नृत्तमिदं स्मृतम्' का. ३. 'करणं' क ख. ४. 'चैव' खा. ५. 'प्रतिक्षेपा-' का. ६. 'पूज्जासङ्घैः' क-ख. ७. प्रकीर्तिता ' का. ८. 'वापि' का. ९. 'ताण्ड्यस्ताण्डवपूर्वक-' का. १०. 'नृत्तमेतत्' क-ख-का. ११. 'प्रनृत्यताम्' का. १२. 'सर्वोऽपि' क-ख. १३. 'सुलालयो (?)' क-ख. १४. 'तु' का. १५. 'ताण्ड्य' का. १६. 'मासोय' (?) क-ख. १७. 'तु' का. १८. 'ह्स्वस्य वर्धना-च्चापि' का. १९. 'आसारितैः' का. २०. 'स्पोहनं' क-ख.; 'चोपोहनं' का. २१. 'भाण्ड' का. २२. 'नर्तव्यस्ताण्ड' (?) क-ख. २३. 'यासावाय' (?) क-ख.

गैत्या वाद्यानुसारिण्या तस्याश्चारीं प्रयोजयेत् ॥ २७९ ॥
वैशाखस्थानकेनेह सर्वरेचकचारिणी ।
पुष्पाञ्जलिधरा भूत्वा प्रविशेद्रङ्गमण्डपम् ॥ २८० ॥
पुष्पाञ्जलिं विसृज्याथ रङ्गपीठं परीत्य च ।
प्रणम्य देवताभ्यश्च ततोऽभिनयमाचरेत् ॥ २८१ ॥
यत्राभिनेयं गीतं स्यात्तत्र वाद्यं न योजयेत् ।
अङ्गहारप्रयोगे तु भाण्डवाद्यं विधीयते ॥ २८२ ॥
समं रक्तं विभक्तं च स्फुटं शुद्धप्रहारजम् ।
नृत्ताङ्गग्राहिर्वाद्यैर्वाद्यं योज्यं तु ताण्डवे ॥ २८३ ॥
प्रयुज्य गीतवाद्ये तु निष्क्रामेन्नर्तकी ततः ।
अनेनैव विधानेन प्रविशन्त्यपराः पृथक् ॥ २८४ ॥
अन्याश्चानुक्रमेणाथ पिण्डीं बध्नन्ति याः स्त्रियः ।
तावत्पर्यस्तकः कार्यो यावत्पिण्डी न बध्यते ॥ २८५ ॥
पिण्डीं बद्ध्वा ततः सर्वा निष्क्रामेयुः स्त्रियस्तु ताः ।
पिण्डीबन्धेषु वाद्यं तु कर्तव्यमिह वादकैः ॥ २८६ ॥
पर्यस्तकप्रमाणेन चित्रौपकरणान्वितम् ।
तत्रैवोपोहनं भूयः कार्यं पूर्ववदेव हि ॥ २८७ ॥
ततश्चासारितं भूयो गायनस्तु प्रयोजयेत् ।
पूर्वेणैव विधानेन प्रविशेच्चापि नर्तकी ॥ २८८ ॥
गीतकार्थं त्वभिनयेद्द्वितीयासारितस्य तु ।

---

१. 'गीत्या वाद्यानुसर्पिण्या तत-' का. २. 'सारिण्याः' क ख. ३. 'तालकेन' का. ४. 'सर्वे' क-ख. ५. 'तु' का. ६. 'अत्र' क-ख. ७. 'अभिनेयगीतं' का. ८. 'ताण्डवाद्यं' क-ख. ९. 'प्रयोजयेत्' का. १०. 'स्फुटयुद्धप्रहारजम्' क-ख. ११. '°कायजैः' क-ख. १२. 'गीतमेवं तु' का. १३. 'पुन' का. १४. 'चानुग्रहेणैव' क-ख. १५. 'ता.' का. १६. 'पर्यस्तत' का. १७. 'प्रयुज्यते' का. १८. 'पिण्डीबद्धा.' क-ख. १९. 'पिण्डीपट्टेषु' क-ख-का. २०. 'हि' क-ख का. २१. 'अथोपवहनम्' का.; 'तत्रोपवहनं' ख. २२. 'गायन तु' का. २३. 'गीतकार्थं' क-ख.; 'गीतकार्यंप्रयोगश्च' का.

तदेव च पुनर्वस्तु भूयो नृत्तेन दर्शयेत् ॥ २८९ ॥
आसारिते समाप्ते तु निष्क्रामेन्नर्तकी ततः।
पूर्ववत्प्रविशन्त्यन्याः प्रयोगः स्यात्स एव हि ॥ २९० ॥
एवं पदे पदे कार्यो विधिरासारितस्य तु।
भाण्डवाद्ये कृते चैव तथा गानकृतेऽपि च ॥ २९१ ॥
एकं तु प्रथमं युञ्ज्याद्द्वे द्वितीये तथैव च।
तिस्रो वस्तु तृतीयं तु चतस्रस्तु चतुर्थकम् ॥ २९२ ॥
पिण्डीनां विषयश्चैव चत्वारः संप्रकीर्तिताः।
पिण्डी शृङ्खलिका चैव लताबन्धोऽथ भेद्यकः ॥ २९३ ॥
पिण्डीबन्धस्तु पिण्डत्वाद्गुल्मः शृङ्खलिका भवेत्।
जालोपनद्धा च लता सनृत्तो भेद्यकः स्मृतः ॥ २९४ ॥
पिण्डीबन्धः कनिष्ठे तु शृङ्खला तु लयोन्तरे।
मध्यमे च लताबन्धो ज्येष्ठे चैवाथ भेद्यकः ॥ २९५ ॥
पिण्डीनां विविधा योनिर्यन्त्रं भद्रासनं तथा।
शिक्षायोगस्तथा चैव प्रयोक्तव्यः प्रयोक्तृभिः ॥ २९६ ॥
एवं प्रयोगः कर्तव्यो वर्धमाने तपोधनाः।
गीतानां छन्दकानां च भूयो वक्ष्याम्यहं विधिम् ॥ २९७ ॥
यानि वस्तूनि मुनयः सन्ति चाङ्गकृतानि तु।
गीतानि तेषां वक्ष्यामि प्रयोगं नृत्तवाद्ययोः ॥ २९८ ॥
तत्रावतरणं कार्यं नर्तक्याः सर्वभाण्डिकम्।

---

१. 'तु' का. २. 'नाट्येनाभिप्रदर्शयेत्' क-ख.; 'वृत्तेनापि प्रयोजयेत्' का. ३. 'आसारितैः समाप्ते सु (तु?)' क-ख.; 'आसारितसमाप्तौ च' का. ४. 'प्रविशेचान्या' का. ५. 'तु' का. ६. 'ताण्डवाद्ये' क-ख.; 'भाण्डवाद्यकृतश्चैव' का. ७. 'गानकृतोऽपि च' का. ८. 'एका तु' क-ख.; 'एका तु' का. ९. 'युज्यात्' क-ख.; 'कुर्यात्' का. १०. 'तु वस्तुकम्' का. ११. 'शृङ्खलिता' का. १२. '°शृङ्खलिको' ख. १३. 'तालोपनद्धा प्रलता' ख. 'तालोपनद्धाथ लता' का. १४. 'भेदक' का. १५. 'द्विविधो' का. १६. 'यत्रं' का. १७. 'शिक्षा कार्या' का. १८. 'प्रयोक्तव्याः' का. १९. 'प्रयोक्तृभि' का. २०. 'विधे' क-ख. २१. 'यद्वानि यानि' का. २२. 'यत्रा' का. २३. 'नर्तक्या' का. २४. 'सार्वभाण्डिकम्' का.

[1]क्षेपप्रतिक्षेपकृतं तन्त्रीगो[2]नसमन्वितम् ॥ २९९ ॥
प्रथमं त्वभिनेयं स्या[3]द्गीतके सर्ववस्तुकम् ।
तदेव च पुनर्वस्तु नृत्तेनापि प्रदर्शयेत् ॥ ३०० ॥
यो विधिः पूर्वमुक्तस्तु नृ[4]त्ताभिनयवादिते ।
आसारितविधौ स स्याद्गीतानां व[5]स्तुकेष्वपि ॥ ३०१ ॥
ए[6]वं वस्तुनिबद्धानां गीतानां च विधिः स्मृतः ।
शृणुताङ्गनिबद्धानां गीतानामपि लक्षणम् ॥ ३०२ ॥
य एव व[7]स्तुषु विधिर्नृत्ताभिनयवादिते ।
त[8]मेवाङ्गनिबद्धेषु च्छन्दकेष्वपि योजयत् ॥ ३०३ ॥
वाद्यं गुर्वक्षरकृतं तथाल्पाक्षरमेव च ।
मु[9]खे सोपोहने कुर्याद्वर्णानां विप्र[10]कर्षतः ॥ ३०४ ॥
यदा गीतवशादङ्गं भूयो भूयो निवर्तते ।
तत्राद्यमभिनेयं स्याच्छेषं नृत्तेन योजयेत्[11] ॥ ३०५ ॥
त्रिपाणिलयसंयुक्तं तत्र वाद्यं प्रयोजयेत् ।
यथा लयस्तथा वाद्यं क[12]र्तव्यमिव वादकैः ॥ ३०६ ॥
[13]एवमेष विधिः कार्यो गीतेष्वासारिते[14]ष्वपि ।

---

१. 'छेदप्रतिक्षेप' का. २. '°गण' क-ख. ३. 'स्याद्गीताक (तके?) कर्मवस्तुकम्' क-ख.; 'तु गीतके सर्ववस्तु तत्' का. ४. 'वृत्ताभिनय-' का. का-पुस्तके 'नित्यं नृत्ताभिनयवादिते' इत्यस्य स्थाने 'नृत्यनित्याभिनयवादिते' इति पाठभेदः । ५. 'वास्तुकेष्वपि' क-ख; 'वस्तु तेष्वपि' का. ६. 'एष वस्तुनिबन्धाना गीतकाना' का. ७. 'वस्तुकविधिः' का. ८. 'ताम्' (?) क-ख.; 'स सर्व एव कर्तव्यश्छन्दकेषु प्रयोक्तृभिः' का. ९. 'मुरे सापोहने' क-ख. 'मुखे सोपोहने' का. १०. 'विप्रकर्षक-' का. ११. 'यदा गीतवशादङ्गं भूयो भूयो निवर्तयेत्' इति 'का. पुस्तकेऽधिकोऽत्र पाठः. १२. 'कर्तव्यं लङ्गसंश्रयम्' का. १३. अत्र ब-पुस्तके प्रक्षिप्तत्वेन, का. पुस्तके च मूलत्वेन सार्धश्लोकत्रयमधिकं वर्तते— 'तत्त्वं चानुगतं चापि ओघं च करणान्वितम् । स्थिरे तत्त्वं प्रयोक्तव्यं मध्ये चानुगतं भवेत् ॥ भूयश्चोघः प्रयोक्तव्यस्त्वेष वाद्यगतो विधिः । छन्दोगीतकमासाद्य लङ्गानि परिवर्तयेत् ॥ एष कार्यो विधिर्नित्यं नृत्ताभिनयवादिते । यानि वस्तुनिबद्धानि तेषामन्ते ग्रहो भवेत् ॥ अङ्गानां तु परावृत्तावादावेव ग्रहो मतः ।' इति.
१४. '°षु च' का.

देवस्तुत्याश्रयं ह्येतत्सुकुमारं निबोधत ॥ ३०७ ॥
स्त्रीपुंसयोस्तु संलापो[1] यस्तु कामसमुद्भवः ।
तज्ज्ञेयं सुकुमारं[2] हि शृङ्गाररससंभवम् ॥ ३०८ ॥
यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः ।
तत्सर्वं[3] संप्रवक्ष्यामि तच्च मे शृणुत द्विजाः ॥ ३०९ ॥
अङ्गवस्तुनिवृत्तौ तु[4] यथा वर्णनिवृत्तिषु ।
तथा चाभ्युदयस्थाने नृत्तं तज्ज्ञः प्रयोजयेत् ॥ ३१० ॥
यत्तु[5] संदृश्यते किंचिद्दंपत्योर्मदनाश्रयम् ।
नृत्तं[6] तत्र प्रयोक्तव्यं महर्षार्थ[7]गुणोद्भवम् ॥ ३११ ॥
यत्र संनिहिते कान्ते ऋतुकालाभिदर्शनम्[8] ।
गीतकार्याभिसंबद्धं[9] नृत्तं तत्रापि चेष्यते ॥ ३१२ ॥
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ।
यस्मिन्नङ्गे[10] तु युवतिर्न नृत्तं तत्र योजयेत् ॥ ३१३ ॥
सखीप्रवृत्ते[11] संलापे तथासंनिहिते प्रिये ।
नहि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितः प्रियः ॥ ३१४ ॥
[ दूत्याश्रयं[12] यदा तु स्यादृतुकालादिदर्शनम् ।
औत्सुक्यचिन्तासंबन्धं न[13] नृत्तं तत्र योजयेत् ॥ ३१५ ॥ ]
यस्मिन्नङ्गे प्रसादं तु गृह्णीयान्नायिका क्रमात् ।
ततः प्रभृति नृत्तं तु शेषेष्व[14]ङ्गेषु योजयेत् ॥ ३१६ ॥
देवस्तुत्याश्रयकृतं[15] यदङ्गं तु भवेद[16]थ ।
माहेश्वरैरङ्गहारैरुद्धतै[17]स्तत्प्रयोजयेत् ॥ ३१७ ॥
यत्तु[18] शृङ्गारसंबद्धं गानं स्त्रीपुरुषाश्रयम् ।

१. 'सलापे' क-ख. २. 'सकृतारम्भि' का. ३. 'सर्वगीतकसंबन्धं' का. ४. 'च' का. ५. 'वस्तु' क-ख.; 'यत्र' का. ६. 'तत्र' वृत्तं का. ७. 'पुरुषार्थे' क-ख. ८. '°दिदर्शनम्' का. ९. 'सबन्ध' का. १०. 'अङ्गेषु' क-ख. ११. 'सखीप्रवृत्तसंलापे' क-ख.; 'सप्रवृत्तेऽथ सल्पवे' का. १२. पद्यमेतत् क-ख पुस्तकयोर्नास्ति. १३. 'वृत्तं तत्र प्रयोजयेत्' का. १४. 'शेषेऽप्यर्थेषु' क-ख. १५. '°यतं' का. १६. 'भवेदिह' का. १७. 'उद्यतैः' क-ख. १८. 'यत्र शृङ्गारसंबन्धं' का.

[1]देवीकृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत् ॥ ३१८ ॥
चतुष्पदा [2]नर्कुटके खञ्जके [3]परिगीतके ।
विधानं संप्रवक्ष्यामि [4]भाण्डनृत्तविधिं प्रति ॥ ३१९ ॥
[5]खञ्जनर्कुटसंयुक्ता भवेद्या तु चतुष्पदा ।
पादान्ते संनिपाते तु तस्या भाण्डग्रहो [6]भवेत् ॥ ३२० ॥
या ध्रुवा छन्दसा युक्ता समपादा समाक्षरा ।
तस्याः पादावसाने तु प्रदेशिन्या ग्रहो भवेत् ॥ ३२१ ॥
कृत्वैकं [7]परिवर्तं तु [8]गानस्याभिनयस्य च ।
पुनः [9]पादनिवृत्तिं तु [10]भाण्डवाद्यैर्नियोजयेत् ॥ ३२२ ॥
अङ्गवस्तुनिवृत्तौ [11]तु वर्णान्तरनिवृत्तिषु ।
[12]तथोपस्थापने चैव भाण्डवाद्यं प्रयोजयेत् ॥ ३२३ ॥
येऽपि चान्तरमार्गा[13]स्तु [14]तन्त्रीवाद्यकरणे कृताः ।
तेषु सूची प्रयोक्तव्या भाण्डेन सह ताण्डवे ॥ ३२४ ॥
महेश्वरस्य चरितं य इदं संप्रयोजयेत् ।
सर्वपापविशुद्धात्मा शिवलोकं स गच्छति ॥ ३२५ ॥
एवमेष विधिः सृष्टस्ताण्डवस्य [15]प्रयोक्तृभिः ।
भूयः किं कथ्यतामन्य[16]न्नाट्यवेदविधिं प्रति ॥ ३२६ ॥

इति [17]श्रीभारतीये नाट्यशास्त्रे ताण्डवलक्षणं नाम चतुर्थोऽध्याय ।

---

१. 'देवं कृते' का. २. 'नकुटके' क-ख का. ३. 'परिगतके' क-ख.; 'परिधानके' का. ४ 'भाण्डलास' क-ख. ५. 'खानंकुटसयुक्ता' (?) क-ख-का. ६. 'भवे' क-ख. ७. 'परिवृत्तं' क ख. ८. 'नागस्याभिनयस्य च' क-ख.; 'गानस्याभिनये पुन' का. ९. 'पादनिवृत्तौ तु' का. १०. 'भाण्डवाद्यं' का. ११. 'निवृत्तेन' का. १२. 'तनोऽपस्थापने' का. १३. 'स्तु.' का. १४. 'तन्त्री वाद्यकरणे कृता.' क-ख. 'तद्वया वा करणे. कृता' का. १५. 'प्रयोगत.' का. १६. 'नाट्ययोगविधि' का. १७. 'श्री' इति का पुस्तके नास्ति.

पञ्चमोऽध्यायः।

भरतस्य वचः श्रुत्वा नाट्यसंतानकारणम्।
पुनरेवाब्रुवन्वाक्यमृषयो हृष्टमानसाः॥ १॥
यथा नाट्यस्य जन्मेदं जर्जरस्य च संभवः।
विघ्नानां शमनं चैव देवतानां च पूजनम्॥ २॥
तदस्माभिः श्रुतं सर्वं गृहीत्वा चावधारितम्।
निखिलेन यथातत्त्वमिच्छामो वेदितुं पुनः॥ ३॥
पूर्वरङ्गं महातेजः सर्वलक्षणसंयुतम्।
यथा बुध्यामहे ब्रह्मंस्तथा व्याख्यातुमर्हसि॥ ४॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः।
प्रत्युवाच पुनर्वाक्यं पूर्वरङ्गविधिं प्रति॥ ५॥
पूर्वरङ्गं महाभागा गदतो मे निबोधत।
पादभागाः कलाश्चैव परिवर्तास्तथैव च॥ ६॥
यस्माद्रङ्गप्रयोगोऽयं पूर्वमेव प्रयुज्यते।
तस्मादयं पूर्वरङ्गो विज्ञेयो द्विजसत्तमाः॥ ७॥
अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा॥ ८॥
प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च।
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना॥ ९॥
संघोटना ततः कार्या मार्गासारितमेव च।
ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च॥ १०॥
एतानि तु बहिर्गीतान्यन्तर्यवनिकागतैः।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च॥ ११॥

---

१. 'वै जन्म' का. २. 'स्ततः श्रुतं गृहीतं च' का. ३. 'वदतो' क-ख. ४. 'प्रयोज्यते' का. ५. 'ऽत्र द्विजोत्तमाः' का. ६. 'परिवन्दना' क-ख. ७. 'संस्रोदना' क ख. ८. 'मार्गसारित एव च' क-ख.; 'मार्गोत्सारितमेव च' का. ९. 'ज्येष्ठमध्यकनिष्ठा च' का. १०. 'तथैवासारितक्रिया' का. ११. 'च' का. १२. 'जवनिका' क-ख.

ततः सर्वैस्तु कुतपैः संयुक्तानीह कारयेत् ।
विघट्य वै यवनिकां नृत्तपाठ्यकृतानि तु ॥ १२ ॥
गीतानां मद्रकादीनां योज्यमेकं तु गीतकम् ।
वर्धमानमथापीह ताण्डवं यत्र युज्यते ॥ १३ ॥
ततश्चोत्थापनं कार्यं परिवर्तनमेव च ।
नान्दी शुष्कावकृष्टा च रङ्गद्वारं तथैव च ॥ १४ ॥
चारी चैव ततः कार्या महाचारी तथैव च ।
त्रिकं प्ररोचना चापि पूर्वरङ्गे भवन्ति हि ॥ १५ ॥
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ द्विजाः ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ १६ ॥
कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः ।
तथावतरणं प्रोक्तं गायकानां निवेशनम् ॥ १७ ॥
परिगीतक्रियारम्भ आरम्भ इति कीर्तितः ।
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः ॥ १८ ॥
वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ।
तन्त्र्योर्धःकरणार्थं तु भवेच्च परिघट्टना ॥ १९ ॥
तथा पाणिविभागार्थं भवेत्संघोटनाविधिः ।
तन्त्रीभाण्डसमायोगान्मार्गासारितमिष्यते ॥ २० ॥
कालमात्रविभागार्थं भवेदासारितक्रिया ।
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा ॥ २१ ॥

अतःपरं प्रवक्ष्यामि ह्युत्थापनविधिक्रियाम् ।
यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः ।
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतम् ॥ २२ ॥
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ।
वन्दनानि प्रकुर्वन्ति तस्माच्च परिवर्तनम् ॥ २३ ॥
आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥ २४ ॥

नान्दीपादानामन्तरेषु चित्रे पूर्वरङ्गे वर्धमानं प्रयोज्यं प्रागुक्तलक्षणम् । अन्ये तु गीतकप्रयोगादनन्तरं शुद्धे चित्रे पूर्वरङ्गे वर्धमानप्रयोगमिच्छन्ति ।

अत्र शुष्काक्षरैरेव ह्यवकृष्टा ध्रुवा यतः ।
तस्माच्छुष्कावकृष्टेयं जर्जरश्लोकदर्शिका ॥ २६ ॥
यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥ २७ ॥
शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ।
रौद्रप्रचारणाच्चापि महाचारीति कीर्तिता ॥ २८ ॥
विदूषकः सूत्रधारस्तथा वै पारिपार्श्वकः ।
यत्र कुर्वन्ति संजल्पं तच्चापि त्रिगतं मतम् ॥ २९ ॥
उपक्षेपेण काव्यस्य हेतुयुक्तिसमाश्रया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥ ३० ॥
अतः परं प्रवक्ष्यामि ह्याश्रावणविधिक्रियाम् ।
बहिर्गीतविधौ सम्यगुत्पत्तिं कारणं तथा ॥ ३१ ॥

---

१. 'च' का. २. '°क्रिया' क-ख. ३. 'अत्र' क-ख. ४. 'तु' का. ५. 'प्रवर्तते' का. ६. एष गद्यभाग. का-पुस्तके नास्ति. ७. 'वर्तमानं' क-ख. ८. 'यत्र' का. ९. 'शुष्काक्षरैरेव' क-ख. १०. 'कृष्टेव' का. ११. 'दर्शका' क-ख.; '°दर्शिका' का. १२. 'तत्रापि' क-ख-का. १३. 'स्मृतम्' का. १४. 'व्युपक्रिया' क-ख. १५. 'हि' इति नास्ति क-ख-पुस्तकयोः. १६. 'विधो' क.; '°विधि.' ख. १७. 'करणं' का.

चित्रदक्षिणवृत्ते तु सप्तरूपे प्रकीर्तिता।
सोपोहने सनिर्गीते देवस्तुत्यभिनन्दिते ॥ ३२ ॥
नारदाद्यैस्तु गन्धर्वैः सभायां देवदानवाः।
निर्गीतं श्राविताः सम्यग्लयतालसमन्वितम् ॥ ३३ ॥
तच्छ्रुत्वा तु सुखं गानं देवस्तुत्यभिनन्दितम्।
अभवन्क्षुभिताः सर्वे मात्सर्याद्दैत्यराक्षसाः ॥ ३४ ॥
संप्रधार्य च तेऽन्योन्यमित्यवोचन्नवस्थिताः।
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम् ॥ ३५ ॥
सप्तरूपेण संतुष्टा देवाः कर्मानुकीर्तनात्।
वयं गृह्णीम निर्गीतं तुष्यामोऽत्रैव सर्वदा ॥ ३६ ॥
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः।
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम् ॥ ३७ ॥
एते तुष्यन्ति निर्गीते दानवाः सह राक्षसैः।
प्रणश्यतु प्रयोगोऽयं कथं वा मन्यते भवान् ॥ ३८ ॥
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत्।
धातुवाद्याश्रयकृतं निर्गीतं मा प्रणश्यतु ॥ ३९ ॥
किं तूपोहनसंयुक्तं धातुवाद्यविभूषितम्।
भविष्यतीदं निर्गीतं सप्तरूपे विधानतः ॥ ४० ॥
निर्गीतेनावनद्धाश्च दैत्यदानवराक्षसाः।
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः ॥ ४१ ॥
एवं निर्गीतमेतत्तु दैत्यानां स्पर्धया द्विजाः।
देवानां बहुमानेन बहिर्गीतमिति स्मृतम् ॥ ४२ ॥

---

१. 'चित्रदक्षिणव्यक्ते' क-ख.; 'चित्रदक्षिणवृत्तौ'. २. 'प्रवर्तिते' का. ३. 'सनिगीत' (?) क-ख. ४. 'च' का. ५. 'श्राविता' का. ६. 'समं' का. ७. 'मादार्या' (?) क-ख. ८. 'सत्वरूपेण' क-ख. ९. 'एवं' का. १०. 'तुष्याम' क-ख. ११. 'वै वयम्' का. १२. 'दानवैः' क-ख. १३. 'वै' का. १४. '°तूपहन' क-ख. १५. 'सप्तरूपो' क-ख.; 'सप्तरूप' का. १६. '°वनद्धाश्च' क-ख.; '°वनद्धास्तु' का. १७. 'एवं तु' का. १८. 'बहुगीतं' क-ख-का.

धातुभिश्चित्रवीणायां गुरुलघ्वक्षरान्वितम्।
वर्णालंकारसंयुक्तं प्रयोक्तव्यं बुधैरथ॥ ४३॥
निर्गीतं गीयते यस्मादपदं वर्णयोजनात्।
असूयया च देवानां बहिर्गीतमिदं स्मृतम्॥ ४४॥
निर्गीतं यन्मया प्रोक्तं सप्तरूपसमन्वितम्।
उत्थापनादिकं यच्च तस्य कारणमुच्यते॥ ४५॥
[2]आश्रावणायां युक्तायां दैत्यास्तुप्यन्ति नित्यशः।
वक्रपाणौ कृते चैव नित्यं तुष्यन्ति दानवाः॥ ४६॥
परिघट्टनायां तुष्टाः [3]स्सुर्युक्तायां रक्षसां गणाः।
[4]संघोटनक्रियायां तु तुष्यन्त्यपि च गुह्यकाः॥ ४७॥
मार्गासारितमासाद्य प्रीता यक्षा भवन्ति हि।
गीतकेषु प्रयुक्तेषु देवास्तुप्यन्ति नित्यशः॥ ४८॥
[7]वर्धमाने प्रयुक्ते तु रुद्रस्तुष्यति सानुगः।
तथा चोत्थापने युक्ते ब्रह्मा तुष्टो भवेदिह॥ ४९॥
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने।
नान्दीप्रयोगेऽथ कृते प्रीतो भवति चन्द्रमाः॥ ५०॥
युक्तायामवकृष्टायां प्रीता नागा भवन्ति हि।
तथा शुष्कावकृष्टायां प्रीतः पितृगणो भवेत्॥ ५१॥
रङ्गद्वारे प्रयुक्ते तु विष्णुः प्रीतो भवेदिह।
जर्जरस्य प्रयोगे तु तुष्टा विघ्नविनायकाः॥ ५२॥
तथा चार्यां प्रयुक्तायामुमा तुष्टा भवेदिह।
[10]महाचार्यां प्रयुक्तायां तुष्टो [11]भूतगणो भवेत्॥ ५३॥

---

१. 'इति' क-ख. २. 'आश्रवणाया' क-ख. ३. 'स्यु' इति त्रुटितं च-पुस्तके. ४. 'सस्तोटन' क.; 'सस्तोटन' का. ५. 'च' का. ६. 'तुष्टा' का. ७. 'वर्धमान-प्रयुक्तेषु' का. ८. 'च' का. ९. 'अपकृष्टाया' का. १०. 'रङ्गप्रयोगमाचार्ये' क-ख.; 'रङ्गप्रयोगमाचार्ये' का. ११. 'भूतगणै' का.

आश्रावणादिचार्यन्तमेतद्दैवतपूजनम् ।
पूर्वरङ्गे मया ख्यातं तथा चाङ्गविकल्पनम् ॥ ५४ ॥
[३]येन तुष्यति यो देवो यस्य यन्मनसः प्रियम् ।
तत्तथा पूर्वरङ्गे तु मया प्रोक्तं द्विजोत्तमाः ॥ ५५ ॥
सर्वदैवतपूजार्हं सर्वदैवतपूजनम् ।
धर्म्यं यशस्यमायुष्यं पूर्वरङ्गप्रवर्तनम् ॥ ५६ ॥
[दैत्यदानवतुष्ट्यर्थं सर्वेषां च दिवौकसाम् ।]
ध्रुवाविधाने वक्ष्यामि लक्षणं कर्म चैव हि ॥ ५७ ॥
प्रयुज्य गीतकविधिं वर्धमानमथापि च ।
[निर्गीतानि सगीतानि पूर्वरङ्गकृतानि तु ॥ ५८ ॥
या विद्या यानि शिल्पानि या गतिर्यच्च चेष्टितम् ।
लोकालोकस्य जगतस्तदस्मिन् नाटकाश्रये ॥ ५९ ॥
निर्गीतानां सगीतानां वर्धमानस्य चैव हि ।]
गीतकान्ते ततश्चापि कार्या ह्युत्थापनी ध्रुवा ॥ ६० ॥
आदौ द्वे च चतुर्थं चाप्यष्टमैकादशे तथा ।
गुर्वक्षराणि जानीयात्पादे ह्येकादशाक्षरे ॥ ६१ ॥
चतुष्पदा भवेत्सा तु चतुरश्रा तथैव च ।
चतुर्भिः संनिपातैश्च त्रिलया त्रियतिस्तथा ॥ ६२ ॥
परिवर्ताश्च चत्वारः पाणयस्त्रय एव च ।
[१२]जात्या चैव हि [१३]विश्लोकास्तांश्च तालेन योजयेत् ॥ ६३ ॥

---

१. च-पुस्तकेऽत्र 'प्रत्याहारे यातुधानाः प्रीयन्ते सह पन्नगैः । तुष्यन्त्यप्सरसस्तत्र कृतेऽवतरणे द्विजाः । तुष्यन्त्यपि च गन्धर्वा आरम्भे' इति प्रक्षिप्तरूपेणाधिकं वर्तते. २. 'प्रत्याहारादि' का. ३. 'देवस्तुष्यति यो येन' का. ४. 'तदा' का. ५. 'धन्यं' क-ख-च. ६. पद्यार्धमदः क-ख-पुस्तकयोर्नास्ति. ७. 'ध्रुवाविधानं' क-ख. ८. 'वर्धमानं तथैव च' का. ९. इतःप्रभृति श्लोकद्वयं क-ख पुस्तकयोर्नास्ति, च-पुस्तके तु 'या विद्या यानि शिल्पानि' इत्यादि पद्यं प्रक्षिप्तरूपेण वर्तमानम्. १०. 'चतुरस्रे' क-ख-का. ११. 'चत्वार आपणत्रय एव' क-ख. १२. 'जात्यां' का. १३. 'विश्लोकः' क.; 'निष्णुकः' ख.

शम्या तु द्विकला कार्या तालो द्विकल एव च ।
पुनश्चैककला शम्या संनिपातः कलात्रयम् ॥ ६४ ॥
एवमष्टकलः कार्यः संनिपातो विचक्षणैः ।
चत्वारः संनिपाताश्च परिवर्तः स उच्यते ॥ ६५ ॥
पूर्वं स्थितलयः कार्यः परिवर्तो विचक्षणैः ।
तृतीये संनिपाते तु तस्य भाण्डग्रहो भवेत् ॥ ६६ ॥
एकस्मिन्परिवर्ते तु गते मार्गे द्वितीयके ।
कार्यं मध्यलये तज्ज्ञैः सूत्रधारप्रवेशनम् ॥ ६७ ॥
पुष्पाञ्जलिं समादाय रक्षामङ्गलसत्कृताः ।
शुद्धवस्त्राः सुमनसस्तथा चाद्भुतदृष्टयः ॥ ६८ ॥
स्नानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम् ।
दीक्षिताः शुचयश्चैव प्रविशेयुः समं त्रयः ॥ ६९ ॥
भृङ्गारजर्जरधरौ भवेतां पारिपार्श्विकौ ।
मध्ये तु सूत्रभृत्ताभ्यां वृतः पञ्चपदीं व्रजेत् ॥ ७० ॥
पदानि पञ्च गच्छेयुर्ब्रह्मणो यजनेच्छया ।
[सूची वामपदं दद्याद्विक्षेपं दक्षिणेन च ॥ ७१ ॥]
त्रितालान्तरविष्कम्भमुत्क्षिपेच्चरणं शनैः ।
पार्श्वोत्थानोत्थितं चैव तन्मध्ये पातयेत्पुनः ॥ ७२ ॥
एवं विष्णुपदीं कृत्वा सूत्रधारः सहेतरः ।
सूचीवामपदं दद्याद्विक्षेपं दक्षिणेन च ॥ ७३ ॥

---

१. 'शम्पा' क-ख. २. 'शम्पा' क-ख. ३. 'तु' का. ४. 'परिवर्तस्य' का. ५ 'पूर्वस्थितिलये' क-ख.; पूर्वस्थितिलय' का. ६. 'मध्यलयं' का. ७ 'पुष्पाञ्जली' का. ८. 'पारिपार्श्विकौ' का. ९. 'सूत्रधृक्' का. १०. च पुस्तके वर्तमानस्य श्लोकार्धस्यास्य स्थाने क-ख-पुस्तकयो. 'पदाना चापि विक्षेपं व्याख्यास्याम्यनुपूर्वशः ।' का-पुस्तके च 'पादाना चापि विक्षेपं व्याख्यास्यामि यथाक्रमम्' इति वर्तते. ११. पद्यमेतत् क-ख पुस्तकयोर्नास्ति । 'त्रिकालान्तर' का. १२. '°त्थितश्चैव' का. १३. 'एवं पञ्चपदीं गत्वा' का. १४. 'सहेतरैः' का. १५. 'सूची' का. १६. 'तु' का.

पुष्पाञ्जल्यपवर्गश्च कार्यो ह्यास्मिन्नथ मण्डले ।
[रङ्गपीठस्य मध्ये तु स्वयं ब्रह्मा प्रतिष्ठितः ॥ ७४ ॥]
ततः सललितैर्हस्तैरभिवन्द्यः पितामहः ।
वन्दनान्यथ कार्याणि त्रीणि हस्तेन भूतले ॥ ७५ ॥
कालप्रकर्षहेतोश्च पादानां प्रविभागतः ।
सूत्रधारप्रवेशाद्यो वन्दनाभिनयानुगः ॥ ७६ ॥
द्वितीयः परिवर्तस्तु कार्यो मध्यलयाश्रितः ।
ततः परं तृतीये तु मण्डलस्य प्रदक्षिणम् ॥ ७७ ॥
भवेदाचमनं चैव जर्जरग्रहणं तथा ।
उत्थाय मण्डलात्तूर्णं दक्षिणं पदमुद्धरेत् ॥ ७८ ॥
वेधं तेनैव कुर्वीत विक्षेपं वामकेन च ।
पुनश्च दक्षिणं पादं पार्श्वसंस्थं समुद्धरेत् ॥ ७९ ॥
ततश्च वामवेधस्तु विक्षेपो दक्षिणस्य च ।
इत्यनेन प्रकारेण सम्यक्कृत्वा प्रदक्षिणम् ॥ ८० ॥
भृङ्गारभृतमाहूय शौचं चापि समाचरेत् ।
यथान्यायं तु कर्तव्या तेन ह्याचमनक्रिया ।
आत्मप्रोक्षणमेवाद्भिः कर्तव्यं तु यथाक्रमम् ॥ ८१ ॥
प्रयत्नकृतशौचेन सूत्रधारेण यत्नतः ।
संनिपाते समं ग्राह्यो जर्जरो विघ्नजर्जरः ॥ ८२ ॥
प्रदक्षिणाद्यो विज्ञेयो जर्जरग्रहणान्तकः ।
तृतीयः परिवर्तस्तु विज्ञेयो वै द्रुते लये ॥ ८३ ॥

---

१. श्लोकार्धमिदं क-ख-पुस्तकयोर्नास्ति. २. 'अभिवन्द्य पितामहम्' का. ४. 'अभिवादनानि' क-ख-का. ५. 'तु' क-ख. ६. 'पातानां' का. ७. 'लयाश्रय.' का. ८. 'अतः' का. ९. 'तृतीयस्तु मण्डपस्य' का. १०. 'मण्डलाचूर्णं' (!) क-ख. ११. 'पादं' क-ख का. १२. 'तेनैव वेधं'. १३. 'तु' का. १४. 'विधानेन'. १५. 'शृङ्गारधारं' का. १५. 'सनिपातसमं प्राज्ञो' क-ख.; 'सनिपातसमप्राज्ञो' का.

गृहीत्वा जर्जरं त्वष्टौ[1] कला जाप्यं[2] प्रयोजयेत् ।
वामवेधं[3] ततः कुर्याद्विक्षेपं दक्षिणस्य च ॥ ८४ ॥
ततः पञ्चपदीं चैव गच्छेत्तु कुतपोन्मुखः ।
जर्जरग्रहणाद्योऽयं कुतपो[4] निगमान्तकः ॥ ८५ ॥
चतुर्थः परिवर्तस्तु कार्यो द्रुतलये[5] पुनः ।
करपातनिपातास्तु भवन्त्यत्र तु षोडश ॥ ८६ ॥
त्र्यश्रे[6] तु द्वादशपदा भवन्ति करपादयोः[7] ।
एवमुत्थापनं कार्यं ततश्च परिवर्तनम् ॥ ८७ ॥
वन्दनान्यथ कार्याणि त्रीणि हस्तेन भूतके ।
आत्मप्रोक्षणमद्भिश्च त्र्यश्रेणै(णे)व विधीयते ॥ ८८ ॥
चतुरस्रं लये मध्ये संनिपातैर्थाष्टभिः ।
यस्यां लघूनि सर्वाणि केवलं नैधनं गुरु ॥ ८९ ॥
भवेदतिजगत्यां तु सा ध्रुवा परिवर्तिनी ।
वार्तिकेन तु मार्गेण याथेनानुगतेन च ॥ ९० ॥
[ललितैः पदविन्यासैर्वन्याद्देवान् यथादिशम् ।
द्विकलं पादपतनं पादचार्यां गतं भवेत् ॥ ९१ ॥
वामपादेन वेधस्तु कर्तव्यो नृत्ययोक्तृभिः ।
द्वितालान्तरविष्कम्भो विक्षेपो दक्षिणस्य च ॥ ९२ ॥
ततः पञ्चपदीं गच्छेदतिक्रान्तैः पदैरथ ।
ततोऽभिवादनं कुर्याद्देवतानां यथादिशम् ॥ ९३ ॥]

१. 'चाष्टौ' का. २. 'जप्यं' घ. ३. 'वामवेधस्तत कार्यो विक्षेपो दक्षिणेन तु' का. ४. 'कुतपाभिमुखान्तग.' का. ५. 'विज्ञेयो वै द्रुते लये' का. ६. 'त्र्यस्रे द्वादशपाता हि' का.; 'शास्त्रे द्वादशपाता हि' ख.; 'त्र्यस्रे तु द्वादशपदा' का. ७. 'करपादजा.' का. ८. 'पद्यमेतत्' क-ख-पुस्तकयोर्नास्ति. ९. 'त्र्यश्रेणैव' च.; 'त्र्यस्रेणैव' का. १०. 'चतुरश्रं' च.; 'चतुरस्रे' का. ११. 'सनिपातस्त्रयाष्टभि.' का. १२. 'निधनं' का. १३. 'गुरु' क-ख. १४. 'परिवर्तनी' च. १५. 'वामकेन तु' का. १६. 'यायेन...तु सप्रहा' क-ख. १७. 'इत प्रभृति श्लोकत्रयी क-ख-पुस्तकयोर्नास्ति. १८. 'पादविन्यासैर्वन्या देवा' का. १९. 'पादचर्या विधीयते' का. २०. '°विष्टम्भो' का. २१. 'तु' का.

वन्देत प्रथमं पूर्वां दिशं शक्राधिदैवताम्[1] ।
द्वितीयां दक्षिणामाशां वन्देत यमदैवताम्[2] ॥ ९४ ॥
वन्देत पश्चिमामाशां ततो वरुणदैवताम्[3] ।
चतुर्थीम्[4]उत्तरामाशां वन्देत धनदाश्रयाम् ॥ ९५ ॥
दिशां तु वन्दनं कृत्वा वामवेधं प्रयोजयेत् ।
दक्षिणेन च[5] कर्तव्यं विक्षेपपरिवर्तनम् ॥ ९६ ॥
प्राङ्मुखस्तु ततः कुर्यात्पुरुषस्त्रीनपुंसकैः[6] ।
त्रिपदीं[7] सूत्रभृद्रुद्रब्रह्मोपेन्द्राभिवादनम्[8] ॥ ९७ ॥
दक्षिणं तु पदं पुंसो वामं[9] स्त्रीपदम्[10]उच्यते ।
[11]पुनर्दक्षिणमेव स्यात्नाभ्युत्क्षिप्तं नपुंसकम् ॥ ९८ ॥
वन्देत पौरुषेणेशं स्त्रीपदेन जनार्दनम् ।
येषां[12] लघूनि कार्याणि केवलं नैधनं गुरु ॥ ९९ ॥
पादे त्वतिजगत्यां हि सा ध्रुवा परिवर्तनी ।
नपुंसकपदेनापि तथैवाम्बुजसम्भवम् ॥ १०० ॥
परिवर्तनमेवं स्यात्तस्यान्ते प्रविशेत्ततः ।
चतुर्थकारः[13] पुष्पाणि प्रगृह्य विधिपूर्वकम् ॥ १०१ ॥
यथावचेन कर्तव्यं पूजनं जर्जरस्य तु ।
कुतपस्य[14] च सर्वस्य सूत्रधारस्य चैव हि ॥ १०२ ॥
तस्य भाण्डसमैः[15] कार्यस्तज्ज्ञैर्गीतिपरिक्रमः[16] ।
न तत्र गानं कर्तव्यं तत्र शोभक्रिया[17] भवेत् ॥ १०३ ॥

---

१. '°देवताम्' क-ख-का. २. '°देवताम्' क-ख का. ३. '°देवताम्' क-ख-का. ४. 'चतुर्थां' क-ख. ५. 'तु' क-ख. ६. 'नपुंसकौ' क-ख. ७. 'निपाद्या सूत्रधृक् रुद्रब्रह्मोपेन्द्राभिवन्दनम्' का. ८. '°भिवादिनीम्' क-ख. ९. 'नृणा' का. १०. 'स्त्रीणा प्रकीर्तितम्' का. ११. 'दक्षिणं तु पदं ज्ञेयं' का. १२. एतत्पद्यं क-ख-का-पुस्तकेषु नास्ति. १३. 'चतुष्प्रकार–' का. १४. 'भाण्डस्यैव च' का. १५. 'भाण्डगत.' का. १६. 'गीतिपरिक्रम.' क ख-का. १७. 'स्नानक्रिया' क-ख.; 'शोभाना शुष्काक्षराणा क्रिया गानमित्यर्थं' इत्यभिनवभारती.

चतुर्थे[1]कारपूजां तु स कृत्वान्तर्हितो भवेत् ।
ततो गेहावकृष्टा तु चतुरस्रा स्थिरा[2] ध्रुवा[3] ॥ १०४ ॥
गुरुप्राया तु सा कार्या तथा चैवार्ध[4]पाणिका ।
स्थायिवर्णाश्रयोपेतौ[5] कलाष्टकविनिर्मिता[6] ॥ १०५ ॥
[7]चतुर्थं पञ्चमं चैव सप्तमं चाष्टमं तथा ।
लघूनि पादे पङ्क्त्यां तु सावकृष्टा ध्रुवा स्मृता ॥ १०६
सूत्रधारः पठे[8]त्तत्र मध्यमं स्वरमाश्रितः ।
नान्दीं पदैर्द्वादशभि[9]रष्टभि[10]र्वाप्यलंकृताम् ॥ १०७ ॥
नमोऽस्तु सर्वदेवेभ्यो द्विजातिभ्यः शुभं तथा ।
जितं सोमेन[11] वै राज्ञा शिवं[12] गोब्राह्मणाय च ॥ १०८ ॥
ब्रह्मोत्तरं तथैवास्तु हता ब्रह्मद्विषस्तथा ।
प्रशा[13]स्त्विमां महाराज पृथिवीं च ससागराम् ॥ १०९ ॥
राष्ट्रं प्रवर्धतां चैव रङ्गस्या[14]शा समृध्यतु ।
प्रेक्षाकर्तुर्महान्धर्मो भवतु ब्रह्मभावितः ॥ ११० ॥
काव्यकर्तुर्यशश्चास्तु धर्मश्चापि प्रवर्धताम् ।
इज्यया चानया नित्यं प्रीयन्तां देवता इति ॥ १११ ॥
नान्दीपदान्तरेष्वेषु ह्येवमेस्त्विति[15] नित्यशः ।
वदेतां सम्यगुक्ताभिर्वाग्भिर्नौ[16] पारिपार्श्वकौ[17] ॥ ११२ ॥
एवं नान्दी विधातव्या य[18]थावल्लक्षणान्विता ।
ततः शुष्का[19]वकृष्टा स्याज्जर्जरश्लोकदर्शिका[20] ॥ ११३ ॥

१. 'चतुर्थंवार' क-ख.; 'चतुष्प्रकारपूजा तु निष्क्रामेत् सप्रयुज्य हि' का. २. 'स्थिरा' क ख-का. ३. 'ध्रुवा' (?) क-ख. ४. 'चैवारपाणिका'. ५. '°पेता' क-ख का. ६. '°विनिर्मिताम्' क ख का. ७. 'श्लोकोऽयं' क ख का पुस्तकेषु नास्ति. ८. 'नान्दी' का. ९. 'तत.' का. १०. 'अष्टाभि' का. ११. 'सामेन (?)' क-ख. १२. 'आरोग्यं भोग एव च' का. १३. 'प्रशास्तिमा' का. १४. 'रङ्गधार्यं समृद्धयताम्' का. १५. 'देयमायेति' क-ख. १६. 'गीर्भिस्तौ' का. १७. 'पारिपार्श्विकौ' ख. १८. 'यथोक्ता लक्षणैर्मया' का. १९. 'शुष्कापकृष्टा' का. २०. '°दर्शका' क ख; 'दर्शिता' का.

नव गुर्वक्षराण्यादौ षड् लघूनि गुरुत्रयम् ।
[1]शुष्कावकृष्टा तु भवेत्कला ह्यष्टौ प्रमाणतः ॥ ११४ ॥

यथा—[2]दिग्ले दिग्ले झण्टु झण्टु जम्बुकवलितक ते चे[3]तौम् ।
कृत्वा शुष्कावकृष्टां तु यथावद्द्विजसत्तमाः ।
ततः श्लोकं पठेदेकं गम्भीरस्वरसंयुतम् ॥ ११५ ॥
देवस्तोत्रं पुरस्कृत्य यस्य पूजा प्रवर्तते ।
[4]राज्ञो वा यत्र भक्तिः स्यादथवा [5]ब्राह्मणस्तवम् ॥ ११६ ॥
[6]गदित्वा जर्जरश्लोकं रङ्गद्वारे च [7]यैः स्मृतः ।
[8]पठेदन्यं पुनः श्लोकं जर्जरस्य वि[9]नाशनम् ॥ ११७ ॥
जर्जरं [10]नमयित्वा तु ततश्चारीं प्रयोजयेत् ।
[11]पारिपार्श्वकयोश्च [12]स्यात्पश्चिमेनापसर्पणम् ॥ ११८ ॥
[13]अड्डिता चात्र कर्तव्या ध्रुवा [14]मध्यलयान्विता ।
चतुर्भिः संनिपातैश्च[15] [16]चतुरस्रा प्रमाणतः ॥ ११९ ॥
आद्यमन्त्यं चतुर्थं च षष्ठमं च तथा गुरु ।
[17]यस्यां ह्रस्वानि शेषाणि सा ज्ञेया [18]त्वड्डिता बुधैः ॥ १२० ॥
[19]अस्याः प्रयोगं वक्ष्यामि यथा पूर्वं महेश्वरः ।
सहोमया क्रीडितवान्नानाभावविचेष्टितैः ॥ १२१ ॥
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य जर्जरं च तुलाधृतम् ॥ १२२ ॥

---

१. 'कलाश्चाष्टौ प्रमाणेन पादैर्ह्यष्टादशाक्षरैः' का. २. 'दिहे दिहे दिह्व दिह्वे जम्बूकवलितक ते ते च (?)' क-ख.; 'झण्डे झण्डे दिग्ग् दिग्ले जम्बुकवलितकतेतेनाम्' का. ३. 'ते तेजा.' च., ४. 'राज्ञो भक्तिश्च यत्र स्यात्' का. ५. 'ब्रह्मणः स्तव.' का. ६. 'नन्दित्वा' का. ७. 'यत्स्मृतम्' चा. ८. 'पठेत्साल' क.; 'पठेदस्य' ख. ९. 'प्रशासनम्' का. १०. 'मानयित्वा' का. ११. 'पारिपार्श्विकयोश्च' च. १२. 'पश्चिमा(मे?) नापि' क-ख.; १३. 'अड्डिता' क-ख. १४. 'मध्यलयाश्रिता' क-ख. १५. 'तु' का. १६. 'चतुरश्रा' च.; 'चतुरस्रं' का. १७. 'यस्यां तु जायते पादे सा भवेदड्डिता ध्रुवा' का. १८. 'लड्डिता' क-ख. १९. 'अस्या' क-ख.

वामपल्लवहस्तेन पादैस्तालान्तरस्थितैः ।
गच्छेत्पञ्चपदीं चैव स[1]विलासाङ्गचेष्टितैः ॥ १२३ ॥
वामवेधस्तु कर्तव्यो विक्षेपो [2]दक्षिणस्य च ।
[3]शृङ्गाररससंयुक्तां पठेदार्यां विचक्षणः ॥ १२४ ॥
चारीश्लोकं [4]गदित्वा तु कृत्वा च परिवर्तनम् ।
तैरेव च पदैः कार्यं [5]पश्चिमेनापसर्पणम् ॥ १२५ ॥
[6]पारिपार्श्वकहस्ते तु न्यस्य जर्जरमुत्तमम् ।
महाचारीं ततश्चैव प्रयुञ्जीत यथाविधि ॥ १२६ ॥
[7]चतुरस्रा ध्रु[8]वा [9]तत्र तथा द्रुतलयान्विता ।
चतुर्भिः संनिपातैश्च कला [10]स्त्वष्टौ प्रमाणतः ॥ १२७ ॥
आद्यं चतुर्थमन्त्यं च सप्तमं दशमं गुरु ।
लघु शेषं [11]ध्रुवापादे चतुर्विंशतिके भवेत् ॥ १२८ ॥
[यथा—[12]पादतलाहतपातितशैलं क्षोभितभूतसमग्रसमुद्रम् ।
ताण्डवनृत्तमिदं प्रलयान्ते [13]पातु जगत्सुखदायि हरस्य ॥१२९॥]
भाण्डोन्मुखेन कर्तव्यं पादविक्षेपणं ततः ।
सूचीं [14]कृत्वा [15]पुनः कुर्याद्विक्षेपपरिवर्तनम् ॥ १३० ॥
अतिक्रान्तैः सललितैः [16]पादैर्द्रुतलयान्वितैः ।
त्रितालान्तरमु[17]त्क्षेपैर्गच्छेत्पञ्चपदीं ततः ॥ १३१ ॥
[तत्रापि वामवेधस्तु विक्षेपो दक्षिणस्य च ।
[18]तत्रैव च पदैः कार्यं प्राङ्मुखेनापसर्पणम् ॥ १३२ ॥

---

१. 'विलासाङ्गविचेष्टितैः' क-ख. २. 'दक्षिणेन तु' का. ३. 'ततः शृङ्गारसंयुक्तं पठेच्छ्लोकं विचक्षणः' का. ४. 'विदित्वा' का. ५. 'प्राङ्मुखेनापसर्पणम्' का. ६. 'पारिपार्श्विक-' ग.; 'पारिपार्श्वकयोर्हस्ते' का. ७. 'चतुरश्रा' ग. ८. '...वा तत्र' क-ख. ९. 'यत्र तथा द्रुतलयाश्रया' का. १०. 'ह्यष्टौ' ग. ११. 'ध्रुवायोगे त्रैष्टुभं चरणे तथा' का. १२. श्लोकोऽयं क-ख-पुस्तकयोर्नास्ति. १३. 'पातु हरस्य सदा सुखदायि' का. १४. 'दत्त्वा' का. १५. 'ततः' क-ख. १६. 'पादैर्द्रुतलयाश्रितैः' का. १७. 'उत्क्षिप्तैः' का. १८. 'सार्धं पञ्चमेकं' क-ख-पुस्तकयोर्नास्ति.

पुनः पदानि त्रीण्येव गच्छेत्प्राङ्मुख एव[1] तु ।
ततश्च यामवेधः स्याद्विक्षेपो दक्षिणस्य च ॥ १३३ ॥
ततो रौद्ररसश्लोकं पादसंहरणं[2] पठेत् ।
तस्यान्ते तु त्रिपद्याथ व्याहरेत्पारिपार्श्वकौ[3] ॥ १३४ ॥
तयोरागमनं कार्यं गानं नर्कुटकं[4] बुधैः ।
तथा च भारतीभेदे त्रिगतं संप्रयोजयेत् ॥ १३५ ॥
विदूषकैस्त्वेकपदां[5] सूत्रधारस्मितावहाम् ।
असंबद्धकथाप्रायां कुर्यात्कथनिकां ततः[6] ॥ १३६ ॥
वितण्डां गण्डसंयुक्तां नालीकं[7] च प्रयोजयेत् ।
कस्तिष्ठति जितं केनेत्यादिकाव्यप्ररूपिणीम् ॥ १३७ ॥
[8]पारिपार्श्वि(र्श्वे?)कसंजल्पो विदूषकविदूषितः ।
स्थापितः सूत्रधारेण त्रिगतं संप्रयुज्यते ॥ १३८ ॥
मेरोचना[9] च कर्तव्या सिद्धेनोपनिमन्त्रणम्[10] ।
रङ्गसिद्धौ पुनः काव्यं काव्यवस्तुनिरूपणम् ॥ १३९ ॥
एवमेव[11] विधिं कृत्वा सूचीवेधकृतेरथ[12] ।
पादैरनाविद्धगतैर्निष्क्रामेयुः समं त्रयः ॥ १४० ॥
एवमेष[13] प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ।
चतुरस्रो[14] द्विजश्रेष्ठाऽयस्रं[15] वा विनिबोधत ॥ १४१ ॥]
अयमेव प्रयोगः स्यादङ्गान्येतानि चैव हि ।
तालप्रमाणं[16] विक्षिप्तं केवलं तु विशेषकृत् ॥ १४२ ॥

---

१. 'च' का. २. 'पदसंहरणा' क-ख-का. ३. 'पारिपार्श्विकौ' च.; 'पारिपार्श्वक.' का. ४. 'नटुटक' क-प; 'नडुटके' का. ५. '°स्त्वेकपदा' क-ख. ६. 'तथा' का. ७. 'नालिका' का. ८. श्लोकोऽयं क-ख-का-पुस्तकेषु नास्ति. ९. 'प्ररोचने' क-ख.; 'प्ररोचनाय' का. १०. 'पनिमन्त्रणा' का. ११. 'एवं' का. १२. '°कृतैरथ' का. १३. 'एवमेव' का. १४. 'चतुरस्रो' च. १५. 'अयस्रे यपि निबोधत' क-ख.; 'अयस्रधापि निबोधत' का.; 'अयं चापि निबोधत' च. १६. 'ताल' क.; 'तालप्रमाण-संहित' का.

शम्या[1] तु द्विकला कार्या तालो ह्येककलस्तथा ।
पुनश्चैककला शम्या[2] संनिपातः कलाद्वयम् ॥ १४३ ॥
अनेन हि प्रमाणेन कलातालयान्वितः ।
कर्तव्यः पूर्वरङ्गस्तु त्र्यस्रोऽभ्युत्थापनादिकः[3] ॥ १४४ ॥
आद्यं चतुर्थं दशममष्टमं नैधनं गुरु ।
यस्यास्तु जायेते[4] पादे सा त्र्यस्रोत्थापिनी[5] ध्रुवा ॥ १४५ ॥
वाद्यं गतिप्रचारश्च ध्रुवा तालस्तथैव च ।
संक्षिप्तान्यत्र[6] कार्याणि त्र्यस्रे[7]नृत्तप्रवेदिभिः ॥ १४६ ॥
वाद्यगीतप्रमाणेन कुर्यादङ्गविचेष्टितम्[8] ।
विस्तीर्णमथ संक्षिप्तं[9] द्विप्रमाणविनिर्मितम्[10] ॥ १४७ ॥
हस्तपादप्रचारस्तु द्विकलः परिकीर्तितः ।
चतुरस्रे[11] परावर्ते पाताः स्युः षोडशैव तु ॥ १४८ ॥
त्र्यस्रे[12] द्वादशपातास्तु भवन्ति करपादयोः ।
एतत्प्रमाणं विज्ञेयमुभयोः[13] पूर्वरङ्गयोः ॥ १४९ ॥
केवलं परिवर्ते[14] तु गमने[15] त्रिपदी भवेत् ।
दिग्वन्दने पञ्चपदी चतुरस्रे[16] विधीयते ॥ १५० ॥
आचार्यबुद्ध्या कर्तव्यस्त्र्यस्रसंज्ञैः[17] प्रमाणतः ।
तस्मात्[18] लक्षणं प्रोक्तं पुनरुक्तं भवेद्यतः ॥ १५१ ॥

---

१. 'शम्पा' क-ख ; 'शम्पाकृद् द्विकल कार्यस्ताल एककलस्तथा' का. २. 'शम्या' क-ख. ३. '-यस्रोऽप्युत्थापनादिक' च. ४. 'जायते' च. ५. 'त्र्यश्रोत्थापिनी' च.; 'त्र्यस्रोत्थापनी' का. ६. 'एक' का. ७. 'त्र्यश्र' च.; 'त्र्यस्रे' का. ८. 'कृतिविचेष्टितम्' का. ९. ''अथवा क्षिप्त' क-ख. १०. 'प्रमाण च विनिर्मितम्' का. ११. 'चतुरश्रे' च.; 'चतुरस्रे परिक्रान्ते पादाः स्यु षोडशैव हि' का. १२. 'त्र्यस्रे' च.; 'त्र्यस्रे तु द्वादशपदा भवन्ति करपादाजा' का. १३. 'निर्दिष्ट' का. १४. 'व (के?) वल' क-ख. १५. 'गगने'(?) का. १६. 'चतुरश्रे' च. १७. 'त्र्यस्रस्वरवै' क-ख.; 'त्र्यस्रस्वरै' च. १८. 'तस्मात्तल्लक्षण' क-ख.

एवमेष प्रयोक्तव्यः पूर्वरङ्गो द्विजोत्तमाः ।
त्र्यस्रश्च चतुरस्रश्च शुद्धो भारत्युपाश्रयः ॥ १५२ ॥
एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः ।
चित्रत्वमस्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः ॥ १५३ ॥
वृत्ते[3] ह्युत्थापने विप्राः कृते च परिवर्तने ।
चतुर्थकारदत्ताभिः सुमनोभिरलंकृते ॥ १५४ ॥
उदात्तगानैर्गन्धर्वैः परिगीते[6] प्रमाणतः ।
देवदुन्दुभयश्चैव निनदेयुर्भृशं ततः ॥ १५५ ॥
शुद्धाः कुसुममालाभिर्विकिरेयुः समन्ततः ।
अङ्गहारैश्च देव्यस्ता उपनृत्येयुरग्रतः ॥ १५६ ॥
यस्ताण्डवविधिः प्रोक्तो नृत्ते पिण्डी समन्ततः ।
रेचकैरङ्गहारैश्च न्यासोपन्याससंयुतः ॥ १५७ ॥
नान्दीपदानां मध्ये तु एकैकस्मिन्पृथक्पृथक् ।
प्रयोक्तव्यो विधिः सम्यग्विचित्रभावमभीप्सुभिः ॥ १५८ ॥
एवं कृत्वा यथान्यायं शुद्धं चित्रं प्रयत्नतः ।
ततः परं प्रयुञ्जीत नाटकं लक्षणान्वितम् ॥ १५९ ॥
[ततस्त्वन्तर्हिताः सर्वा भवेयुर्दिव्ययोषितः ।
निष्क्रान्तासु च सर्वासु नर्तकीषु ततः परम् ॥ १६० ॥
पूर्वरङ्गे प्रयोक्तव्यमङ्गजातमतः परम् ।
प्रस्तावना कृतः कुर्यात्काव्यप्रस्थापनाश्रयाम् ॥ १६१ ॥

---

१. इत प्रभृति श्लोकद्वयं फा पुस्तके नास्ति. २. 'त्र्यस्रश्च चतुरस्र' प. ३. 'वृत्ते' फ. र. ४. 'चतुष्प्रकार' फा. ५. '°रलङ्कृता' फ-रा. ६. 'परिगीते' फ-र.; 'परिगीते.' फा. ७. 'देव्यश्च न्यासोपन्याससंयुताः' फ. र.; 'देव्यश्च न्यासोपन्याससंयुता.' फा. ८. अयं श्लोकः फ-र फा-पुस्तकेषु नास्त्येव । इतः पूर्वं श्लोकचतुर्थपादे 'न्यासोप-न्यास-' इत्यादि 'न्यासोपन्यास-' इत्यादि भवितुमर्हति. ९. 'शुद्धं' फ-र. १०. 'चित्रो लक्षणसंयुतः' फा. ११. 'शुद्धचित्रं' फ-र. १२. श्लोकार्धमेवतत् फा पुस्तके नास्ति. १३. सार्धश्लोकोऽयं फ-र पुस्तकयोर्नास्ति.

एवं शुद्धो भवेच्चित्रः पूर्वरङ्गो विधानतः।
कार्यो नातिप्रसङ्गोऽत्र नृत्तगीतविधिं प्रति ॥ १६२ ॥
गीतवाद्ये च नृत्ते च प्रवृत्तेऽतिप्रसङ्गतः।
खेदो भवेत्प्रयोक्तॄणां प्रेक्षकाणां तथैव च ॥ १६३ ॥
खिन्नानां रसभावेषु स्पष्टता नोपजायते।
ततः शेषप्रयोगस्तु न रागजनको भवेत् ॥ १६४ ॥
[लक्षणेन विना बाह्यलक्षणाद्विस्तृतं भवेत्।
लोकशास्त्रानुसारेण तस्मान्नाट्यं प्रवर्तते ॥ १६५ ॥]
त्र्यस्रं वा चतुरस्रं वा शुद्धं चित्रमथापि वा।
प्रयुज्य रङ्गान्निष्क्रामेत्सूत्रधारः सहानुगः ॥ १६६ ॥
[देवपार्थिवरङ्गाणामाशीर्वचनसंयुताम्।
कवेर्नामगुणोपेतां वस्तूपक्षेपरूपिकाम् ॥ १६७ ॥
लघुवर्णपदोपेतां वृत्तैश्चित्रैरलंकृताम्।
अन्तर्यवनिकासंस्थः कुर्यादाश्रावणां ततः ॥ १६८ ॥
आश्रावणावसाने च नान्दीं कृत्वा ससूत्रधृत्।
प्रयुज्य विधिनैवं तु पूर्वरङ्गं प्रयोगतः।]
स्थापकः प्रविशेत्तत्र सूत्रधारगुणाकृतिः ॥ १६९ ॥
स्थानं तु वैष्णवं कृत्वा सौष्ठवाङ्गपुरस्कृतम्।
प्रविश्य रङ्गं तैरेव सूत्रधारपदैर्व्रजेत् ॥ १७० ॥
स्थापकस्य प्रवेशे तु कर्तव्यार्थानुगा ध्रुवा।
त्र्यस्रां वा चतुरस्रां वा तज्ज्ञैर्मध्यलयान्विता ॥ १७१ ॥

---

१. 'चित्रं पूर्वरङ्गविधानत' का. २. इतोऽग्रे का पुस्तके 'एवमेष प्रयोक्तव्य पूर्वरङ्गो द्विजोत्तमाः। त्र्यस्रश्च चतुरस्रश्च शुद्धो भारत्युपाश्रयः ॥ एवं तावदयं शुद्धः पूर्वरङ्गो मयोदितः। चित्रस्यास्य वक्ष्यामि यथाकार्यं प्रयोक्तृभिः ॥' इति पद्यद्वयी समधिका. ३ 'गीतनृत्तविधिं' का. ४. 'गीते वाद्ये' का. ५. 'विबुधे' क ख. ६. श्लोकोऽयं क ख का पुस्तकेषु नास्ति ७. 'त्र्यश्रं वा चतुरश्रं वा' च. ८. 'शेषा श्लोकत्रयी' क-ख-का-पुस्तकेषु नास्ति. ९. 'सूत्रधारपदं' का. १०. 'त्र्यश्रा वा चतुरश्रा वा' ग.; 'चतुरश्राथवा त्र्यस्रा तज्ज्ञ मध्यलयाश्रिता' का.

कुर्यादनन्तरं चारीं देवब्राह्मणसंश(शंसि)नीम् ।
सुवाक्यमधुरैः श्लोकैर्नानातालल्यान्वितैः ।
प्रसाद्य रङ्गं विधिवत्कवेर्नाम च कीर्तयेत् ॥ १७२ ॥
[उद्धातकादि कर्तव्यं काव्योपक्षेपणाश्रयम् ।]
दिव्ये दिव्याश्रयो भूत्वा मानुषे मानुषाश्रयः ॥ १७३ ॥
[दिव्यमानुषसंयोगे दिव्यो वा मानुषोऽपि वा ।
मुखबीजानुसदृशं नानामार्गसमाश्रयम् ॥ १७४ ॥]
नानाविधैरुपक्षेपैः काव्योपक्षेपणं भवेत् ।
प्रस्ताव्यैवं तु निष्क्रामेत्काव्यप्रस्तावकस्ततः ॥ १७५ ॥
एवमेषं प्रयोक्तव्यः पूर्वरङ्गो यथाविधि ।
य इमं पूर्वरङ्गं तु विधिनैव प्रयोजयेत् ॥ १७६ ॥
नाशुभं प्राप्नुयात्किंचित्स्वर्गलोकं च गच्छति ।
यश्चापि विधिमुत्सृज्य यथेष्टं संप्रयोजयेत् ॥ १७७ ॥
प्राप्नोत्यपचयं घोरं तिर्यग्योनिं च गच्छति ।
न तथाग्निः प्रदहति प्रभञ्जनसमीरितः ॥ १७८ ॥
यथा ह्यपप्रयोगस्तु प्रयुक्तो दहति क्षणात् ।
इत्येषोऽवन्तिपाञ्चालदाक्षिणात्यान्ध्रमागधैः ॥ १७९ ॥
कर्तव्यः पूर्वरङ्गस्तु द्विप्रमाणविनिर्मितः ।
एष वः कथितो विप्राः पूर्वरङ्गाश्रितो विधिः ॥ १८० ॥
भूयः किं कथ्यतां सम्यङ् नाट्यवेदप्रयोक्तृभिः ।
[ पुनश्चित्रे तथा मिश्रे शुद्धे चैव ब्रवीम्यहम् ॥ १८१ ॥

१. 'कुर्यादन्तरचारी च' क ख-का. २. 'नानाभावरसान्विते.' का. ३. 'कवेर्नामानुकीर्तयेत्' का. ४. पद्यार्धमेतत् क-ख का-पुस्तकेषु नास्ति. ५. 'दिव्यो दिव्याश्रयैर्भूत्वा मानुषो मानुषाश्रयैः ।' का. ६. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. ७. '°संयोगो' का. ८. 'मुखं' का. ९. 'काव्यप्रस्तावको द्विज.' का. १०. 'एवमेव' क-ख. ११. 'प्रपूजयेत्' का. १२. 'यथेयं' का. १३. 'इत्योपो'(?) च.; 'इत्येवा–' का. १४. 'दाक्षिणात्योड्र' का. १५. '°मागधः' क-ख. १६. पद्यार्धमेतत् का-पुस्तके नास्ति. १७. इत-प्रभृत्यध्यायसमाप्तिं यावत् क-ख-पुस्तकयोः पाठो नास्ति। च-पुस्तके च प्रक्षिप्तत्वेन वर्तन्ते श्लोका एते.

यथा योज्या ध्रुवाः पञ्च तथा वक्ष्यामि तत्त्वतः ।
आदावुत्थापनी कार्या परिवर्तस्तथा भवेत् ॥ १८२ ॥
अवकृष्टाड्डिता चैव विक्षिप्ता चैव पञ्चमी ।
एवं पञ्च ध्रुवा ज्ञेया उपोहनसमन्विताः ॥ १८३ ॥
कर्तव्यास्तु प्रयत्नेन पूर्वरङ्गे प्रयोक्तृभिः ।
अतः परं प्रवक्ष्यामि ह्युपोहनविधिक्रियाम् ॥ १८४ ॥
उत्थापनस्याष्टकलं परिवर्तस्य षट्कलम् ।
अवकृष्टं पुनः कार्यं कलाभिः पञ्चभिर्युतम् ॥ १८५ ॥
ध्रुवायामड्डितायां च चतुष्कलमथापि च ।
क्षिप्तायां चैव विज्ञेयं कलात्रयसमन्वितम् ॥ १८६ ॥
एवं ह्युपोहनानां तु प्रमाणं समुदाहृतम् ।
गुरुलाघवसंयुक्तं कलातालसमन्वितम् ॥ १८७ ॥
पूर्वरङ्गं सदा ज्ञेयं चित्रमार्गे ह्युपोहनम् ।
चित्रे चैत्राः कला ज्ञेया मिश्रे वार्तिकमाश्रिताः ॥ १८८ ॥
शुद्धे दक्षिणमार्गेण प्रयोक्तव्याः प्रयोक्तृभिः ।
चतस्रो गीतयः कार्या मागधी ह्यर्धमागधी ॥ १८९ ॥
संभाविता तथा चैव पृथुला च प्रकीर्तिता ।
मागधी त्वेव कर्तव्या त्वेवया त्वर्धमागधी ॥ १९० ॥
पूर्वरङ्गे भवेच्चित्रे चित्रमार्गसमाश्रिता ।
यथा मिश्रस्तु योक्तव्यः पूर्वरङ्गे भवेदिह ॥ १९१ ॥
मिश्रे संभाविता कार्या तदा वार्तिकमाश्रिता ।
शुद्धे च पृथुला कार्या दक्षिणं मार्गमाश्रिता ॥ १९२ ॥

१. 'उत्थापनी ततः कार्या परिवर्ता' का. २. 'अपकृष्टाश्चिता चैव' का. ३. 'पूर्वरङ्ग॰ प्रयोक्तृभि.' का. ४. 'हि' इति नास्ति का-पुस्तके. ५. 'अड्डिकायां च' का. ६. 'वा' का. ७. 'पूर्वरङ्गे' का ८. 'चित्रमार्गे' का. ९. 'प्रयोक्तव्या' का. १०. 'संभाविते' का. ११-१२. 'तु' इति नास्ति का-पुस्तके. १३. 'चित्रमार्गे च मागधी' का. १४. 'पूर्वरङ्गो' का.

अतः परं प्रवक्ष्यामि गुरुलाघवतः क्रियाम् ।
उपोहनक्रियायां तु यथा योज्यं प्रयोक्तृभिः ॥ १९३ ॥
दिग्ले दिग्ले पुनः कार्यमन्ते झेण्टुं सदा बुधैः ।
मध्ये लघ्वक्षराणि स्युः षोडशैव तु नित्यशः ॥ १९४ ॥
एवं ह्युपोहनं कृत्वा तथा वस्तु समाचरेत् ।
उत्थापन्यां प्रयोगेऽस्मिन्कलाकालसमन्वितम् ॥ १९५ ॥
अक्षराणां कलायास्तु गुरुलाघवमेव च ।
पूर्वं तु कथितं यस्माचस्मान्नाभिहितं भवेत् ॥ १९६ ॥
यथा—देवं विभुं त्रिभुवनाधिपतिं कैलासपर्वतगुहाभिरतम् ।
शैलेन्द्रराजतनयादयितं मूर्ध्ना नतोस्मि पुरनाशकरम् ॥ १९७ ॥
एवमुत्थापनी कार्या पूर्वरङ्गप्रयोक्तृभिः ।
अतोऽन्यत्परिवर्ताया लक्षणं संविधीयते ॥ १९८ ॥
अस्यास्तूपोहनं कार्यं षट्कलं परिसंख्यया ।
आदौ दिग्ले द्विरुक्तस्तु अन्ते झेण्टुं सदा भवेत् ॥ १९९ ॥
मध्ये लघ्वक्षराण्येव द्वादशैव प्रयोजयेत् ।
वस्तुनोत्र प्रवक्ष्यामि गुरुलघ्वक्षरक्रमम् ॥ २०० ॥
द्वे चादौ च चतुर्थं च अष्टमं दशमं तथा ।
चतुर्दशं पञ्चदशं पादे गुर्वक्षराणि तु ॥ २०१ ॥
सा ध्रुवा परिवर्तार्था निल्या त्रियतिस्तथा ।
परिवर्तास्तुचत्वारः पाणयस्त्रय एव च ॥ २०२ ॥
चतुर्भिः संनिपातैस्तु द्वात्रिंशत्कलिकान्विता ।
पूर्वरङ्गे प्रयोक्तव्यः परिवर्तः प्रयोक्तृभिः ॥ २०३ ॥
यथा—चन्द्रार्धभूषणजटं धीरं वृषभकेतुं
कैलासपर्वतनिवासिनं सुरवरिष्ठम् ।

---

१. 'ध्रुवं' पा. २. 'प्रयोगोऽस्मि' पा. ३. 'समन्वित' पा. ४. 'पुन.' पा. ५. 'त्रिभु-वनाश्रयम्' पा. ६. 'एवमुत्थापनी कार्या' पा. ७. 'पूर्वरङ्गे' पा. ८. 'त्रिरष्टिषु' पा. ९. 'मध्ये' पा. १०. 'द्वे पादे' पा. ११. 'पर्वतनिकेतनं' पा. १२. 'कैलासं' पा.

यथा योज्या ध्रुवाः पञ्च तथा वक्ष्यामि तत्त्वतः ।
आदावुत्थापनी कार्या परिवर्तस्तथा भवेत् ॥ १८२ ॥
अवकृष्टाड्डिता चैव विक्षिप्ता चैव पञ्चमी ।
एवं पञ्च ध्रुवा ज्ञेया उपोहनसमन्विताः ॥ १८३ ॥
कर्तव्यास्तु प्रयत्नेन पूर्वरङ्गे प्रयोक्तृभिः ।
अतः परं प्रवक्ष्यामि ह्युपोहनविधिक्रियाम् ॥ १८४ ॥
उत्थापनस्याष्टकलं परिवर्तस्य षट्कलम् ।
अवकृष्टं पुनः कार्यं कलाभिः पञ्चभिर्युतम् ॥ १८५ ॥
ध्रुवायामड्डितायां च चतुष्कलमथापि च ।
क्षिप्तायां चैव विज्ञेयं कलात्रयसमन्वितम् ॥ १८६ ॥
एवं ह्युपोहनानां तु प्रमाणं समुदाहृतम् ।
गुरुलाघवसंयुक्तं कलातालसमन्वितम् ॥ १८७ ॥
पूर्वरङ्गं सदा ज्ञेयं चित्रमार्गे ह्युपोहनम् ।
चित्रे चैत्राः कला ज्ञेया मिश्रे वार्तिकमाश्रिताः ॥ १८८ ॥
शुद्धे दक्षिणमार्गेण प्रयोक्तव्याः प्रयोक्तृभिः ।
चतस्रो गीतयः कार्या मागधी ह्यर्धमागधी ॥ १८९ ॥
संभाविता तथा चैव पृथुला च प्रकीर्तिता ।
मागधी स्वयं कर्तव्या स्वैथवा त्वर्धमागधी ॥ १९० ॥
पूर्वरङ्गे भवेच्चित्रे चित्रमार्गसमाश्रिता ।
यथा मिश्रस्तु योक्तव्यः पूर्वरङ्गे भवेदिह ॥ १९१ ॥
मिश्रे संभाविता कार्या तदा वार्तिकमाश्रिता ।
शुद्धे च पृथुला कार्या दक्षिणं मार्गमाश्रिता ॥ १९२ ॥

---

त्थापनी तत कार्या परिवर्ता' का. २. 'अपकृष्टाविता चैव' का. ३ 'पूर्वरङ्ग-' का. ४. 'हि' इति नास्ति का-पुस्तके. ५. 'अड्डिकाया च' का. ६. 'वा' 'पूर्वरङ्गे' का ८. 'चित्रमार्गे' का. ९. 'प्रयोक्तव्या' का. १०. 'सभावित' का. ११-१२. 'तु' इति नास्ति का-पुस्तके. १३. 'चित्रमार्गे च मागधी' का. १४. 'पूर्वरङ्गो' का.

अतः परं प्रवक्ष्यामि गुरुलाघवतः क्रियाम् ।
उपोहनक्रियायां तु यथा योज्यं प्रयोक्तृभिः ॥ १९३ ॥
दिग्ले दिग्ले पुनः कार्यमन्ते झण्टुं सदा बुधैः ।
मध्ये लघ्वक्षराणि स्युः षोडशैव तु नित्यशः ॥ १९४ ॥
एवं ह्युपोहनं कृत्वा तथा वस्तु समाचरेत् ।
उत्थापन्यां प्रयोगेऽस्मिन्कलाकालसमन्वितम् ॥ १९५ ॥
अक्षराणां कलायास्तु गुरुलाघवमेव च ।
पूर्वं तु कथितं यस्मात्तस्मान्नाभिहितं भवेत् ॥ १९६ ॥
यथा—देवं विभुं त्रिभुवनाधिपतिं कैलासपर्वतगुहाभिरतम् ।
शैलेन्द्रराजतनयादयितं मूर्ध्ना नतोस्मि पुरनाशकरम् ॥ १९७ ॥
एवमुत्थापनी कार्या पूर्वरङ्गप्रयोक्तृभिः ।
अतोऽन्यत्परिवर्ताया लक्षणं संविधीयते ॥ १९८ ॥
अस्यास्तूपोहनं कार्यं षट्कलं परिसंख्यया ।
आदौ दिग्ले द्विरुक्तस्तु अन्ते झण्टुं सदा भवेत् ॥ १९९ ॥
मध्ये लघ्वक्षराण्येव द्वादशैव प्रयोजयेत् ।
वस्तुनोत्र प्रवक्ष्यामि गुरुलघ्वक्षरक्रमम् ॥ २०० ॥
द्वे चादौ च चतुर्थं च अष्टमं दशमं तथा ।
चतुर्दशं पञ्चदशं पादे गुर्वक्षराणि तु ॥ २०१ ॥
सा ध्रुवा परिवर्ताख्या त्रिलया त्रियतिस्तथा ।
परिवर्तास्तुचत्वारः पाणयस्त्रय एव च ॥ २०२ ॥
चतुर्भिः संनिपातैस्तु द्वात्रिंशत्कलिकान्विता ।
पूर्वरङ्गे प्रयोक्तव्यः परिवर्तः प्रयोक्तृभिः ॥ २०३ ॥
यथा—चन्द्रार्धभूषणजटं वीरं वृषभकेतुं
कैलासपर्वतनिवासिनं सुरवरिष्ठम् ।

---

१. 'झण्डं' का. २. 'प्रयोगोऽस्ति' का. ३. 'समन्वित.' का. ४. 'पुन.' का. ५. 'त्रिपुरान्तकरम्' का. ६. 'एवमुत्थापनी कार्या' का. ७. 'पूर्वाङ्गे' का. ८. 'त्रिरुक्तिस्तु' का. ९. 'झण्डं' का. १०. 'द्वौ पादौ' का. ११. 'परं वृषनिकेतनं' का. १२. 'निवासं' का.

शैलाधिराजतनयाप्रियं प्रमथनाथं
मूर्ध्ना नतोऽस्मि त्रिपुरान्तकं परमयोगि[न]म् ॥ २०४ ॥

अवकृष्टामिदानीं तु कथ्यमानां निबोधत।
अस्यास्तूपोहनं कार्यं कलाभिः पञ्चभिर्युतम् ॥ २०५ ॥
द्विगले द्विगले पुनश्चान्ते झेण्टुमस्य प्रयोजयेत्।
अष्टावेव तु कार्याणि मध्ये लघ्वक्षराणि तु ॥ २०६ ॥
तृतीयं चैव षष्ठं तु नवमैकादशे तथा।
पादे पञ्चदशं चैव षोडशं च भवेद्गुरु ॥ २०७ ॥
अष्टषष्टिगणैः पादैरवकृष्टविधिर्बुधाः।
चतुर्भिः सनिपातैश्च पाणिभिस्त्रिभिरेव च ॥ २०८ ॥

यथा—वरद सगणं त्रिपुरान्तकं वृषभकेतुं
गजचर्मपटं विषमेक्षणं भुवननाथम्।
भुजगाभरणं जगता हितं भुवनयोर्नि
प्रणतोऽस्मि भवन्तमुमापतिं त्वसितकण्ठम् ॥ २०९ ॥

तृतीयं चैव षष्ठं च गुरुपादे त्रयोदशम्।
चतुर्गुणसमायुक्ता सा कार्या त्वङ्गिता ध्रुवा ॥ २१० ॥
तत्राप्युपोहनं कार्यं चतुष्कलसमन्वितम्।
अङ्गितायाः प्रयोगज्ञैरन्ते झेण्टुं विभूषितम् ॥ २११ ॥
द्विगले द्विगले तत्रश्चैव कार्यमन्ते सदा बुधैः।
चत्वार्येव तु कार्याणि मध्ये लघ्वक्षराणि तु ॥ २१२ ॥

---

१ 'शैलराजतनयाप्रिय' का. २. 'परमयोगिनम्' का. ३. 'अप्रकृष्टा' का. ४. 'पुनश्चायं' का. ५ 'झण्ड' का. ६. 'तृतीयश्चैव षष्ठ तु' का. ७ 'अष्टषष्ठगुणे' का. ८. 'अपकृष्टाविधि' का. ९. 'सद्गण' का. १०. 'त्रिपुरान्तकरं' का. ११. 'त्रिभुवननाथं' का. १२. 'भुजङ्गाभरण' का. १३. 'महित' का. १४. का-पुस्तके 'तु' इति नास्ति. १५. 'पादत्रयोदश' का. १६. 'त्वङ्गिका' का. १७. 'झण्डविभूषितम्' का. १८. 'कार्यं मान' का. १९. 'मध्यलघ्वक्षराणि तु' का.

यथा—[1]प्रवरं वरदं प्रणमत सततं गजचर्मपटं मुनिजनसहितम् ।
[2]उमया सहितं भुजगवलयिनं प्रणतोऽस्मि शिवं त्रिभुवन[3]संहितम् २१३

प्रयोज्या [4]त्वङ्गिता ह्येवं पूर्वरङ्गे यथार्थतः ।
अतःपरं प्रवक्ष्यामि विक्षिप्तायास्तु लक्षणम् ॥ २१४ ॥
तृतीयं चैव षष्ठं च नवमं दशमं तथा ।
गुर्वक्षराणि पादे तु यस्यां विक्षिप्तका तु सा ॥ २१५ ॥
द्वि[5]ग्ले त्रिभिर्गुणैर्युक्ताः [6]पातास्तस्य भवन्ति हि ।
त्रिकलं चापि निर्दिष्टमुपोहनमतः परम् ॥ २१६ ॥
द्विग्ले द्विग्ले पुनः कार्यमन्ते [7]झण्टुं प्रयोक्तृभिः ।
लघ्वक्षरैर्विहीनं तु विक्षिप्तोपोहनं भवेत् ॥ २१७ ॥

यथा—त्रिपुरान्तकरं बहुलीलं [8]उमया सहितं बहुरूपम् ।
भुजगाभरणं त्रिपुरा[9]न्तं प्रणमामि सदा परमीशम् ॥ २१८ ॥

एवं सर्वा [10]ध्रुवा कार्या युग्मौजकृतगी[11]तकाः ।
आचार्यबुद्ध्या कर्तव्या पूर्वरङ्गे यथाविधि ॥ २१९ ॥
एवं वा कथितं सम्यक् [12]पूर्वरङ्गे त्रिधा मया ।
किमन्यत् संप्रवक्ष्यामि [13]भूयोऽभीष्टं द्विजोत्तमाः ॥ २२० ॥

इति [14]श्रीभारतीये नाट्यशास्त्रे [15]पूर्वरङ्गविधानं नाम पञ्चमोऽध्यायः ।

---

षष्ठोऽध्यायः ।

पूर्वरङ्गविधिं श्रुत्वा पुनराहुर्महत्तमाः ।
[16]भरतं मुनयः सर्वे प्रश्नान् [17]पञ्चाभिधत्स्व नः ॥ १ ॥

---

१. 'वरदं वरदं प्रणम' का. २. 'उमया सहितं' इति त्रुटितं का-पुस्तके. ३. '°महितं' का. ४. 'ह्यङ्गिता ह्येवं' का. ५. 'द्विग्ले.' का. ६. 'पादाः' का. ७. 'झण्डं' का. ८. 'उमासहितं' का. ९. 'त्रिपुरान्तकं' का. १०. 'ध्रुवा' का. ११. '°गीतिका' का. १२. 'पूर्वरङ्गः' का. १३. 'यद्वाभीष्टं' का. १४. 'श्री' इति नास्ति का-पुस्तके. १५. 'पूर्व.' इति नास्ति का-पुस्तके. १६. 'मुनयो भरतं सर्वे पप्र प्रश्नान् प्रवीहि न.' का. १७. 'प्रश्नमेवं(?)वदस्व नः' क-ख.

ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः।
रसत्वं केन वै[1] तेषामेतदाख्यातुमर्हसि ॥ २ ॥
भावाश्चैव कथं प्रोक्ताः किं वा ते भावयन्त्यपि।[2]
संग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः।
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम् ॥ ४ ॥
अहं वः[3] कथयिष्यामि निखिलेन तपोधनाः।
संग्रहं कारिका चैव निरुक्तं च यथाक्रमम् ॥ ५ ॥
न शक्यमस्य[4] नाट्यस्य गन्तुमन्तं कथंचन।
कस्माद्बहुत्वाज्ज्ञानानां शिल्पानां वाप्यनन्ततः[5] ॥ ६ ॥
एकस्यापि न वै शक्यमन्तं[6] ज्ञानार्णवस्य हि।
गन्तु[7] कि पुनरन्येषां ज्ञानानामर्थतत्त्वतः ॥ ७ ॥
किंत्वल्पसूत्रग्रन्थार्थमनुमानप्रसाधकम्।
नाट्यस्यास्य प्रवक्ष्यामि रसभावादिसंग्रहम् ॥ ८ ॥
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययो[8]।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥ ९ ॥
रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः[9]।
सिद्धि[10]स्वरास्तथातोद्य गानं रङ्गश्च[11] सग्रह ॥ १० ॥
[उपचारस्तथा[12] विप्रा भाण्डपश्चेति सर्वशः।
त्रयोदशविधो ह्येष ह्यादिष्टो नाट्यसंग्रह ॥ ११ ॥]
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः।
सूत्रत सा[13] तु विज्ञेया कारिकार्थप्रदर्शिनी[14] ॥ १२ ॥

---

१. 'वा' का. २. 'भावाश्चैव हि ये प्रोक्ता किं वा ते भावयन्ति हि' 'भावाश्चापि कथ प्रोक्ता किं च ते भावयन्ति हि' क ख. ३. 'च' क ख-का. ४. 'इय' का. ५ 'चाप्य-नन्तत' का. ६. '°मन्तकाना(?)' का. ७ 'गन्तुं पुन किं सर्वेषा भावानाम्'. ८. '°गूढार्थे' का. ९. 'धर्मिवृत्तिप्रवृत्तय' का. १० 'उिद्धि' ख. ११ 'रङ्गस्य' क-ख., 'रङ्ग च' का. १२ पद्यमिद क ख-का पुस्तकेषु नास्त्येव ख पुस्तकेऽपि प्रक्षिप्तत्वेन वर्तते. १३. 'सानुगन्तव्या' क-ख. १४. 'प्रयोगिनी' का.

नानानामाश्रयोत्पन्नं निर्घण्टुनिगमान्वितम् ।
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् ॥ १३ ॥
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचकः ।
धात्वर्थवचनेनेह निरुक्तं तत्प्रचक्षते ॥ १४ ॥
संग्रहो यो मया प्रोक्तः समासेन द्विजोत्तमाः ।
विस्तरं तस्य वक्ष्यामि सनिरुक्तं सकारिकम् ॥ १५ ॥
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ १६ ॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ।
पुनश्च भावान्वक्ष्यामि स्थायिसंचारिसत्त्वजान् ॥ १७ ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ १८ ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १९ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ २० ॥
सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ २१ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ २२ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ २३ ॥

---

१. 'निघण्टु' क-च का. २. '°सूचकम्' का. ३. 'तद्विदुर्बुधा.' का. ४. 'द्विजोत्तम' क-ख. ५. 'सनिरुक्तं' क. ६. '°करुणरौद्र' का. ७. 'एतावे–' क-ख. ८. 'मदश्रम.' घ. ९. 'प्रबोधो' का. १०. 'स्वरभेदो' का.

ये रसा इति पठ्यन्ते नाट्ये नाट्यविचक्षणैः ।
रसत्वं केन वै[1] तेषामेतदाख्यातुमर्हसि ॥ २ ॥
भावाश्चैव कथं प्रोक्ताः किं वा ते भावयन्त्यपि ।
संग्रहं कारिकां चैव निरुक्तं चैव तत्त्वतः ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं रसभावविकल्पनम् ॥ ४ ॥
अहं वः[3] कथयिष्यामि निखिलेन तपोधनाः ।
संग्रहं कारिकां चैव निरुक्तं च यथाक्रमम् ॥ ५ ॥
न शक्यमस्य नाट्यस्य गन्तुमन्तं कथंचन ।
कस्माद्बहुत्वाद्भावानां शिल्पानां चाप्यनन्ततः ॥ ६ ॥
एकस्यापि न वै शक्यमन्तं ज्ञानार्णवस्य हि ।
गन्तुं किं पुनरन्येषां ज्ञानानामर्थतत्त्वतः ॥ ७ ॥
किंत्वल्पसूत्रग्रन्थार्थमनुमानप्रसाधकम् ।
नाट्यस्यास्य प्रवक्ष्यामि रसभावादिसंग्रहम् ॥ ८ ॥
विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः ।
निबन्धो यः समासेन संग्रहं तं विदुर्बुधाः ॥ ९ ॥
रसा भावा ह्यभिनया धर्मी वृत्तिप्रवृत्तयः ।
सिद्धिस्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः ॥ १० ॥
[उपचारस्तथा विप्रा माण्डपश्चेति सर्वशः ।
त्रयोदशविधो ह्येष ह्यादिष्टो नाट्यसंग्रहः ॥ ११ ॥]
अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः ।
सूत्रतः सा[13] तु विज्ञेया कारिकार्थप्रदर्शिनी ॥ १२ ॥

१. 'वा' का. २. 'भावाश्चैव हि ये प्रोक्ताः किं वा ते भावयन्ति हि' 'भावाश्चापि कथं प्रोक्ताः किं च ते भावयन्ति हि' क-ख. ३. 'च' क ख-का. ४. 'इय' का. ५. 'चाप्यनन्तत.' का. ६. '°मन्तकाना(?)' का. ७. 'गन्तुं पुनः किं सर्वेषां भावानाम्'. ८. '°गूढार्थं' का. ९. 'धर्मिवृत्तिप्रवृत्तय.' का. १०. 'सिद्धिः' घ. ११. 'रङ्गस्य' क-ख.; 'रङ्गं च' का. १२. पद्यमिदं क-ख-का-पुस्तकेषु नास्त्येव. घ-पुस्तकेऽपि प्रक्षिप्तत्वेन वर्तते. १३. 'सानुमन्तव्या' क-ख. १४. 'प्रयोगिनी' का.

नानानामाश्रयोत्पन्नं निघण्टुनिगमान्वितम् ।
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् ॥ १३ ॥
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचकः ।
धात्वर्थवचनेनेह निरुक्तं तत्प्रचक्षते ॥ १४ ॥
संग्रहो यो मया प्रोक्तः समासेन द्विजोत्तमाः ।
विस्तरं तस्य वक्ष्यामि सनिरुक्तं सकारिकम् ॥ १५ ॥
शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ १६ ॥
एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना ।
पुनश्च भावान्वक्ष्यामि स्थायिसंचारिसत्त्वजान् ॥ १७ ॥
रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ॥ १८ ॥
निर्वेदग्लानिशङ्काख्यास्तथासूयामदश्रमाः ।
आलस्यं चैव दैन्यं च चिन्ता मोहः स्मृतिर्धृतिः ॥ १९ ॥
व्रीडा चपलता हर्ष आवेगो जडता तथा ।
गर्वो विषाद औत्सुक्यं निद्रापस्मार एव च ॥ २० ॥
सुप्तं विबोधोऽमर्षश्चाप्यवहित्थमथोग्रता ।
मतिर्व्याधिस्तथोन्मादस्तथा मरणमेव च ॥ २१ ॥
त्रासश्चैव वितर्कश्च विज्ञेया व्यभिचारिणः ।
त्रयस्त्रिंशदमी भावाः समाख्यातास्तु नामतः ॥ २२ ॥
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः ॥ २३ ॥

---

१. 'निघण्टु' क-ख-का. २. '°सूचकम्' का. ३. 'तद्विदुर्बुधा.' का. ४. 'द्विजोत्तम' क-ख. ५. 'सनिरुक्तं' क. ६. '°करुणरौद्र' का. ७. 'धनाश्चे–' क-ख. ८. 'मदश्रम.' ख. ९. 'प्रबोधो' का. १०. 'स्वरसादो' का.

दृश्यते हि भावेभ्यो रसनामभिनिर्वृत्तिर्न[1] तु रसेभ्यो भावानामभिनिर्वृत्तिरिति।

भवन्ति[2] चात्र श्लोकाः

नानाभिनयसंबद्धान्[3] भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः॥ ३५॥
नानाद्रव्यैर्बहुविधैर्व्यञ्जनं[4] भाव्यते यथा।
एवं भावा भावयन्ति रसानभिनयैः सह॥ ३६॥
न भावहीनोऽस्ति रसो न भावो रसवर्जितः।
परस्परकृता सिद्धिस्तयोरभिनये भवेत्॥ ३७॥
व्यञ्जनौषधिसंयोगो यथान्नं स्वादुतां नयेत्[5]।
एवं भावा रसाश्चैव भावयन्ति परस्परम्॥ ३८॥
यथा बीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं यथा।
तथा मूलं रसाः सर्वे तेभ्यो[6] भावा व्यवस्थिताः॥ ३९॥

तदेषां रसानामुत्पत्तिवर्णदैवतनिदर्शनान्यभिव्याख्यास्याम.—तेषामुत्पत्तिहेतवश्चत्वारो रसाः। तद्यथा[7] शृङ्गारो रौद्रो वीरो बीभत्स इति।

अत्र[8]—

शृङ्गाराद्धि भवेद्धास्यो रौद्राच्च[9] करुणो रसः।
वीराच्चैवाद्भुतोत्पत्तिर्बीभत्साच्च भयानक॥ ४०॥
शृङ्गारानुकृतिर्या तु स हास्यस्तु[10] प्रकीर्तितः।
रौद्रस्यैव[11] च यत्कर्म स ज्ञेयः करुणो रस.॥ ४१॥
वीरस्यापि च यत्कर्म सोऽद्भुत परिकीर्तित.।
बीभत्सदर्शनं यत्र[12] ज्ञेयः[13] स तु भयानकः॥ ४२॥

---

१. '°अभिनिर्वृत्तिरिति न तु रसेभ्यो भावानामभिनिर्वृत्तिरिति' का. २. 'तत्र श्लोका' का. ३. 'संबन्धात्' का. ४. अयं श्लोक क-ख पुस्तकयोर्नास्ति. ५ '°संयोगाद्यथा न स्वादुता भवेत्' का. ६. 'ततो' क-ख. 'वेषु' का. ७. 'तद्यथा' इति क-ख पुस्तकयोर्नास्ति. ८. 'अत्र' इति क-ख पुस्तकयोर्नास्ति। ९. 'रौद्रात्तु' का. १०. 'हास्य' इति सहित. ११. 'रौद्रस्यापि च यत् कर्म स ज्ञेयो(?)करुणो रस.' का. १२. 'यच' क-ख-का. १३. 'भवेत्'.

अथ वर्णाः—

श्यामो भवति शृङ्गारः सितो हास्यः प्रकीर्तितः ।
कपोतः करुणश्चैव रक्तो रौद्रः प्रकीर्तितः ॥ ४३ ॥
गौरो वीरस्तु विज्ञेयः कृष्णश्चैव भयानकः ।
नीलवर्णस्तु बीभत्सः पीतश्चैवाद्भुतः स्मृतः ॥ ४४ ॥

अथाधिदैवतानि—

शृङ्गारो विष्णुदैवत्यो हास्यः प्रमथदैवतः ।
रौद्रो रुद्राधिदैवत्यः करुणो यमदैवतः ॥ ४५ ॥
बीभत्सस्य महाकालः कालदेवो भयानकः ।
वीरो महेन्द्रदेवः स्यादद्भुतो ब्रह्मदैवतः ॥ ४६ ॥

एवमेतेषां रसानामुत्पत्तिवर्णदैवतान्यभिव्याख्यातानि । इदानीं [12]विभावानुभावव्यभिचारिसंयुक्तानां [13]लक्षणनिदर्शनान्यभिव्याख्यास्यामः, स्थायिभावांश्च रसानामनुक्रमिष्याम इति ।

तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः । यथा यत्किंचिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोप[17]मीयते । यस्तावदुज्ज्वलवेषः स शृङ्गारवानित्युच्यते । यथा च गोत्रकुलाचारोत्पन्नान्याप्तोपदेशसिद्धानि पुंसां नामानि भव[20]न्ति तथैवैषां रसानां भावानां च नाट्याश्रितानां चार्थानामाचारोत्पन्नान्याप्तोपदेशसिद्धानि नामानि [22]भवन्ति एवमेष

---

१. 'वर्णा(र्णाः!) ना' च. २. 'भवेत्तु' का. ३. 'हास्याधापि' का. ४. 'अथ दैवतानि' का. ५. 'विष्णुदेवस्तु' फ-स.; 'विष्णुदेवत्ये(त्यो!)' च. ६. 'प्रथमदैवत.' फ-स. ७. 'रुद्राधिदैवस्तु' फ-स.; 'रुद्राधिदैवश्च' का. ८. 'बीभत्सश्च' फ-स. ९. 'कामदेवो' का. १०. 'रसानां' इति फ-स-पुस्तकयोर्नास्ति. ११. '[एषां तु]' इत्यधिकं च पुस्तके. १२. 'अनुभावविभावव्यभिचारिसंयुक्तानां' फ-स. १३. 'लक्षणदर्शनानि' का. १४. 'रसत्वमुपनेष्यामः' का. १५. '[यथा च]' इत्यधिकं च-पुस्तके.; 'यथा' इति फ-स-पुस्तकयोर्नास्ति. १६. '[भवति]' इत्यधिकं च-पुस्तके. १७. 'अनुमीयते' का. १८. 'उज्ज्वलवेषवान्' फ-स. १९. 'च' इति फ-स-पुस्तकयोर्नास्ति. २०. 'भवन्ति' इति का-पुस्तके नास्ति. २१. 'तथैषां' फ-स. २२. '[भवन्ति]' च; फ-स-पुस्तकयोस्तु 'भवन्ति' इति नास्ति. २३. 'तदेवमेव' का.

आचारसिद्धो ह्युज्ज्वलवेषात्मकत्वाच्छृङ्गारो रस इति। स च स्त्रीपुरुषहेतुक उत्तमयुवप्रकृतिः। तस्य द्वे अधिष्ठाने—संभोगः, विप्रलम्भश्च। तत्र संभोगस्तावद् ऋतुमाल्यानुलेपनालंकारेष्टजनविषयवरभवनोपभोगोपवनगमनानुभवनश्रवणदर्शनक्रीडालीलादिभिर्विभावैरुत्पद्यते। तस्य नयनचातुरीभ्रूक्षेपकटाक्षसंचारललितमधुराङ्गहारवाक्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः। व्यभिचारिणश्चास्यालस्योग्रजुगुप्सावर्जम्। विप्रलम्भकृतस्तु निर्वेदग्लानिशङ्कासूयाश्रमचिन्तौत्सुक्यनिद्रासुप्तस्वप्नविबोधव्याध्युन्मादापस्मारजाड्यमरणादिभिरनुभावैरभिनेतव्यः। अत्राह—यद्ययं रतिप्रभवः शृङ्गारः कथमस्य करुणाश्रयिणो भावा भवन्ति। अत्रोच्यते—पूर्वमेवाभिहितं संभोगविप्रलम्भकृतः शृङ्गार इति। वैशिकशास्त्रकारैश्च दशावस्थोऽभिहितः ताश्च सामान्याभिनये वक्ष्यामः।

करुणस्तु शापक्लेशविनिपतितेष्टजनविप्रयोगविभवनाशवधबन्धसमुत्थो निरपेक्षभावः। औत्सुक्यचिन्तासमुत्थः सापेक्षभावो विप्रलम्भकृतः। एवमन्यः करुणोऽन्यश्च विप्रलम्भ इति। एवमेष सर्वभावसंयुक्तः शृङ्गारो भवति। अपि च

सुखप्रायेष्टसंपन्न ऋतुमाल्यादिसेवकः।
पुरुषः प्रमदायुक्तः शृङ्गार इति सञ्ज्ञितः॥ ४७॥

अपि चात्र सूत्रानुबद्धे आर्ये भवतः—

'ऋतुमाल्यालंकारैः प्रियजनगान्धर्वकाव्यसेवाभिः।
उपवनगमनविहारैः शृङ्गाररसः समुद्भवति॥ ४८॥

१. '[इति]' इति च-क-ख का पुस्तकेषु नास्ति. २. 'स्त्रीपुरुषहेतुक उत्तमयुवतिप्रकृति' का. ३. 'भवनोपभोगवनगमना-' ग. ४. 'दर्शन' इति क ख पुस्तकयोर्नास्ति. ५. 'चातुर्यभ्रूविक्षेप' का. ६. 'सचारि' का. ७. 'श्चालस्यौ°' ग. ८. 'वर्गो' क. ख.; 'वर्जा' ग. ९. 'विबोध' ग. १०. 'जाड्य[मोह] मरणादिभि' ग. ११. 'भवन्ति' इति नास्ति क ख पुस्तकयो. १२. 'ताश्चावस्था' का. १३. 'विनिपातनेष्टजनविप्रयोग' का. १४. 'विप्रयोग°' इति क-ख ग-पुस्तकेषु नास्ति. १५. 'बन्धनसमुत्थो' का. १६. 'कुतश्चयचिन्ता' क-ख. १७. 'अत्र' इति क-ख पुस्तकयोर्नास्ति.

नयनवदनप्रसादैः स्मितमधुरवचोधृतिप्रमोदैश्च ।
मधुरैश्चाङ्गविकारैस्तस्याभिनयः प्रयोक्तव्यः ॥ ४९ ॥

[ इति शृङ्गाररसप्रकरणम् । ]

अथ हास्यो नाम हासस्थायिभावात्मकः । स च विकृतपरवेषालंकारधार्ष्ट्यलौल्यकुहकासत्प्रलापव्यङ्गदर्शनदोषोदाहरणादिभिर्विभावैरुत्पद्यते । तस्यौष्ठनासाकपोलस्पन्दनदृष्टिव्याकोशाकुञ्चनस्वेदास्यरागपार्श्वग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चावहित्थालस्यतन्द्रानिद्रास्वप्नप्रबोधासूयादयः । द्विविधश्चायम्—आत्मस्थः परस्थश्च । यदा स्वयं हसति तदात्मस्थः । यदा तु परं हासयति तदा परस्थः । अत्रानुवंश्ये आर्ये भवतः—

'विपरीतालंकारैर्विकृताचाराभिधानवेषैश्च ।
विकृतैरङ्गविकारैर्हसतीति रसः स्मृतो हास्यः ॥ ५० ॥
विकृताचारैर्वाक्यैरङ्गविकारैश्च विकृतवेषैश्च ।
हासयति जनं यस्मात्तस्माज्ज्ञेयो रसो हास्यः ॥ ५१ ॥'
स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः ।
षड्भेदाश्चास्य विज्ञेयास्तांश्च वक्ष्याम्यहं पुनः ॥ ५२ ॥
स्मितमथ हसितं विहसितमुपहसितं चापहसितमतिहसितम् ।
द्वौ द्वौ भेदौ स्यातामुत्तममध्याधमप्रकृतौ ॥ ५३ ॥

तत्र—

स्मितहसिते ज्येष्ठानां मध्यानां विहसितोपहसिते च ।
अधमानामपहसितं ह्यतिहसितं चापि विज्ञेयम् ॥ ५४ ॥

---

१. 'विहारैः' च. २. 'कलहा°' का. ३. 'समुत्पद्यते' का. ४. 'तस्योष्ठ' च, 'तस्यौष्ठदंशन' का. ५. 'आलस्यावहित्था'. ६. 'स्वप्नादयः' क-ख. ७. 'द्विविधो हास्यः' ८. 'यदा तु' च.; 'यदापरं' का. ९. 'अर्थविशेषैः' का. १०. 'विकृताकारैः' का. ११. 'च' इति नास्ति का-पुस्तके. १२. 'द्वौ भेदौ' क-ग. १३. '°मध्यमाधम°' का. १४. 'तत्र' इति क-ग-का-पुस्तकेषु नास्ति. १५. 'श्रेष्ठानां' क-ग.; 'तथातिहसितं च' का. १६. 'अतिहसितं' क-ग.

अत्र श्लोकौ[1]—

ईषद्विकसितै[2]र्गण्डैः कटाक्षैः सौष्ठवान्वितैः ।
अलक्षितद्विजं धीरमुत्तमानां स्मितं भवेत् ॥ ५५ ॥
उत्फुल्लानननेत्रं[3] तु गण्डैर्विकसितै[4]रथ ।
किंचिल्लक्षितदन्तं च हसितं तद्विधीयते ॥ ५६ ॥

[अथ[5] मध्यानाम्—]

आकुञ्चिताक्षिगण्डं यत्सस्वनं[6] मधुरं तथा ।
कालागतं सास्यरागं तद्वै विहसितं भवेत् ॥ ५७ ॥
उत्फुल्लनासिकं यत्तु[7] जिह्मदृष्टिनिरीक्षितम्[8] ।
निकुञ्चितांसकशिरस्तच्चोपहसितं भवेत् ॥ ५८ ॥

[अधमानाम्[9]—]

अस्थानहसितं यत्तु[10] साश्रुनेत्रं[11] तथैव च ।
उत्कम्पितांसकशिरस्तच्चापहसितं भवेत् ॥ ५९ ॥
संरब्धसाश्रुनेत्रं च विकुष्ट[12]स्वरमुद्धतम् ।
करोपगूढपार्श्वं च तच्चातिहसितं भवेत् ॥ ६० ॥
हास्य[13]स्थानानि यानि स्युः कार्योत्पन्नानि नाटके ।
उत्तमाधममध्यानामेवं तानि प्रयोजयेत् ॥ ६१ ॥
इत्येष[14] स्वसमुत्थस्तथा परसमुत्थित[15]श्च विज्ञेयः ।
द्विविधस्त्रिप्रकृतिगतस्त्र्य[16]वस्थभावो रसो हास्यः ॥ ६२ ॥

[ इति हास्यरसप्रकरणम् । ]

---

१. 'अत्र श्लोकौ' इति क-ख पुस्तकयोर्नास्ति. २. 'विहसितैः' क-ख का. ३. 'नेत्रेषु' का. ४. 'विहसितैः' का. ५. 'अथ मध्यानाम्' इति क-ख पुस्तकयोर्नास्ति. ६. 'सस्वरं' का. ७. 'यच्च' का. ८. 'निरीक्षणम्' का. ९ 'अधमानाम्' इति क-ख-पुस्तकयोर्नास्ति. १०. 'यत्र' का. ११. 'साश्रुनेत्र' का. १२. 'विकृष्ट' ख. १३. 'हास°' का. १४. का पुस्तके—'एवमात्मसमुत्थं च तथा परसमुत्थितम् । द्विविधस्त्रिप्रकृतिक षड्भेदोऽयं रसः स्मृतः ॥' इति वर्तते. १५. 'परसमुत्थश्च' ख. १६. 'त्र्यवस्थभावो' क-ख.

अथ करुणो नाम शोकस्थायिभावप्रभवः । स च शापक्लेशविनिपतितेष्टजनविप्रयोगविभवनाशवधबन्धविद्रवोपघातव्य[1]सनसंयोगादिभिर्विभावैः समुपजायते । तस्याश्रु[2]पातपरिदेवनमुखशोषणवैवर्ण्यस्रस्तगात्रतानिःश्वासस्मृतिलोपादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदग्लानि[3]चिन्तौत्सुक्यावेगभ्रममोहश्रमभयविषाददैन्यव्याधिजडतोन्मादापस्मा[4]रत्रासालस्यमरणस्तम्भवेपथुवैवर्ण्या[5]श्रुस्वरभेदादयः । अत्रार्ये भवतः—

इष्टवधदर्शनाद्वा विप्रियवचनस्य संश्र[6]वाद्वापि ।
एभिर्भावविशेषैः करुणरसो नाम संभवति ॥ ६३ ॥
सस्वनरु[7]दितैर्मोहा[8]गमैश्च परिदेवितैर्विलपितैश्च ।
अभिनेयः करुणरसो देहायासाभिघातैश्च ॥ ६४ ॥

[ इति करुणरसप्रकरणम् । ]

अथ रौद्रो नाम क्रोधस्थायिभावात्मको रक्षोदानवोद्धतमनुष्यप्र[9]कृतिः सङ्ग्रामहेतुकः । स च क्रो[10]धधर्षणाधि[11]क्षेपावमानानृतवच[12]नोपघातवाक्पा[13]रुष्याभिद्रोहमात्सर्यादिभिर्विभावै[14]रुत्पद्यते । तस्य च ताडनपाटनपीडनच्छेद[15]नप्रहरणाहरणशस्त्रसंपातसंप्रहाररुधिरा[16]कर्षणाद्यानि कर्माणि । पुनश्च रक्तनयनस्वेद[17]भ्रु[18]कुटीकरणावष्टम्भदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावा[19]श्चास्य—असंमोहोत्सा[20]हावेगामर्षचपलतौ[21]ग्र्यगर्वविकृतेक्षणस्वेदवेपथुरोमाञ्चगद्गदाद[22]यः । अत्राह—यदभिहितं रक्षोदानवा[23]दीनां रौद्रो

१. 'स्वर्शनसयोगादिभि-' क-ख. २. 'अस्य चाश्रुपातन' का. ३. 'चिन्तौत्सुक्यमोहश्रम' क-ग.; 'चिन्तौत्सुक्यमोहभ्रम' का. ४. '°पस्मारालस्य' क-ग. ५. 'वैवर्ण्यश्च' च. ६. 'सश्रयाद्वापि' का. ७. 'श्वसनरुदिते' क-ख-का. ८. 'मोहोद्गमैश्च' का. ९. 'मनुष्यप्रभव-' का. १०. 'क्रोधाधर्षणा' क-ग. ११. '°धिक्षेपाद्यत' क-ग. १२. 'वचनवाक्पारुष्य' का. १३. 'वाक्पारुष्यद्रोह' का. १४. 'समुपजायते' का. १५. 'छेद्यप्रहरण' क-ख.; 'च्छेदनभेदनप्रहरणा°' का. १६. 'रुधिराद्याकर्षणाद्यानि कार्याणि' का. १७. 'स्वेद' इति क-ग. पुस्तकयोर्नास्ति, च. पुस्तके तु संशोधकवर्धितः. १८. 'भ्रुकुटीकरदन्तौष्ठपीडन' का.; 'भ्रुकुटीकरणाद°' च. १९. 'व्यभिचारिणश्चास्य' का. २०. '°संमोहोत्साहवेगामर्ष°' का. २१. 'चपलतौग्र्यस्वेदवेपथु' क ग का.; 'चपलतौग्र्यगर्व [ विकृतेक्षण ] स्वेदवेपथु' च. २२. 'रोमाञ्चादय' क-ग. २३. 'राक्षसादीना' का.

रसः किमन्येषां नास्ति[1] । उच्यते—अस्त्यन्येषामपि रौद्रो रसः[2] किंत्वधि[3]-कारोऽत्र गृह्यते । ते हि स्वभावत एव रौद्राः । कस्मात्[4] । बहुबाहवो बहुमुखाः प्रोद्धूतविकीर्ण[5]पिङ्गलशिरोजा रक्तोद्वृत्तविलोचना भीमासितरूपिणश्चैव । यच्च किंचित्समारभन्ते[6] स्वभावेन चेष्टितं वागङ्गादिकं[7] तत्सर्वं रौद्रमेवै[8]-षाम् । शृङ्गारश्च[9] तैः प्रायशः प्रसभं सेव्यते । तेषां चानुकारिणो[10] ये पुरुषास्तेषामपि संग्राम[11]संप्रहारकृतो रौद्रो रसो[12]ऽनुमन्तव्यः । अत्रानुवंश्ये आर्ये भवतः[22]—

युद्ध[13]प्रहारघातनविकृतच्छेदनविदारणैश्चैव ।
संग्रामसंभ्रमाद्यै[14]रेभिः संजायते रौद्रः ॥ ६५ ॥
नानाप्रहरण[15]मोक्षैः शिरःकबन्धभुजकर्तनैश्चैव ।
एभिश्चार्थविशेषैरस्याभिनयः[16] प्रयोक्तव्यः ॥ ६६ ॥
इति रौद्ररसो दृष्टो रौद्रवागङ्गचेष्टितः ।
शस्त्रप्रहारभूयिष्ठ उग्रकर्मक्रियात्मकः ॥ ६७ ॥

[इति रौद्ररसप्रकरणम् ।]

अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मकः । स चासंमोहाध्यवसायनयवि[17]-नय[18]बलपराक्रमशक्तिप्रतापप्रभावादिभिर्विभावैरुत्पद्यते । तस्य स्थैर्यधैर्यशौर्य[19]-त्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य धृतिमति[20]गर्वावेगौग्र्यामर्षस्मृतिरोमाञ्चप्रतिबोधादयः[21] । अत्रार्ये रसविचारमुखे—

१. 'नास्तीति' का. २. 'रसः' इति नास्ति का-पुस्तके. ३. 'किं त्वा°' का. ४. 'कस्मात्' इति का पुस्तके नास्ति. ५. 'विकर्णटपिङ्गल' का. ६. 'किंचिदारम्भे स्वभावचेष्टितं' क-ख.; 'किंचित्समारम्भान्ते स्वभावचेष्टितं' का. ७. 'वागङ्गादिक वा' का. ८. 'रौद्रमेवेति' का. ९. का पुस्तके 'शृङ्गारश्च तै प्रायश प्रसभं सेव्यते' इति नास्ति. १०. 'चानुगामिनो' का. ११. 'संग्राम' इति का पुस्तके नास्ति. १२. 'रौद्ररसो' का. १३. 'युद्धप्रहारपातन' क-ख.; 'सत्वप्रहारघातन' का. १४. 'संग्रामसंभ्रमोत्थै' का. १५. 'नानाप्रहरणसंकुल' का. १६. 'तस्याभिनय' का. १७. ख-पुस्तके 'विनय' इति नास्ति. १८. 'नयविनयबहुल' का. १९. क-ख-पुस्तकयो 'धैर्य' इति नास्ति.; 'स्थैर्यशौर्यधैर्य' का. २०. 'धृतिमानगर्वा°' क-ख. २१. 'रोमाद्यादय.' क-ख का. २२. 'अत्रानुवंश्ये आर्ये भवतः' का.

उत्साहाध्यवसायादविषादित्वादविस्मयान्मोहात्[१] ।
[२]विविधादर्थविशेषाद्वीररसो नाम संभवति ॥ ६८ ॥
[३]स्थितिधैर्यवीरगर्वैरुत्साहपराक्रमप्रभावैश्च ।
वाक्यैश्चाक्षेपकृतैर्वीररसः सम्यगभिनेयः ॥ ६९ ॥

[ इति वीररसप्रकरणम् । ]

अथ भयानको नाम भयस्थायिभावात्मकः । स च . विकृतर[४]वसत्त्वदर्शनशिवोलूकत्रासोद्वेगशून्या[५]गारारण्यगमनस्वजनवध[६]बन्धदर्शनश्रुतिकथादिभिर्विभावैरुत्पद्यते । तस्य प्रवेपितकरचरणनयन[७]चपलपुलकमुखवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावाश्चास्य—स्तम्भस्वेदगद्गदरोमाञ्चवेपथुस्वरभेदवैवर्ण्यशङ्कामोहदैन्यावेगचापल[८]जडता[९]त्रासापस्मारमरणादयः । [१०]अत्रार्याः—

विकृतरवसत्त्वदर्शनसङ्ग्रामारण्यशून्यगृहगमनात् ।
गुरुनृपयोरपराधात्कृतकश्च भयानको ज्ञेयः ॥ ७० ॥
गात्रमुखदृष्टिभेदैरूरुस्तम्भाभिवीक्षणोद्वेगैः ।
[११]सन्नमुखशोषहृदयस्पन्दनरोमोद्गमैश्च भयम् ॥ ७१ ॥
एतत्स्वभावजं स्यात्[१२]सत्त्वसमुत्थं तथैव कर्तव्यम् ।
पुनरेभिरेव भावैः कृतकं [१३]मृदुचेष्टितैः कार्यम् ॥ ७२ ॥
करचरणवेपथुस्तम्भगात्रसंकोचहृदयकम्पेन ।
[१४]शुष्कौष्ठतालुकण्ठैर्भयानको नित्यमभिनेयः ॥ ७३ ॥

[ इति भयानकरसप्रकरणम् । ]

---

१. '°दविस्मयामोहात्' य. २. 'विविधार्थविशेषात्' का. ३. 'स्थितिधैर्यवीरगर्वैः' क-ख.; 'स्मृतिधैर्यवीर्यशौर्योत्साह' का. ४. 'विकृतरस' य. ५. 'शून्यारण्य' क-ख. ६. 'यन्धन' का. ७. 'नयनचपलमुख' क-ख.; 'नयनचलनपुलकमुख' का. ८. 'चपलतात्रासा°' क-ख. ९. 'जडता' इति क-ख का. पुस्तकेषु नास्ति. १०. 'अत्रानुवंश्या आर्या भवन्ति' का. ११. 'सान्तमुख' क-ख. १२. 'सान्त' क-ख. १३. 'मुदुचेष्टितैः' क-ख.; 'मृदुचेष्टितैश्च' का. १४. 'शुष्कोष्ठ' य.

अथ बीभत्सो नाम जुगुप्सास्थायिभावात्मकः । स चाहृद्याप्रशस्ताप्रियावेक्षानिष्टश्रवणदर्शनोद्वेजनपरि[2]कीर्तनादिभिर्विभावैरुत्पद्यते । तस्य च[3] सर्वाङ्गसंहार[4]मुखविकूणनोल्लेखननिष्ठीवनोद्वेजनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । भावा[5]श्चास्य—[6]अपस्मारोद्वेगावेगमोहव्याधिमरणादयः । अत्रार्ये भवतः—

[7]अनभिमतदर्शनेन च [8]गन्धरसस्पर्शशब्ददोषैश्च ।
उद्वेजनैश्च बहुभिर्बीभत्सरसः समुद्भवति ॥ ७४ ॥
[9]मुखनेत्रविकूणनया नासाप्रच्छादनावनमितास्यैः ।
अव्यक्तपादपतनैर्बीभत्सः सम्यगभिनेयः ॥ ७५ ॥

[ इति बीभत्सरसप्रकरणम् । ]

[10]अथाद्भुतो नाम विस्मयस्थायिभावात्मकः । स च दिव्यजनदर्[11]शनेप्सितमनोरथावाप्त्युपव[12]नदेवकुलादिगमनसभाविमा[13]नेमायेन्द्रजालसंभावनादिभिर्विभावैरुत्पद्यते । तस्य नयनविस्ता[14]रानिमेषप्रेक्षणरोमाञ्चाश्रुस्वेदहर्[15]षसाधुवाददानप्रबन्ध[16]हाहा[17]कारबाहुवदनचेलाङ्गुलिभ्रमणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

भावा[18]श्चास्य—स्तम्[19]भाश्रुस्वेदगद्गदरोमाञ्चावेगसंभ्रम[20]हर्षचपलतोन्मादधृतिजडताप्रलयादयः । अत्रानुवंश्ये आर्ये भवतः—

यत्त्वतिशयार्थयुक्तं वाक्यं [21]शिल्पं च कर्म रूपं [22]वा ।
[23]तत्सर्वमद्भुतरसे विभावरूपं हि विज्ञेयम् ॥ ७६ ॥

---

१. 'प्रिया चोक्षया' ब. २. 'दर्शनकीर्तनादिभि' क-ख.; 'दर्शनपरिकीर्तनादिभि.' का. ३. 'च' इति नास्ति क-ख-का-पुस्तकेषु. ४. 'सर्वाङ्गहारमुखनेत्रविघूर्णनहृल्लेखनिष्ठीवनोद्वेजनादिभि.' का. ५. 'व्यभिचारिभावाश्चास्य' का. ६. 'अपस्मारावेग' क-ख.; 'अपस्मारवेग' का. ७. 'अनभिहित°' का. ८. 'गन्धरसस्पर्शदोषैश्च' क-ख.; 'रसगन्धस्पर्शशब्ददोषैश्च' का. ९. 'मुखनेत्रविघूर्णननयननासाप्रच्छादना°' का. १०. क-ख-पुस्तकयो. 'अथ' इति नास्ति. ११. '°वाप्त्युत्तमवनदेवकुलादिगमनासंभाव्यमानमायेन्द्रजाल' क-ख.; 'दिव्यदर्शनेप्सित' क-ख-का. १२. '°वाप्त्युत्तमवनदेवकुलादिगमनासभाविमानमहेन्द्रजाल' का. १३. 'संभाव्यमान' ख. १४. '°निमिष' का. १५. 'प्रदानबन्ध' का. १६. 'हाकारचेलाङ्गुलि' क.; 'डाकारचेलाङ्गुलि' ख. १७. 'हाहाकारकरचरणाङ्गुलि' का. १८. 'व्यभिचारिभावाश्चास्य' का. १९. 'अश्रुस्तम्भ' का. २०. 'संभ्रमजडताप्रलापा भवत.' क-ख.; 'सभ्रमजडताप्रलयादय ' का. २१. 'शीलं' का. २२. 'च' का. २३. 'एभिस्त्वर्थविशेषै रसोऽद्भुतो नाम विशेय.' का.

स्पर्शग्रहोल्लुकसनैर्हाहाहारैश्च[1] साधुवादैश्च ।
वेपथुगद्गदवचनैः स्वेदाद्यैरभिनयस्तस्य ॥ ७७ ॥

[ इत्यद्भुतरसप्रकरणम् । ]

शृङ्गारं त्रिविधं विद्याद्वाङ्नेपथ्यक्रियात्मकम् ।
अङ्गनेपथ्यवाक्यैश्च हास्यरौद्रौ त्रिधा[2] स्मृतौ ॥ ७८ ॥
धर्मोपघातजश्चैव तथार्थापचयोद्भवः[3] ।
तथा शोककृतश्चैव करुणस्त्रिविधः स्मृतः ॥ ७९ ॥
दानवीरं धर्मवीरं युद्धवीरं तथैव च ।
रसं वीरमपि प्राह ब्रह्मा त्रिविधमेव हि ॥ ८० ॥
व्याजाच्चैवापराधाच्च वित्रासितकमेव च ।
पुनर्भयानकं चैव[4] विद्यात्त्रिविधमेव हि ॥ ८१ ॥
बीभत्सः क्षोभणैः[5] शुद्ध उद्वेगी स्यात्द्वितीयकः[6] ।
विष्ठाकृमिभिरुद्वेगी[7] क्षोभणो[8] रुधिरादिजः ॥ ८२ ॥
दिव्यश्चानन्दजश्चैव द्विधा ख्यातोऽद्भुतो रसः ।
दिव्यदर्शनजो[9] दिव्यो हर्षादानन्दजः स्मृतः ॥ ८३ ॥[10]

[ अथ शमो नाम शमस्थायिभावात्मको मोक्षप्रवर्तकः । स तु तत्त्वज्ञानवैराग्याशयशुद्ध्यादिभिर्विभावैः समुत्पद्यते । तस्य यमनियमाध्यात्मध्यानधारणोपासनसर्वभूतदयालिङ्गग्रहणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । व्यभिचारिणश्चास्य निर्वेदस्मृतिधृतिसर्वाश्रमशौचस्तम्भरोमाञ्चादयः । अत्रार्याः श्लोकाश्च भवन्ति—

---

१. 'स्पर्शग्रहोत्कहसनैः' का.; 'स्पर्शग्रहाल्लुकुत्सनैः हाहाकारैः........' क-ख.; 'साह्लादं धूननमुल्लूकसनम्' इत्यभिनवभारती. २. 'तथा' क-ख. ३. 'तथाल्पचयोद्भव' का. ४. 'चापि' का. ५. 'क्षोभज-' का. ६. 'तृतीयकः' का. ७. 'विष्ठाकमिति' ग.; 'विष्टाकमिति' ख. ८. 'क्षोभजो' का. ९. 'दिव्यदर्शनतो' ग. १०. इतः प्रभृति ग-पुस्तके कोष्ठनिबद्धोऽधिकः पाठः । क-ख-का-पुस्तकेषु न सन्ति शान्तरसप्रतिपादकाः श्लोका गद्यभागश्च.

मोक्षाध्यात्मसमुत्थस्तत्त्वज्ञानार्थहेतुसंयुक्तः ।
नैःश्रेयसोपदिष्टः शान्तरसो नाम संभवति ॥
बुद्धीन्द्रियकर्मेन्द्रियसंरोधाध्यात्मसंस्थितोपेतः ।
सर्वप्राणिसुखहितः शान्तरसो नाम विज्ञेयः ।
न यत्र दुःखं न सुखं न द्वेषो नापि मत्सरः ।
समः सर्वेषु भूतेषु स शान्तः प्रथितो रसः ॥
भावा विकारा रत्याद्याः शान्तस्तु प्रकृतिर्मतः ।
विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते ॥
स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते ।
पुनर्निमित्तापाये च शान्त एवोपलीयते ॥
एवं नवरसा[1] दृष्टा नाट्यज्ञैर्लक्षणान्विताः ।]

[इति शान्तरसप्रकरणम् ।]

एवमेते रसा ज्ञेयास्त्वष्टौ लक्षणलक्षिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि भावानामपि लक्षणम् ॥ ८४ ॥

इति श्रीभारतीये नाट्यशास्त्रे रसाध्यायः षष्ठः ।[2]

---

सप्तमोऽध्यायः ।

भावानिदानीं [3]व्याख्यास्यामः । [4]अत्राह—भावा इति कस्मात् । किं [5]भवन्तीति भावाः, किं [6]वा भावयन्तीति [7]भावाः । उच्यते—वागङ्गसत्त्वोपेतान्काव्यार्थान्भावयन्तीति भावा [8]इति । [9]भू इति करणे धातुः [10]तथा च भावितं

---

१. 'नव' च. २ 'इति भारतीये नाट्यशास्त्रे रसविकल्पो नाम षष्ठोऽध्यायः ।' का.. ३. 'वक्ष्यामः' क ख का. ४. 'अत्राह भावा इति कस्मात् । किं भवन्तीति भावाः' इति क-ख. पुस्तकयोर्नास्ति. ५ 'किं भवन्तीति भावाः ।' इति ख-पुस्तकेऽपि नास्ति. ६. 'वा' इति क ख-पुस्तकयोर्नास्ति ७. 'भावाः' इति क-ख पुस्तकयोर्नास्ति. ८. 'इति' इति क ख-का पुस्तकेषु नास्ति. ९. 'भू इति करणे धातुः' इति का-पुस्तके नास्ति. १०. 'तथाच' इति क-ख पुस्तकयोर्नास्ति, का पुस्तके तु—'भाव इति कारणसाधन यथा भावितो वासित कृत इत्यनर्थान्तरम् ।'.

[1]वासितं कृतमित्यनर्थान्तरम् । लोकेऽपि [2]च [3]सिद्धमहो [4]ह्यनेन गन्धेन रसेन वा सर्वमेव [5]भावितमिति । [6]तच्च व्याप्त्यर्थम् । श्लोकाश्चात्र भवन्ति—

[7]विभावैराहृतो [8]योऽर्थो ह्यनुभावैस्तु गम्यते ।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः ॥ १ ॥
वागङ्गमुख[9]रागेण [10]सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन्भाव उच्यते ॥ २ ॥
नानाभिनयसं[11]बद्धान्भावयन्ति रसानिमान् ।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥ ३ ॥

[12]अथ विभाव इति कस्मात् । उच्यते । विभावो [13]नाम विज्ञानार्थः । [14]विभावः कारणं निमित्तं हेतुरिति पर्यायाः । [15]विभाव्यन्तेऽनेन वागङ्गसत्त्वा[16]भिनया इति विभावः । [17]यथा विभावितं विज्ञातमित्य[18]नर्थान्तरम् ।
अत्र श्लोकः—

बहवोऽर्था विभाव्यन्ते वागङ्गा[19]भिनयाश्रयाः ।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः ॥ ४ ॥

अथानुभाव इति कस्मात् । उच्यते । [20]अनुभाव्यतेऽनेन वागङ्गसत्त्वकृतोऽभिनय इति । अत्र श्लोकः—

---

१. 'वासितं' इति क-ख-का-पुस्तकेषु नास्ति. २. 'च' इति का पुस्तके नास्ति. ३. 'सिद्धम्' क-ख. ४. 'ह्याननगन्धेन' क-ख.; 'ह्यन्योन्यगन्धेन' का. ५. 'इति' इति का-पुस्तके नास्ति. ६. 'उच्चव्याप्त्यर्थे' क-ख.; 'अपि च' का. ७. 'विभावेनोद्धृतो' क-ख.; 'विभावेनाहृतो' का. ८. 'योऽर्थस्त्वनुभावैश्च' क ख.; 'योऽर्थस्त्वनुभावेन' का. ९. '°रागैश्च' का. १०. 'सान्त्वनाभिनयन' क-ख. ११. 'सबन्धान्' का. १२. 'अथ' इति क-ख का-पुस्तकेषु नास्ति. १३. 'नाम' इति क-ख का-पुस्तकेषु नास्ति. १४. 'विभाव' इत्यादि क-ख-पुस्तकयोर्नास्ति. १५. 'विभाव्यते' ख. १६. '°भिनय इति विभाव.' ख. १७. 'यथा' इति क ख-पुस्तकयोर्नास्ति. १८. 'इत्यर्थान्तरम्' का. १९. '°भिनयाश्रिताः' का. २०. 'यदयमनुभावयति वागङ्गसत्त्वकृतमभिनयम् ।' क-ख.; 'यदयमनुभावयति नानार्थाभिनिष्पन्नो वागङ्गसत्त्वैः कृतोऽभिनय' इति का.

वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते ।
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ॥ ५ ॥

एवं ते विभावानुभावसंयुक्ता भावा इति व्याख्याताः । अतो ह्येषां भावानां सिद्धिर्भवति । तस्मादेषां भावानां विभावानुभावसंयुक्तानां लक्षणनिदर्शनान्यभिव्याख्यास्यामः—तत्र विभावानुभावौ लोकप्रसिद्धौ । लोकस्वभावानुगतत्वाच्च तयोर्लक्षणं नोच्यतेऽतिप्रसङ्गनिवृत्त्यर्थम् । भवति चात्र श्लोकः—

लोकस्वभावसंसिद्धा लोकयात्रानुगामिनः ।
अनुभावा विभावाश्च ज्ञेयास्त्वभिनये बुधैः ॥ ६ ॥

तत्राष्टौ भावाः स्थायिनः । त्रयस्त्रिंशद्व्यभिचारिणः । अष्टौ सात्त्विका [13]इति त्रिभेदाः । एवमेते काव्यरसाभिव्यक्तिहेतव एकोनपञ्चाशद्भावाः प्रत्यवगन्तव्याः । एभ्यश्च सामान्यगुणयोगेन रसा निष्पद्यन्ते । भवति चात्र श्लोकः—

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।
शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥ ७ ॥

अत्राह—यदि काव्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैरेकोनपञ्चाशद्भावैः सामान्यगुणयोगेनाभिनिष्पद्यन्ते रसाः, तत्कथं स्थायिन एव भावा रसत्वमाप्नुवन्ति । उच्यते—यथा हि समानलक्षणास्तुल्यपाणिपादोदरशरीरा.

---

१. 'वागङ्गसत्त्वाभिनयैर्यस्मादर्थो विभाव्यते' इति क-ख. २. 'वागङ्गोपाङ्ग' क-ख-का. ३. 'इति' क-ख. ४. 'एव ते' इत्यारभ्य 'सिद्धिर्भवति' इत्यन्तं पाठः क-ख-का-पुस्तकेषु नास्ति ५. 'एवमेतेषां' क-ख.; 'एतेषां' का. ६. 'लोकस्वभावोपगतत्वात्' क-ख-का. ७. 'अनयो' क-ख.; 'चैषां' का. ८. 'निवृत्त्यर्थं' क ख.; 'निवृत्त्यर्थं च' का. ९. 'भवति च' इति क-ख पुस्तकयोर्नास्ति. १०. '°यायिन' का. ११. 'अनुभावविभावाश्च' का. १२. 'अभिनये' क-ख-का. १३. 'इति त्रिभेदा' इति क-ख पुस्तकयोर्नास्ति. 'इति भेदा' इति का. १४. 'भवति च' इति ख पुस्तके नास्ति. १५. 'शुष्ककाष्ठं' क-ख. १६. 'यदान्यान्यर्थसंभूते' क-ख.; 'यदान्योन्यार्थसंश्रितै' का. १७. 'एकोनपञ्चाशता' क-ख. १८. 'कथमिदानीमेते स्थायिनोऽष्टौ' का. १९. 'मानभावा' ख. २०. 'इति' इत्यादिकं क-पुस्तकेऽस्ति. २१. 'पादोदरसमाना' का.

[१]समानाङ्गप्रत्यङ्गा [२]अपि पुरुषाः [३]कुलशीलविद्याकर्मशिल्पविचक्षण[४]त्वाद्राजत्वमाप्नुवन्ति तत्रैव [५]चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति । [६]बह्वाश्रयत्वात्स्वामि[७]भूताः स्थायिनो भावाः । [८]तद्वत्स्थानीयपुरुष[९]गुणभूता अन्ये भावास्तान्गुणतया आश्र[१०]यन्ते [११]परिजनभूता व्यभिचारिणो भावाः । [१२]अत्राह को दृष्टान्त इति । यथा नरेन्द्रो बहुजनपरिवारोऽपि [१३]सन् स एव नाम लभते नान्यः सुमहानपि पुरुषस्तथा विभावानुभावव्यभिचारि[१४]परिवृतः [१५]स्थायी भावो रसनाम [१६]लभते ।

[१७]भवति चात्र श्लोकः—

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
एवं हि सर्वभावानां भावः स्थायी महानिह ॥ ८ ॥

[१८]लक्षणं खलु पूर्वमभिहितमे[१९]षां रससंज्ञकानां [२०]निदर्शनं तु । इदानीं [२१]भावसामान्यलक्षणमभिधास्यामः । [२२]तत्र स्थायिभावान् वक्ष्यामः ।

[२३]रतिर्नाम [२४]प्रमोदात्मिका [२५]ऋतुमाल्यानुलेपनाभरणभोजन[२६]वरभवनानुभव-

---

१. 'समानप्रत्यया.' का. २. 'अपि पुरुषा.' इति क-ख पुस्तकयोर्नास्ति. ३. '°शील°' इति क ख-पुस्तकयोर्नास्ति. ४. '°विचक्षणत्वयुक्ता' का. ५. 'उपास्हता' क. ६. 'इत्याश्रयत्वात्' का. ७. 'स्वामिभूताश्च' का. ८. 'तद्वत् स्थायिनि वपुषि गुणीभूता.' का.; 'तत्स्थानीय' का. ९. 'गुणवत्तया' का. १०. 'श्रयन्ते' का. ११. [ स्थायिभावा रसत्वमाप्नुवन्ति ] इत्यधिकः पाठो च-पुस्तकेऽत्र. १२. 'अत्राह' इति का-पुस्तके नास्ति. 'अत्राह को दृष्टान्त इति' क-ख-पुस्तकयोर्नास्ति. १३. 'सन्' इति का-पुस्तके नास्ति. १४. 'परिष्कृतः' क-ख. १५. 'स्थायिभावो रसवी' क-ख. १६. 'नरेन्द्रवत्' इति का-पुस्तकेऽधिकः पाठः । १७. 'भवति चात्र श्लोक' इति क ख पुस्तकयोर्नास्ति. १८. क-ख-पुस्तकयोरत्र 'हासो नाम' इत्याद्ग्रेतनः पाठः 'अभिनेयः सपण्डितैः' इत्यन्तोऽत्र प्रतिविष्टः । ततश्च 'रतिर्नामेत्यादि' पाठः, 'लक्षणं खलु' इत्यादिसंदर्भश्च क-ख-पुस्तकयोर्नास्त्येव. १९. 'एतेषां' का. २०. 'निदर्शनं तु' इति का-पुस्तके नास्ति. २१. 'इदानी तु' का. २२. 'तत्रादौ स्थायिभावान् व्याख्यास्यामः' का. २३. 'अत्र रतिर्नास्ति.' का. २४. 'प्रमोदात्मिका' इति क-ख-पुस्तकयोर्नास्ति. का-पुस्तके तु 'आमोदात्मको भावः.' २५. 'ऋतुमाल्यालेपना°' क-ख. २६. '°भोजनवरभावानुभवना' क-ख.; '°प्रियजनपरभवनानुभवना°' का.

नामातिकूल्यादिभिर्विभावैः समुत्पद्यते[1] तामभिनयेत् । स्मित[2]वदनमधुरकथनभ्रूक्षेपकटाक्षादिभिरनुभावैः ।

अत्र[3] श्लोकः—

इष्टार्थविषयप्राप्त्या रतिः[4] समुपजायते ।
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः ॥ ९ ॥

हासो[5] नाम—परचेष्टानुकरणकुहक[6]ासंबद्धप्रलापपौरोभाग्यमौर्ख्या[7]दिभिर्विभावैः समुत्पद्यते । तमभिनयेत् पूर्वोक्तैर्हसितादिभिरनुभावैः[8] ॥

भवति चात्र श्लोकः—

परचेष्टानुकरणाद्धासः समुपजायते ।
स्मितहासातिहसितैरभिनेयः स पण्डितैः ॥ १० ॥

शोको नाम—इष्टजनवियोगविभवनाशवधबन्धे[9]दुःखानुभवना[10]दिभिर्विभावैः समुत्पद्यते[11] । तस्याश्रु[12]पातपरिदेवित[13]विलपितवैवर्ण्यस्वरभेदस्रस्तगात्रताभूमिपतन[14]सस्वनरुदिताक्रन्दितदीर्घनिःश्वसितजडतोन्मादमोहमरणादिभिरनुभावैरभिनयः प्रयोक्तव्यः । रुदितमत्र त्रिविधम्—आनन्दजमार्तिजमीर्ष्यासमु[15]द्भवं चेति । भवन्ति[16] चात्रार्याः—

हर्षो[17]त्फुल्लकपोलं सानुस्मरणादपाङ्गविस्रस्ता[18]स्रम् ।
रोमाञ्च[19]गात्रमनिभृतमानन्दसमुद्भवं भवति ॥ ११ ॥

१. 'उत्पद्यते' क-ख. २. 'स्मितमधुरवचन' क-ख.; 'स्मितवचनमधुरवचन' का. ३. 'भवति चात्र' क-ख-का. ४. 'रतिरित्युपजायते' क-ख-का. ५. 'तत्र हासो नाम' क-ख.; 'अथ हासो नाम' का. ६. 'कुहक' इति क-ख-का पुस्तकेषु नास्ति. ७. 'सौख्यादिभिरनुभावैरुत्पद्यते' इति क-ख-का. ८. 'अनुभावैः' इति क-ख का पुस्तकेषु नास्ति. ९. 'बन्धन' क-ख. १०. 'दुःखानुभावादिभि.' क-ख. ११. 'उत्पद्यते' क-ख-का. १२. 'अस्रपात' ख. १३. 'विलपितपरिदेवित' क-ख का. १४. 'भूमिपाताक्रन्दितदीर्घनिःश्वसितादिभि.' क-ख.; 'भूमिपाताक्रन्दितविचेष्टितदीर्घनिःश्वसितजडतोन्माद–'इत्यादि का. १५. 'ईर्ष्याकृतं चेति' क-ख.; 'ईर्ष्यासमुद्भवं चेति.' का. १६. 'तत्र–इति' क-ख.; 'तत्रार्या.' का. १७. [आनन्देर्ष्यार्तिकृतं त्रिविधं रुदितं सदा बुधैर्ज्ञेयम् । तस्य त्वभिनययोगान् विभावगतितः प्रवक्ष्यामि ॥] इति कोष्ठनिबद्धा प्रक्षिप्तरूपत्वेनाभिमतार्या ख-पुस्तके. १८. 'निस्रस्तास्रं' क-ख. १९. 'रोमाञ्चपुलकसङ्कुलं' क-ख.; 'रोमाञ्चाञ्चितगण्डरोदनं' का.

पर्यस्तविमुक्तास्रं सस्वनमस्रस्तगात्रगतिचेष्टम् ।
भूमिनिपातनिवर्तितविलपितमित्यार्तिजं भवति ॥ १२ ॥

प्रस्फुरितोष्ठकपोलं सशिरःकम्पं तथा सनिःश्वासम् ।
भ्रुकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति ॥ १३ ॥

स्त्रीनीचप्रकृतिष्वेवं शोको व्यसनसंभवः ।
धैर्येणोत्तममध्यानां नीचानां रुदितेन च ॥ १४ ॥

क्रोधो नाम—आधर्षणाक्रुष्टकलहविवादप्रतिकूलादिभिर्विभावैः समुत्पद्यते । अस्य विरुष्टनासापुटोद्वृत्तनयनसंदष्टोष्ठपुटगण्डस्फुरणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

रिपुजो गुरुजश्चैव प्रणयिप्रभवस्तथा ।
भृत्यजः कृतकश्चेति क्रोधः पञ्चविधः स्मृतः ॥ १५ ॥

भ्रुकुटीकुटिलोत्कटमुखसंदष्टोष्ठः स्पृशन्करेण करम् ।
क्रुद्धः स्वभुजप्रेक्षी शत्रौ निर्यन्त्रणं रुष्येत् ॥ १६ ॥

किंचिदवाङ्मुखदृष्टिः सास्रः स्वेदापमार्जनपरश्च ।
अव्यक्तोल्बणचेष्टो गुरौ विनयैयन्त्रितो रुष्येत् ॥ १७ ॥

---

१. 'भूमिनिपातविवर्तित' क-ख.; 'भूमिनिपातितचेष्टित°' का. २. 'प्रस्फुरितोष्ठ' क-ख-का. ३. 'सनिःस्वानम्' क-ख. ४. का-पुस्तके-'कारणमपेक्षमाणः प्रायेणासत्त्विसंयुक्तः । वीररसान्तरचारी कार्यैः कृतको भवेच्छोकः ॥ भवति श्लोकः—' इत्यधिकः पाठः. ५. 'स्त्रीनीचप्रकृतिष्वेव' । क-ख.; 'स्त्रीनीचप्रकृतिर्द्वेप' का. ६. 'आधर्षणाक्रुष्टविवादकलह°' क-ख. ७. 'उत्पद्यते' क-ख-का. ८. 'तमभिनयेदुत्फुल्लनासापुटोद्वृत्तनयनसंदष्टोष्ठपुटगण्डस्फुरणादिभिः' क-ख.; 'तमभिनयेत् उत्फुल्लनासापुटोद्वृत्तनयनसंदष्टोष्ठपुटगण्डस्फुरणादिभिरनुभावैः ।' का. ९. '······कुटिलोत्कटमुखः' क-ख.; 'भ्रुकुटिकुटिलोत्कटमुखः' का. १०. 'संदष्टोष्ठः' क-ख-का. ११. 'दृष्टः' क-ख.; 'स्पृष्टभुजशिरवक्षाः' क. १२. 'शत्रोर्निर्यन्त्रणं रुष्येत्' क-ख.; 'शत्रोर्विनियन्त्रणं कुप्येत्' का. १३. 'दृष्टि' क-ख. १४. 'किंचित्स्वेदापमार्जनपरस्त' क-ख.; 'किंचित्स्वेदापमार्जनपरं च' का. १५. 'गुरोर्विनायमन्त्रितो' (!) क-ख.; 'गुरोर्विनियन्त्रणं' का.

अल्पतरप्रविचारो विकिरन्नश्रूण्यपाङ्गविक्षेपैः।
सभ्रुकुटीस्फुरितोष्ठः प्रणयोपगतां प्रियां रुष्येत् ॥ १८ ॥
अथ परिजने तु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारैः।
विप्रेक्षणैश्च विविधैरभिनेयः क्रूरतारहितः ॥ १९ ॥
कारणमपेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः।
वीररसान्तरचारी कार्यः कृतको भवति कोपः ॥ २० ॥

उत्साहो नाम—उत्तमप्रकृतिः। स चाविषादशक्तिधैर्यशौर्यादिभिर्विभावैरुत्पद्यते। तस्य स्थैर्यधैर्यत्यागवैशारद्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः। अत्र श्लोकः—

असंमोहादिभिर्व्यक्तो व्यवसायनयात्मकः।
उत्साहस्त्वभिनेयः स्यादप्रमादोत्थितादिभिः ॥ २१ ॥

भयं नाम—स्त्रीनीचप्रकृतिकम्। गुरुराजापराधश्वापदशून्यागाराटवीपर्वतगहनगजाहिदर्शननिर्भर्त्सनकान्तारदुर्दिननिशान्धकारोलूकनक्तंचरारावश्रवणादिभिर्विभावैः समुत्पद्यते। तस्य प्रकम्पितकरचरणहृदयकम्पनस्तम्भमुखशोषजिह्वापरिलेहनस्वेदवेपथुत्रासपरित्राणान्वेषणधावनोत्क्रुष्टादिभिरनुभावैरभिनयः प्रयोक्तव्यः।

---

१. 'विरहन्' क-ख. २. 'सभ्रूकुटिस्फुरितोष्ठं प्रणयोपगतां प्रिया रुष्येद्' क ख.; 'सभ्रुकुटीस्फुरिदोष्ठ' प्रणयाभिगतां प्रिया कुप्येत्' का. ३. 'यः परिजने' का. ४. 'तु' क-ख. ५. 'तस्याभिनय. प्रयोक्तव्य' का.; 'उभयरसान्तरचारी' ग. ६. 'प्रायेणास' क-ख. ७. 'द्विरसान्तरसंचारी' क-ख. ८. 'कार्ये कृतको भवेद्दोष.' क-ख.; 'कार्यः कृतको भवेद्दोप.' का. ९. 'शौर्यत्यागादिभिः' का. १०. 'तस्य धैर्यत्यागवैशारद्यादिभि.' क-ख.; ११. 'तस्य धैर्यत्यागारम्भवैशारद्यादिभिः' का. १२. 'अनुभावैः' इति क ख पुस्तकयोर्नास्ति. १३. 'व्यवसायमयात्मक' क-ख. १४. 'त्वभिनेयोऽसावप्रमादक्रियादिभिः' क-ख का. १५. 'श्वापद' इति क-ख-का-पुस्तकेषु नास्ति. १६. '°गहनगजाहि' इति क ख का-पुस्तकेषु नास्ति. १७. 'कान्तार' इति का-पुस्तके नास्ति. १८. 'काकोलूक' क-ख-का. १९. 'उत्पद्यते' क-ख-का. २०. 'प्रवेपित' क ख का. २१. 'शोषण' का. २२. 'परिलेह' का. २३. 'त्रास' इति क ख का-पुस्तकेषु नास्ति. २४. 'परित्राणान्वेषण' का. २५. 'धावनोत्क्रुष्टोत्कटादिभिः' ख.

अत्र श्लोकाः—

गुरुराजापराधेन रौद्राणां चापि दर्शनात् ।
श्रवणादपि घोराणां भयं मोहेन जायते ॥ २२ ॥
गात्रकम्पन[1]वित्रासैर्वक्त्रशोषणसंभ्रमैः ।
वि[2]स्फारितेक्षणैः कार्यमभिनेय[3]क्रियागुणैः ॥ २३ ॥
स[4]त्त्ववित्रासनोद्भूतं भयमुत्पद्यते नृणाम् ।
स्तम्भाङ्गाक्षिनिमेषैस्त[5]दभिनेयं तु नर्तकैः ॥ २४ ॥

अत्रार्या[6]—

क[7]रचरणहृदयकम्पैः स्तम्भनजिह्वोपलेहमुखशोषैः ।
स्रस्तसुविषण्णगात्रैर[8]स्याभिनयः प्रयोक्तव्यः ॥ २५ ॥

जुगुप्सा नाम—स्त्रीनीचप्रकृतिका[9] । सा[10] चाहृ[11]द्यदर्शनश्रवणपरिकीर्तनादिभिर्विभावैः समुत्पद्यते । तस्याः सर्वाङ्गसंकोचने[12]न निष्ठीवने[13]न मुखविकूणन[14]हृल्लेखादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

भवति[15] चात्र[16] श्लोकः—

नासाप्रच्छादनेनेह[17] गात्रसंकोचनेन च ।
उद्वेजनैः सहृल्लेखैर्जुगुप्सामभिनिर्दिशेत् ॥ २६ ॥

---

१. 'गात्रादिकम्पवित्रासै.' का. २. 'विस्फारितेक्षणै' का. ३. 'अभिनेय.' का. ४. 'तत्र' का. ५. '°निमेषैश्च व्यभिनेयस्तु' का. ६. 'अत्रार्या भवति' इति च. पुस्तकेऽधिकम्. ७. 'करचरणहृदयकम्पैर्मुखशोषणवदनलेहनस्तम्भैः । संभ्रान्तवदनवेपथुसन्नासक्तैरभिनयोऽस्य ॥' इति च पुस्तके. ८. 'अस्य' का. ९. 'स्त्रीनीचप्रकृति.' क-ख. १०. 'या' इति का. ११. 'चाहृद्यश्रवणदर्शनादिभिर्विभावैरुत्पद्यते' क-ख-का. १२. 'संकोच' च. १३. 'निष्ठोनिज' (?) क-ख. १४. 'विघूर्णन' का. १५. 'पठत्यपि च' क ख.; 'भवत्यत्रापि श्लोक' का. १६. '°त्रापि' का. १७. 'उत्तमेनाधरे. साध्यः प्रहर्षपुलकादिभि-' क ख.; 'उद्वेजनैश्च हृल्लेखैर्जुगुप्सामपि निर्दिशेत्' का.

गदितैः क्षामक्षामैर्नेत्रविकारैश्च दीनसंचारैः ।
श्लथभावेनाङ्गानां मुहुर्मुहुर्निर्दिशेद् ग्लानिम् ॥ ३२ ॥

शङ्का नाम—सदेहात्मिका स्त्रीनीचप्रभवा । चौर्याभिग्रहणनृपापराधपापकर्मकरणादिभिर्विभावैः समुत्पद्यते । तस्या मुहुर्मुहुरवलोकनावगुण्ठनमुखशोषणजिह्वापरिलेहनमुखवैवर्ण्यस्वरभेदवेपथुशुष्कोष्ठकण्ठायाससाधर्म्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

चौर्यादिजनिता शङ्का प्रायः कार्या भयानके ।
प्रियव्यलीकजनिता तथा शृङ्गारिणी मता ॥ ३३ ॥

अत्राकारसंवरणमपि केचिदिच्छन्ति । तच्च कुशलैरुपाधिभिरिङ्गितैश्चोपलक्ष्यम् । अत्रार्ये भवतः—

द्विविधा शङ्का कार्या ह्यात्मसमुत्था च परसमुत्था च ।
या तत्रात्मसमुत्था सा ज्ञेया दृष्टिचेष्टाभिः ॥ ३४ ॥
किंचित्प्रवेपिताङ्गस्त्वधोमुखो वीक्षते च पार्श्वानि ।
गुरुसज्जमानजिह्वः श्यावास्यः शङ्कितः पुरुषः ॥ ३५ ॥

असूया नाम—नानापराधद्वेषपरैश्वर्यसौभाग्यमेधाविद्यालीलादिभिर्विभावैः समुत्पद्यते । तस्याश्च परिषदि दोषप्रख्यापनगुणोपघातेर्ष्याचक्षुःप्रदानाधो-

१. 'श्लथभावाच्चाङ्गानां' का. २. 'सदेहात्मिका स्त्रीनीचप्रभवा' इति क-ख-का-पुस्तकेष्वत्र नास्ति. ३. 'चौर्याभिग्रह' क-ख.; 'चौर्याद्यभिग्रहण' का. ४. 'इतोऽग्रे क-ख-का-पुस्तकेषु 'सदेहात्मिका स्त्रीनीचानाम्' अत्र वर्तते. ५. 'सा च' क-ख-का. ६. '°वकुण्ठन' ख.; '°वकुण्ठिन' का. ७. 'मुखवर्णभेदवेपथुशुष्कोष्ठकण्ठायाससाधर्म्यादिभिरनुभावैरभिनीयते' क-ख.; 'मुखवैवर्ण्यवेपनशुष्कोष्ठकण्ठावसादादिभिरनुभावैरभिनीयते ।' का. ८. 'अत्र श्लोक' इत्यधिकमत्र का-पुस्तके. ९. '......र्व्यलीकजनिता' क-ख. १०. 'तत्र' का. ११. '°संवरणमीच्छन्तीति' केचित् ख. १२. 'च' इत्यधिकं क-ख-पुस्तकयोः. १३. 'भवत.' इति नास्ति क-ख-पुस्तकयोः. १४. 'तत्र परसमुत्था' क-ख. १५. 'तथोन्मुखो' क-ख. 'मुहुर्मुहु' का. १६. 'सगुरु' (?) क-ख. १७. 'श्यामास्य' क-ख.; 'श्यावास्य.' (?) का. १८. 'सौभाग्यलीलाविद्यादिभि' का. १९. 'उत्पद्यते' क-ख-का. २०. 'दोषप्रख्यापनं' का. २१. 'गुणोपघातचक्षुःप्रदाना' क-ख.; 'गुणोपघातनाचक्षुःप्रदानाधोमुखभ्रुकुटिक्रियावज्ञान°—' का.

मुखभ्रुकुटीक्रियावर्ज्ञानकुत्सनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्ये भवतः—

परसौभाग्येश्वरतामेधालीलासमुच्छ्रैयान्दृष्ट्वा ।
उत्पद्यते ह्यसूया कृतापराधो भवेद्यश्च ॥ ३६ ॥

भ्रुकुटिकुटिलोत्कटमुखैः सेर्ष्याक्रोधपरिवृत्तनेत्रैश्च[6] ।
गुणनाशनविद्वेषैस्तत्राभिनयः प्रयोक्तव्यः ॥ ३७ ॥

मदो नाम—मद्योपयोगादुत्पद्यते । स च त्रिविधः पञ्चविधभावश्च ।
अत्रार्या भवन्ति—

ज्ञेयस्तु मदस्त्रिविधस्तरुणो मध्यस्तथावकृष्टश्च ।
करणं पञ्चविधं स्यात्तस्याभिनयः प्रयोक्तव्यः ॥ ३८ ॥
कश्चिन्मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित् ।
परुषवचनाभिधायी कश्चित्कश्चित्तथा स्वपिति ॥ ३९ ॥
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः ।
परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः ॥ ४० ॥
स्मितवदनमधुररागो हृष्टतनुः किंचिदाकुलितवाक्यः ।
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः ॥ ४१ ॥
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः ।
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमप्रकृतिः ॥ ४२ ॥
नष्टस्मृतिर्हतगतिश्छर्दितहिक्काकफैः सुबीभत्सः ।
गुरुसज्जमानजिह्वो निष्ठीवति[14] चाधमप्रकृतिः ॥ ४३ ॥

---

१. '°वज्ञात' क-ख. २. 'समुच्छ्रयं' का. ३. 'अभिनेतव्यासूया' क ख. ४. 'यस्तु' क ख. ५ '°मुखसेर्ष्या°' का. ६. 'परिवर्तिभिश्चिनै.' क-ख.; 'परिवृत्त-पक्ष्मै.' क-ख. ७. 'तस्या. कार्य सदाभिनय.' क ख.; '°रस्याभिनय प्रयोक्तव्य.' का. ८. 'अथ मदो नाम' का., 'उच्यते' क.; 'उच्यते' ख. ९. 'पञ्चविभावश्च' ख. १०. 'त्रिविधस्तु मदः कार्य' क-ख-का. ११. 'रागोद्धृष्टतनु' क-ख.; 'धृष्टतनु' का. १२ 'सुकुमारो' क ख. १३. 'हतश्च च्छर्दित' क ख. १४. 'निष्ठंचति (?) मध्यमप्रकृति' क-ख.

रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य ।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः [1]स्यात् ॥ ४४ ॥
सं[2]त्रासाच्छोकाद्वा भया[3]त्प्रहर्षाच्च कारणोपगतः ।
उत्क्रम्यापि हि कार्यो मदप्रणा[5]शस्तथा तज्ज्ञैः ॥ ४५ ॥
एभिर्भावविशेषैर्मदो द्रुतं संप्रणाशमुपयाति ।
अभ्युद[6]यसुखैर्वाक्यैस्तथै[7]वं शोकः क्षयं याति ॥ ४६ ॥

श्रमो नाम—अ[8]ध्वव्यायामसेवनादिभिर्विभावैः समु[9]त्पद्यते । त[10]स्य गात्रपरिमर्दनसंवाहननिःश्वसितविजृम्भितमन्दपदोत्क्षेपणनयनवदनविकूणनसीत्कारादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या—

[11]दूराध्वव्यायामान्नरस्य संजायते श्रमो नाम ।
निःश्वासखेदगमनैस्तस्याभिनयः प्रयोक्तव्यः ॥ ४७ ॥

आलस्यं नाम—खेद[12]व्याधिगर्भस्वभावश्रमसौहित्यादिभिर्विभावैः समुत्पद्यते स्त्रीनीचानाम् । तदभिनयेत्सर्वक[13]र्मानभिलाषशयनासने[14]निद्रातन्द्रीसेवनादिभिरनु[15]भावैः । अत्रार्या—

आलस्यं त्वभिनेयं [16]खेदोपगतं स्वभावजं वापि ।
आहारवर्जितानामारम्भाणामनारम्भात् ॥ ४८ ॥

---

१. 'प्रविष्टस्य ते' (?) क-ख. २. 'सत्रासात्' क-ग. ३. 'भयाच्च हर्षाच्च' क-ख.; 'भयप्रकर्षाच्च' का. ४. 'वक्रोत्त्यापि हि' क-ख.; 'उद्यम्यापि हि' का. ५ 'तयोनङ्गै.' (?) क-ग. ६. 'अभ्युदयैसुखै' (?) क-ग. ७. 'यथैव शोका. क्षयं यान्ति' ग. ८. 'अर्थ' क-ख.; 'अध्वगति' क-ग. ९. 'उत्पद्यते' का. १०. 'तस्य गात्रसंवाहननिश्वसित-मुखविकूणनविजृम्भणाङ्गमर्दमन्दपादोत्क्षेपणादिभिरनुभावैरभिनय प्रयोक्तव्य ' क-ग.; 'तस्य गात्रसंवाहननिःश्वसितमुखविघूर्णनजृम्भणाङ्गमर्दनमन्दपादोत्क्षेपणनयनविघूर्णनसीत्कारादिभिरनुभावैरभिनयः प्रयोक्तव्यः' का. ११. सेयमार्या क-ग पुस्तकयोर्नास्त्येव. का-पुस्तके च 'अध्वगतिव्यायामे ' इति पाठभेदः. १२. 'स्वभावखेदश्रमव्याधिसौहित्यगर्भादिभिः' क-ख.; 'स्वभावखेदव्याधिसौहित्यगर्भादिभिर्विभावै.' का. १३. '°विद्वेष°' क-ग.; '°प्रद्वेष°' का. १४. '°तन्द्रीनिद्रा°' क-ख.; '°तन्द्रा निद्रा°' का. १५. 'अनुभावै ' इति क-ग पुस्तकयोर्नास्ति. १६. 'खेदव्याधिस्वभावजं वापि' का.

दैन्यं नाम—दौर्गत्यमनस्तापादिभिर्विभावैः समुत्पद्यते । तस्याधृतिशिरोरोगगात्रगौरवान्यमनस्कतामृजापरिवर्जनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्या—

चिन्तौत्सुक्यसमुत्था दुःखाद्या भवति दीनता पुंसाम् ।
सर्वैर्मृजापरिमार्जनैर्विविधैरभिनयस्तस्य ॥ ४९ ॥

चिन्ता नाम—ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैः समुत्पद्यते । तामभिनयेन्निःश्वसितोच्छ्वसितसंतापध्यानाधोमुखचिन्तनकार्श्यादिभिरनुभावैः । अत्रार्ये भवतः—

ऐश्वर्यभ्रंशेष्टद्रव्यक्षयजा जनिता बहुप्रकारा तु ।
हृदयवितर्कोपगता चिन्ता नृणां समुद्भवति ॥ ५० ॥
सोच्छ्वासैर्निःश्वसितैः संतापैश्चैव हृदयशून्यतया ।
अभिनेतव्या चिन्ता मृजाविहीनैर्धृत्या च ॥ ५१ ॥

मोहो नाम—दैवोपघातव्यसनाभिघातव्याधिभयावेगपूर्ववैरानुस्मरणादिभिर्विभावैः समुत्पद्यते । तस्य निश्चेतनभ्रमणपतनाघूर्णनादर्शनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

१. 'मन. सतापादिभि.' का. २. 'उत्पद्यते' का. ३. 'तथाधृतिशिरोगात्रगौरवमृजापरिवर्जनादिभिरनुभावैरभिनेतव्यम्' क ख. ४. '°गात्रस्तम्भमन.स्तम्भमृजापरिवर्णनादिभिरनुभावैरभिनयः प्रयोक्तव्य.' का. ५. 'चित्तौत्सुक्य' क-ख. ६. '°समुत्थाद्दु.खाद्धि दीनता भवेत् पुंसाम्' का. ७. 'सर्वमृजानां परिमार्जनैश्च' क-ख.; 'सर्वमृजापरिहारै.' का. ८. 'विविधैरभिनयोऽस्या.' क ख. 'विविधोऽभिनयो भवेत्तस्य' का. ९. 'भृंशेष्ट°' क-ख.; 'भ्रष्टेष्ट' का. १०. 'समुत्पद्यते' क-ख. ११. 'उच्छ्वसित' इति क ख-पुस्तकयोर्नास्ति. १२. 'भवत.' इति क-ख-पुस्तकयोर्नास्ति. १३. 'ऐश्वर्ये द्रव्यापहारे' इति क-ख-पुस्तकद्वयेऽप्यशुद्धैवेयमार्या. 'ऐश्वर्येष्टद्रव्यापहार' का. १४. 'हृदयोत्सुक्योपगता चिन्ता तु' का. १५. 'चिन्ता' इति क-ख पुस्तकयोस्त्रुटितम्' १६. 'सोच्छ्वसितैर्नि.श्वसितै.' क-ख. १७. 'मृजाविहीनेन धृत्या च' क-ख. १८. 'व्यसनव्याधिभयावेगपूर्ववैरस्मरणादिभि.' का. १९. '°व्याधि°' इति क-ख-पुस्तकयोर्नास्ति. २०. 'उत्पद्यते' क-ख. २१. 'निश्चेष्टिताङ्गभ्रमणापतनघूर्णनदर्शनादिभिः' का. २२. 'घूर्णनदर्शनादिभिः' क-ख. २३. 'अनुभावैः' इति क-ख-पुस्तकयोर्नास्ति.

रङ्गे पिबतः कार्यो मदवृद्धिर्नाट्ययोगमासाद्य ।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः स्यात् ॥ ४४ ॥
संत्रासाच्छोकाद्वा भयात्प्रहर्षाच्च कारणोपगतः ।
उत्क्रम्यापि हि कार्यो मदप्रणाशस्तथा तज्ज्ञैः ॥ ४५ ॥
एभिर्भावविशेषैर्मदो द्रुतं संप्रणाशमुपयाति ।
अभ्युदयसुखैर्वाक्यैस्तथैव शोकः क्षयं याति ॥ ४६ ॥

श्रमो नाम—अध्वव्यायामसेवनादिभिर्विभावैः समुत्पद्यते । तस्य गात्रपरिमर्दनसंवाहननिःश्वसितविजृम्भितमन्दपदोत्क्षेपणनयनवदनविकूणनसीत्कारादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

अत्रार्या—

नृत्ताध्वव्यायामान्नरस्य संजायते श्रमो नाम ।
निःश्वासखेदगमनैस्तस्याभिनयः प्रयोक्तव्यः ॥ ४७ ॥

आलस्यं नाम—खेदव्याधिगर्भस्वभावश्रमसौहित्यादिभिर्विभावैः समुत्पद्यते स्त्रीनीचानाम् । तदभिनयेत्सर्वकर्मानभिलाषशयनासननिद्रातन्द्रीसेवनादिभिरनुभावैः । अत्रार्या—

आलस्यं त्वभिनेयं खेदोपगतं स्वभावजं वापि ।
आहारवर्जितानामारम्भाणामनारम्भात् ॥ ४८ ॥

१. 'प्रविष्टस्य वै' (?) क-ख. २. 'सत्रासात्' क-ख. ३. 'भयाच्च हर्षाच्च' क-ख; 'भयप्रकर्षाच्च' का. ४. 'वक्रोत्क्यापि हि' क-ख.; 'उद्यम्यापि हि' का. ५ 'तयोनद्रे' (?) क-ख. ६. 'अभ्युदयैर्मुखे' (?) क-ख. ७. 'यथैव शोकाः क्षयं यान्ति' ग. ८. 'अर्ध' क-ख.; 'अध्वगति' क-ख. ९. 'उत्पद्यते' का. १०. 'तस्य गात्रसंवाहननिश्वसितमुखविकूणनविजृम्भणाङ्गमर्दमन्दपादोत्क्षेपणादिभिरनुभावैरभिनय प्रयोक्तव्य' क-ख.; 'तस्य गात्रसंवाहननि श्वसितमुखविघूर्णनजृम्भणाङ्गमर्दनमन्दपादोत्क्षेपणनयनविघूर्णनसीत्कारादिभिरनुभावैरभिनय प्रयोक्तव्य' का. ११. शेषमार्या क-ख पुस्तकयोर्नास्त्येव. का पुस्तके च 'अध्वगतिव्यायामै' इति पाठभेदः. १२. 'स्वभावखेदश्रमव्याधिसौहित्यगर्भादिभि.' क-ख.; 'स्वभावखेदव्याधिसौहित्यगर्भादिभिर्विभावै' का. १३. '°विद्वेष°' क-ख.; '°प्रद्वेष°' का. १४. '°तन्द्रीनिद्रा°' क-ख.; '°तन्द्रा निद्रा°' का. १५. 'अनुभावै' इति क-ख पुस्तकयोर्नास्ति. १६. 'खेदव्याधिस्वभावजं वापि' का.

दैन्यं नाम—दौर्गत्यमनस्तापादिभिर्विभावैः समुत्पद्यते । तस्याधृतिशिरोरोगगात्रगौरवान्यमनस्कतामृजापरिवर्जनादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्रार्या—

चिन्तौत्सुक्यसमुत्था दुःखाद्या भवति दीनता पुंसाम् ।
सर्वमृजापरिमार्जनैर्विविधैरभिनयस्तस्य ॥ ४९ ॥

चिन्ता नाम—ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैः समुत्पद्यते । तामभिनयेन्निःश्वसितोच्छ्वसितसंतापध्यानाधोमुखचिन्तनकार्श्यादिभिरनुभावैः । अत्रार्ये भवतः—

ऐश्वर्यभ्रंशेष्टद्रव्यक्षयजा जनिता बहुप्रकारा तु ।
हृदयवितर्कोपगता चिन्ता नृणां समुद्भवति ॥ ५० ॥
सोच्छ्वसितैर्निःश्वसितैः संतापैश्चैव हृदयशून्यतया ।
अभिनेतव्या चिन्ता मृजाविहीनैर्धृत्या च ॥ ५१ ॥

मोहो नाम—दैवोपघातव्यसनाभिघातव्याधिभयावेगपूर्ववैरानुस्मरणादिभिर्विभावैः समुत्पद्यते । तस्य निश्चेतनभ्रमणपतनाघूर्णनादर्शनादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।

---

१. 'मन. सतापादिभि.' का. २. 'उत्पद्यते' का. ३. 'तचाधृतिशिरोगात्रगौरवमृजापरिवर्जनादिभिरनुभावैरभिनेतव्यम्' क ख. ४. '°गात्रस्तम्भमन.स्तम्भमृजापरिवर्णनादिभिरनुभावैरभिनयः प्रयोक्तव्य.' का. ५. 'चित्तौत्सुक्य' क-ख. ६. '°समुत्थाद्दु खाद्यु दीनता भवेत् पुंसाम्' का. ७. 'सर्वमृजानां परिमार्जनैश्च' क-ख.; 'सर्वमृजापरिहारैः' का. ८. 'विविधैरभिनयोऽस्या.' क ख. 'विविधोऽभिनयो भवेत्तस्य' का. ९. 'भ्रंशेष्ट°' क-ख.; 'भ्रष्टेष्ट' का. १०. 'समुत्पद्यते' क-ख. ११. 'उच्छ्वसित' इति क ख-पुस्तकयोर्नास्ति. १२. 'भवत.' इति क-ख-पुस्तकयोर्नास्ति. १३. 'ऐश्वर्ये द्रव्यापहारे' इति क-ख-पुस्तकद्वयेऽप्यशुद्धैवेयमार्या. 'ऐश्वर्येष्टद्रव्यापहार' का. १४. 'हृदयौत्सुक्योपगता चिन्ता तु' का. १५. 'चिन्ता' इति क-ख पुस्तकयोस्त्रुटितम्' १६. 'सोच्छ्वसितैर्निःश्वसितै ' क-ख. १७. 'मृजाविहीनेन धृत्या च' क-ख. १८. 'व्यसनव्याधिभयावेगपूर्ववैरस्मरणादिभिः' का. १९. '°व्याधि°' इति क-ख-पुस्तकयोर्नास्ति. २०. 'उत्पद्यते' क-ख. २१. 'निश्चेष्टिताङ्गभ्रमणापतनघूर्णनदर्शनादिभिः' का. २२. 'घूर्णनदर्शनादिभिः' क-ख. २३. 'अनुभावैः' इति क-ख-पुस्तकयोर्नास्ति.

अत्र श्लोकस्तावदार्या च—

> अस्थाने तस्करान्दृष्ट्वा त्रासनैर्वा पृथग्विधैः ।
> तत्प्रतीकारशून्यस्य मोहः समुपजायते ॥ ५२ ॥
> व्यसनाभिघातभयपूर्ववैरस्मरणरोगजो मोहः ।
> सर्वेन्द्रियसंमोहात्तस्याभिनयः प्रयोक्तव्यः ॥ ५३ ॥

स्मृतिर्नाम—सुखदुःखकृतानां भावानामनुस्मरणम् । सा च स्वास्थ्यजैधन्यरात्रिनिद्राच्छेदसमानदर्शनोदाहरणचिन्ताभ्यासादिभिर्विभावैः संमुत्पद्यते । तामभिनयेच्छिरःकम्पनावलोकनभ्रूसमुन्नमनादिभिरनुभावैः । अत्रार्ये—

> सुखदुःखमतिक्रान्तं तथा मतिविभावितं यथावृत्तम् ।
> चिरविस्मृतं स्मरति यः स्मृतिमानिति वेदितव्योऽसौ ॥ ५४ ॥
> स्वास्थ्याभ्याससमुत्था श्रुतिदर्शनसंभवा स्मृतिर्निपुणैः ।
> शिरउद्वाहनकम्पैर्भ्रूक्षेपैः साभिनेतव्या ॥ ५५ ॥

धृतिर्नाम—शौर्यविज्ञानश्रुतिविभवशौचाचारगुरुभक्त्यधिकमनोरथार्थलाभक्रीडादिभिर्विभावैः समुत्पद्यते । तामभिनयेत्प्राप्तानां विषयाणामुपभोगादप्राप्तातीतोपहतविनष्टानामननुशोचनादिभिरनुभावैः । अत्रार्ये—

१. 'भवत्यपि च' इति क-ख-पुस्तकयोः; 'अत्र श्लोकः' इति का. २. 'विविधैरपि' इति ग. ३. 'अत्रार्या' इत्यधिकमत्र क-ख-का-पुस्तकेषु ४. 'भयपूर्वरसस्मरणजो भवति मोहः' क-ख.; 'भयपूर्ववैरसंस्मरणजो भवति मोहः' का. ५. 'त्वस्याभिनयः' क-ख. 'अस्याभिनयः' का. ६. 'सा च' इति क-ख-का-पुस्तकेषु नास्ति. ७. 'स्वास्थ्याजघन्यरात्र (?)' क-ख. ८. '°दर्शनतोदाहरण' ९. 'उत्पद्यते' क-ख-का. १०. 'तमभिनयेत्' ग. ११. 'अत्रार्ये भवतः' ग.; 'अत्र श्लोकार्ये भवतः' इति का. १२. 'सुखदुःखमतिक्रान्तं तथा मतिविभावितम् । विस्मृतं च यथा श्रुतं स्मरेद्यः स्मृतिमानसौ' ॥ इति का-पुस्तके. १३. 'भ्रूक्षेपैः साभिनेतव्या' क-ख.; 'भ्रूविक्षेपैः साभिनेतव्या' का. १४. 'शौर्य°' इति क-ख. पुस्तकयोर्नास्ति. १५. 'अधिकार्यलाभ' का. १६. 'विविधक्रीडादिभिः' का. १७. 'उत्पद्यते' का. १८. 'तमभिनयेत्' ग. १९. 'प्राप्य मां' (?) क.; 'प्राप्य मां' ख. २०. '°पहृत' क-ख. २१. 'अत्रार्ये भवतः' ग.

विज्ञानशौचविभवश्रुतिशक्तिसमुद्भवा धृतिः सद्भिः ।
भयशोकविषादाद्यै रहिता तु सदा प्रयोक्तव्या ॥ ५६ ॥
प्राप्तानामुपभोगः शब्दस्पर्शरसरूपगन्धानाम् ।
अप्राप्तैश्च न शोको यस्यां हि भवेद्धृतिः सा तु ॥ ५७ ॥

व्रीडा नाम—अकार्यकरणात्मिका । सा च गुरुव्यतिक्रमणावज्ञानप्रतिज्ञानिर्वहणपश्चात्तापादिभिर्विभावादिभिः समुत्पद्यते । तां निगूढवदनाधोमुखचिन्तनोर्वीलेखनवस्त्राङ्गुलीयकस्पर्शननखनिकृन्तनादिभिरनुभावैरभिनयेत् । अत्रार्ये—

किंचिदकार्यं कुर्वन्नेवं यो दृश्यते शुचिभिरन्यैः ।
पश्चात्तापेन युतो व्रीडित इति वेदितव्योऽसौ ॥ ५८ ॥
लज्जानिगूढवदनो भूमिं विलिखन्नखांश्च विनिकृन्तन् ।
वस्त्राङ्गुलीयकानां संस्पर्शं व्रीडितः कुर्यात् ॥ ५९ ॥

चपलता नाम—रागद्वेषमात्सर्यामर्षेर्ष्याप्रतिकूलादिभिर्विभावैः समुत्पद्यते । तस्याश्च वाक्पारुष्यनिर्भर्त्सनसंप्रहारवधबन्धनताडनादिभिरनुभावैरभिनयः प्रयोक्तव्य । अत्रार्या—

अविमृश्य तु यः (यस्तु?) कार्यं पुरुषो वधताडनं समारभते ।
अविनिश्चितकारित्वात्स तु खलु चपलो बुधैर्ज्ञेयः ॥ ६० ॥

---

१. 'अप्राप्तेन हि शोको' का. २. 'सा च' इति क-ख-का पुस्तकेषु नास्ति. ३. 'गुरुव्यतिक्रमणा च ज्ञान' इति क-ख पुस्तकयो. ४. 'प्रतिज्ञानानिर्वहणकृतप्रत्यादिष्टपश्चात्तापादिभिर्विभावैरुत्पद्यते' का. ५. 'भावैरुत्पद्यते' क-ख. ६. 'गूढ°' क-ख. ७. 'विचिन्तनविलेखन' क-ख.; 'चिन्तनोर्वीलेखन' का. ८. 'ससर्शन' का. ९. 'नखनिकृन्तनादिभि.' य-का. १०. 'अत्रार्ये 'भवत.' य-का. ११. 'कुर्वाण एव' क-ख.; 'कुर्वन् यो हि नरो' का. १२. 'व्रीडित' य. १३ 'नखांश्च विनिकुञ्चन्' क-ख.; 'नखैश्च विनिकृन्तन्' का. १४. 'व्रीडित.' य. १५. 'उत्पद्यते' क-ख का. १६. 'वाक्पारुष्यादिभर्त्सनसंप्रहारवधबन्धनताडनज्ञापनादिभि.' का. १७. '°वधबन्धनसंप्रहारताडनादिभि.' य. १८. 'अत्रार्या भवति' य. १९. 'वधबन्धनादिकं' का. २०. 'स हि' क-ख.

हर्षो नाम—मनोरथलाभे[1]ष्टजनसमागमनमनःपरितोषदेवगुरुराजभर्तृप्रसादभोजनाच्छादनधनलाभोपभोगादिभिर्विभावैः समुत्पद्यते[2] । तमभिनयेन्नयनवदनप्रसादप्रियभाषणालिङ्गन[3]कण्टकितपुलकितास्रस्वेदादिभिरनुभावैः ।

अत्रार्ये[4]—

अप्राप्ये प्राप्ये[5] वा लब्धेऽर्थे प्रियसमागमे वापि ।
हृदयमनोरथलाभे हर्षः संजायते पुंसाम् ॥ ६१ ॥
[नयन[6]वदनप्रसादप्रियभाषालिङ्गनैश्च रोमाञ्चैः ।
ललितैश्चाङ्गविहारैः स्वेदाद्यैरभिनयस्तस्य ॥ ६२ ॥]

आवेगो नाम—उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणप्रकृ[7]तिव्यसनाभिघातादिभिर्विभावैः समुत्पद्यते[8] । तत्रोत्पात[9]कृतो नाम विद्युदुल्कानिर्घातप्रपतन[10]चन्द्रसूर्योपरागकेतुदर्शन[11]कृतः । तमभिनयेत्सर्वाङ्गस्रस्तता[12]वैमनस्यमुखवैवर्ण्यविषादविस्मयादिभिः । वातकृतं पुनरवगुण्ठन[13]नाक्षि[14]परिमार्जनवस्त्रसंग्रहणत्वरितगमनादिभिः[15] । वर्षकृतं[16] पुनः सर्वाङ्गसंपिण्डन[17]प्रधावनछत्रार्थ[18]यमार्गणादिभिः । अग्निकृतं नाम[19] धूमाकुल[20]नेत्रताङ्गसंकोचनविधूननातिक्रान्तोपक्रान्तादिभिः[21] । कुञ्जरोद्भ्रमणकृतं नाम[22] त्वरितापसर्पणचपलगमनभयस्त-

---

१. '°लाभेप्सितावा(व ?)मीष्टजनसमागत (म) मनुः पुलकितपरितोष°' क-ख.; '°लाभेप्सिताप्तीष्टजनसमागममन परितोष°' का. २. 'उत्पद्यते' क ख-का. ३. '°प्रियभाषणाकटिकत ( कण्ठकित ? ) मुकुलिताश्रुस्वेदादिभिरनुभावे' क-ख.; '°प्रियभाषणलिङ्गनकण्टकितास्रस्वेदोद्गमनललितताडनादिभिरनुभावैः' का. ४. 'अत्रार्या' क-ख. ५. 'प्राप्ते वाप्राप्ते वा' क ख.; 'प्राप्ते वाप्राप्ये वा का. ६. 'सेयमार्या' क-ख. पुस्तकयोर्नास्त्येव. ७. '°श्रवणनयनाभिघातादिभि.' का. ८. 'उत्पद्यते' क-ख-का. ९. 'धवोपेत (?)' क-ख. १० 'प्रतपन' क-ख-का. ११. '°दर्शनादिभिर्विभावैरुत्पद्यते' का. १२. 'स्रस्ताविषण्णवैमनस्यमुखवैवर्ण्यविस्मयादिभिः' का. १३. '°अवगुण्ठन°' ख. १४. '°नाक्षिमर्दनवस्त्रसंगूहन' क-ख-का. १५. 'अनुभावै ।' इत्यधिकमत्र का. पुस्तके. १६. 'वर्षाकृतं' क-ख.; 'वर्षाकृतं नाम' का. १७. 'सपीडन' ख. १८. 'छत्राश्रयणादिभि.' क ख-का. १९. 'तु' इति क-ख-का-पुस्तकेषु. २०. 'धूमाकुला तन्नताङ्ग (?)सवेग' क ख.; 'धूमाकुलनेत्रसंकुचनाङ्गसंवेग'. २१. '°तिक्रान्तापक्रान्तादिभिः' क ख.; '°तिमान्तपादादिभि ' का. २२. 'अपि' क-ख-का.

म्भवेपथुपश्चादवलोकनविस्मयादिभिः । प्रियश्रवणकृतं नामाभ्युत्थानालिङ्ग-नवस्त्राभरणप्रदानाश्रुपुलकितादिभिः । अप्रियश्रवणकृतं नाम भूमिपतनवि-षमविवर्तनपरिधानविलापनाक्रन्दनादिभिः । प्रकृतिव्यसनकृतं सहसो-पसर्पणशस्त्रचर्मवर्मधारणगजतुरगरथारोहणसंप्रधारणादिभिः ।

एवमष्टविकल्पोऽयोमावेगः संभ्रमात्मकः ।
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणैः ॥ ६३ ॥

अत्रार्ये भवतः ।

अप्रियनिवेदनाद्वा सहसा ह्यभिधारितारिवचनेन ।
शस्त्राक्षेपात्त्रासादावेगो नाम संभवति ॥ ६४ ॥
अप्रियनिवेदनाद्यो विषादभावाश्रयोऽनुभावोऽस्य ।
सहसारिदर्शनाच्चेत्प्रहरणपरिघट्टनैः कार्यः ॥ ६५ ॥

जडता नाम—सर्वकार्याप्रतिपत्तिः । इष्टानिष्टश्रवणदर्शनव्याध्यादिभि-र्विभावैः समुत्पद्यते । तामभिनयेदकथनाभिभाषणतूष्णींभावानिमेषनिरीक्ष-णपरवशत्वादिभिरनुभावैः । अत्रार्या भवति—

इष्टं वानिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात् ।
तूष्णीकः परवशगो भवति स जडसंज्ञितः पुरुषः ॥ ६६ ॥

१. 'तु' क-ख-का. २. '°श्रोयता' क-ख-का. ३. 'अपि' क-ख-का पुस्तके तु नामापि नास्ति, अपिरपि नास्ति. ४. 'उष्यपतनचलनपरिवर्तितपरिधावितविलापा-क्रन्दादिभि.' क-ख.; 'भूमिपतनपरिदेवितविषयपरिवर्तिकपरिधावितविलापरुदितादिभिः' का. ५. 'व्यसनकृतं तु सहसोपक्रमणशस्त्रचर्मधरणवेपनगज°' क-ख.; 'व्यसनाभिघात-कृतं तु सहसोपक्रमणशस्त्रवर्मधारणगज' का. ६. 'रथरोहण' क-ख. ७. 'संप्रहरणा-दिभि.' का. ८. 'इत्येषोऽष्टविधो ज्ञेय.' क-ख-का. ९. 'भवत.' इति क-ख. पुस्तकयो-र्नास्ति. १०. 'अप्रियनिवेदनादिश्रवणादवधारितवचनस्य' (?) का. ११. 'ह्यवधीरि-[तस्य ?] वचनस्य' क-ख. १२. 'शस्त्रक्षेपत्रासाद्' क-ख-का. १३. 'सहसा निदर्शनं चेद्, प्रहरणपरिघट्टनं कार्यम्' का. १४. 'परिदेवनं कार्यम्' क-ख. १५. 'अकथना-भाषण' क.; 'कथनाभाषण°' ख-का. १६. '°भावाप्रतिमनिमेष°' का. १७. 'भवति' इति क-ख-का-पुस्तकेषु नास्ति. १८. 'वेत्ति न यो' ख. १९. 'स भवति' क-ख-का. २०. 'जडसंज्ञक' क-ख-का.

गर्वो नाम—ऐश्वर्यकुलरूपयौवनविद्या[1]बलधनलाभादिभिर्विभावैः समुत्पद्यते । [2]तस्यासूया[3]वज्ञाधर्षणानुत्तर[4]दानासंभाषणाङ्गावलोकनविभ्रमापहसनवा[5]क्पारुष्यगु[6]रुव्यतिक्रमणाधिक्षेपवचनविच्छेदादिभिरनुभावैरभि[7]नयः प्रयोक्तव्यः । [8]भवति चात्रार्या—

विद्या[9]वंशे रूपादैश्वर्यादथ धनागमाद्वापि ।
गर्वः ख[10]लु नीचानां दृष्टयङ्गविचा[11]लनैः कार्यः ॥ ६७ ॥

विषादो नाम—कार्यानि[13]स्तरणदैवव्यापत्तिसमुत्थः । तमभिनयेत्सहायान्वेषणोपायविचिन्तनोत्साहवि[14]घातवैमनस्यनिःश्वसितादिभिरनुभावैरुत्तममध्यमानाम् । अधमानां तु प[15]रिधावनालोकनमुखशोषणसृक्कपरिलेहननिद्रा[16]निःश्वसितध्यानादिभिरनुभावैः । अ[17]त्रार्याश्लोकौ—

कार्यानि[18]स्तरणाद्वा चौर्याभिग्रहणराजदोषाद्वा ।
दैवादि[19]ष्टो योऽर्थस्तदसंप्राप्तौ विषादः स्यात् ॥ ६८ ॥

वि[20]चित्रोपायचिन्ताभ्यां का[21]र्यमुत्तममध्ययोः ।
नि[22]द्रानिःश्वसितध्यानैरधमानां तु दर्शयेत् ॥ ६९ ॥

१. 'विद्याबलादिभि' क-ख. २. 'त' क ख. ३. 'असूया' इति का पुस्तके नास्ति. ४. 'दानाभाषणा°' क ख., 'दानसभाषणासावलोकन°' का. ५. '°वाक्°' इति क-ख पुस्तकयोर्नास्ति. ६. 'गुरुव्यतिक्रमणाधिक्षेपादिभि' क ख. 'गुर्वतिक्रमा-(म ?) णाधिक्षेपादिभि' का. ७. 'अभिनयेत्' क ख. ८. 'अत्रार्या' का.; 'अत्रार्या भवति' घ. ९. 'विद्यायौवनरूपात्' का. १०. 'अथवा' घ. ११. 'स च' क-ख. १२. 'विचारणै.' क-ख का. १३. 'कार्यानिरण' (?) क-ख.; 'कार्यारम्भानिस्तरण' का. १४. 'निर्घातवैमनस्यादिभिरुत्तममध्यमानाम्' क.; 'निर्वालवैनामनस्या' (?) ख. १५. 'विपरिधावनावलोकनमुखशोषणसृक्क' क-ख. १६. 'निद्राश्वसितध्यानादिभि.' क-ख-का. १७. 'अत्रार्ये' क-ख.; 'अत्रार्या श्लोकश्च' का. १८. 'कार्यानिस्तरणकृतचौर्याभिकृतराजदोषाद्वे°' क-ख., 'कार्यानिस्तरणकृतशौर्यादिग्रहणराजदोषाद्वे.' का. १९. 'दैवादर्थविवर्ते भवति विषाद यदा पुंसाम्' का. २०. 'वैचित्र्योपाय' घ. २१. 'कार्यं' क-ख. २२. 'निद्रामत' (?) क-ख.

औत्सुक्यं नाम—इष्टजनवियोगानुसरणोद्यानदर्शन[1]ादिभिर्विभावैरुत्पद्यते। तस्य[2] दीर्घनिःश्वसिताधोमुखविचिन्तननिद्रातन्द्रा[3]शयनाभिलाषा[4]दिभिरभिनयः प्रयोक्तव्यः[5]। अत्रार्या भवति[6]—

इष्टजनस्य वियोगादौत्सुक्यं जायते ह्यनुस्मृत्या।
चिन्तानिद्रातन्द्रा[7]गात्रगुरुत्वैरभिनयो ह्यस्य[8] ॥ ७० ॥

निद्रा नाम—दौर्बल्यश्रमक्लममदालस्यचिन्तात्याहारस्वभावादिभिर्विभावैः समुत्पद्यते[9]। तामभिनयेद्वदनगौरवशरीरावलोकन[10]नेत्रघूर्णन[11]विजृम्भणमान्द्योच्छ्वसितसन्नगात्रताक्षिनिमीलनादिभिरनुभावैः। अत्रार्ये[12] भवतः—

आलस्याद्दौर्बल्यात्क्लमाच्छ्रमाच्चिन्तनात्स्वभावाच्च।
रात्रौ जागरणादपि निद्रा पुरुषस्य संभवति ॥ ७१ ॥
तस्या[13] मुखगौरवगात्र[14]प्रतिलोलननयनमीलनजडत्वैः।
जृम्भणगात्रविमर्दैरनुभावैरभिनयः प्रयोक्तव्यः[15] ॥ ७२ ॥

अपस्मारो नाम—देव[16]यक्षनागब्रह्मराक्षसभूतप्रेतपिशाचग्रहणा[17]नुसरणोच्छिष्टशून्यागारसेवनाशुचिकालान्तरा[18]परिपतनव्याध्यादिभिर्विभावैः समुत्पद्यते। तस्य स्फुरित[19]निःश्वसितोत्कम्पितधावनपतनस्वेद[20]स्तम्भनवदनफेनजिह्वापरिलेहनादिभिरनुभावैरभिनयः प्रयोक्तव्यः। अत्रार्ये[21] भवतः—

---

१. '°उद्यानदर्शन°' इति क-ख-पुस्तकयोर्नास्ति. २. 'तद्' क-ख. ३. 'तन्द्री' च. ४. '°अभिलाषा°' इति क-ख-पुस्तकयोर्नास्ति. ५. 'अभिनयेत्' क-ख. ६. 'भवत्यपि च' क-ख.; 'अत्रार्या' का. ७. 'तन्द्री' च. ८. 'हि' इति क-ख-च-पुस्तकेषु नास्ति. ९. 'उत्पद्यते' क-ख-का. १०. 'शरीरालालन' क-ख.; 'गात्रपरिलोडन' का. ११. 'घूर्णनविजृम्भणगात्रमर्दोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनसर्वेन्द्रियासंमोहादिभिः' क-ख.; 'विघूर्णनजृम्भणगात्रविमर्दनोच्छ्वसितनिःश्वसितसन्नगात्रताक्षिनिमीलनसंमोहनादिभिः' का. १२. 'अत्रान्तरे आर्ये' क-ख. १३. 'तां' क-ख. १४. '°गात्रपरिलोलनयनमीलनजन्वैः (?)' क-ख.; '°गात्रैर्नयननिमीलनविघूर्णनजडलैः' का. १५. अभिनयेत्प्राज्ञः' क-ख. १६. 'देवनागयक्षब्रह्मराक्षसपिशाचादीनां' क-ख.; 'देवनागयक्षराक्षसपिशाचादीना' का. १७. 'ग्रहणोच्छिष्ट°' क-ख.; 'ग्रहणादनुसरणाद्' का. १८. 'कालान्तरापातधातुवैषम्यादिभिर्विभावैरुत्पद्यते' क-ख.; 'कान्ताराभिपातधातुवैषम्यादिभिर्विभावैरुत्पद्यते' का. १९. 'स्फुरितकम्पितनिःश्वसित' क-ख.; 'दुरितकम्पितनिःश्वसित' का. २०. 'खेदस्तम्भवदन°' क-ख.; 'खेदवदनफेनहिक्काजिह्वा' का. २१. 'भवति चात्र' क-ख.

भूत[1]पिशाचग्रहणानुसरणोच्छिष्टशून्यगृहगमनात् ।
कालान्तरातिपातादशुचेश्च भवेत्त्वपसारः ॥ ७३ ॥

सहसा भूमौ पतनं प्रवेपनं वेदनफेनमोक्षश्च ।
निःसंज्ञस्योत्थानं रूपाण्येतान्यपसारे ॥ ७४ ॥

सुप्तं नाम—निद्राभिभवः; इन्द्रियविषयोपगमनमोहनक्षितितलशयनप्रसारणानुकर्षणादिभिर्विभावैः समुत्पद्यते । निद्रासमुत्थं तदुच्छ्वसितसन्नगात्राक्षिनिमीलनसर्वेन्द्रियसंमोहनोत्स्वप्नायितादिभिरनुभावैरभिनयेत् ।

अत्रार्ये भवतः—

निद्राभिभवेन्द्रियोपरमणमोहनैर्भवेत्सुप्तम् ।
अक्षिनिमीलोच्छ्वसनैः स्वप्नायितजल्पितैः कार्यः ॥ ७५ ॥

सोच्छ्वसितैर्निःश्वासैर्मन्दाक्षिनिमीलनेन[13] निश्चेष्टः ।
सर्वेन्द्रियसंमोहात्सुप्तं स्वप्नैश्च युञ्जीत ॥ ७६ ॥

विबोधो नाम—आहारपरिणामनिद्राच्छेदस्वप्नान्ततीव्रशब्दस्पर्शश्रवणादिभिर्विभावैः समुत्पद्यते[16] । तम[17]भिनयेज्जृम्भणाक्षिपरिमर्दनशयनमोक्षणादिभिरनुभावैः । अत्रार्या भवति—

---

१. 'भूतप्रेतपिशाच°' क-ख.; 'भूतपिशाचसरणग्रहणानुच्छिष्ट' का. २. '°अशुचिषु च' क ख. ३. 'भवेद् ह्यपस्मारः' का. ४. 'प्रकम्पन' क ख का. ५. 'वदने' (?) क-ख. ६. 'नि संज्ञाभ्युत्थान' का. ७. 'अपस्मारस्य' क-ख. ८. 'निद्राभिभव' इत्यारभ्य 'समुत्पद्यते' इत्यन्त पाठ क-ख का-पुस्तकेषु नास्ति. ९. 'तदुच्छ्वसितनि श्वसित' क ख-का. १०. 'संमोहस्वप्नायितादिभि' क-ख; 'संमोहोत्स्वप्नादिभि' का. ११. 'अत्रार्या' का.; सेयमार्या क-ख का पुस्तकेषु नास्ति. क ख पुस्तकयो 'अत्रार्ये' इति नास्ति. १२ 'नि श्वासै सोरा (च्छ्वा?) सै' क-ख. १३. 'निमीलने' क-ख. १४. 'निद्राच्छेदाहारपरिणाम' क-ख.; 'निद्राच्छेदाहारविपरिणाम' का. १५. 'स्वप्नान्तशब्दस्पर्शादिभि' क-ख.; 'दु स्वप्नतीव्रशब्दरूपादिभि' का. १६ 'उत्पद्यते' क-ख-का. १७ 'तं जृम्भणाक्षिविमर्दनशयापाक्षणाङ्ग (?) चलनभुजाक्षेपाङ्गुलिस्फोटनादिभिरभिनयेत्' क-ख.; 'त जृम्भणाक्षिमर्दनशयनमोक्षाङ्गवदनभुजावक्षेपणाङ्गुलिस्फोटनादिभिरनुभावैरभिनयेत्' का.

आहारविपरिणामाच्छब्दस्पर्शादिभिश्च संभूतः ।
प्रतिबोधस्त्वभिनेयो जृम्भणवदनाक्षिपरिमर्दैः ॥ ७७ ॥

अमर्षो नाम—विद्यैश्वर्यबलाधिकैरधिक्षिप्तस्यावमानितस्य वा समुत्पद्यते । तमभिनयेच्छिरःकम्पनप्रस्वेदनाधोमुखचिन्तनध्यानाध्यवसायोपायसहायान्वेषणादिभिरनुभावैः । अत्र श्लोकौ—

आक्षिप्तानां सभामध्ये विद्यैश्वर्यबलाधिकैः ।
नृणामुत्साहसंयोगादमर्षो नाम जायते ॥ ७८ ॥
उत्साहाध्यवसायाभ्यामधोमुखविचिन्तनैः ।
शिरःप्रकम्पस्वेदाद्यैस्तं प्रयुञ्जीत पण्डितः ॥ ७९ ॥

अवहित्थं नाम—आकारप्रच्छादनात्मकम् । तच्च लज्जाभयापजयगौरवजैह्म्यादिभिर्विभावैः समुत्पद्यते । तस्यान्यथाकथनावलोकितकथाभङ्गकृतकधैर्यादिभिरनुभावैरभिनयः प्रयोक्तव्यः । अत्र श्लोको भवति—

धार्ष्ट्यजैह्म्यादिसंभूतमवहित्थं भयात्मकम् ।
तच्चागणनया कार्यं नातिचोत्तरभाषणात् ॥ ८० ॥

उग्रता नाम—चौर्याभिग्रहणनृपापराधासत्प्रलापादिभिर्विभावैः समुत्पद्यते । तां च वधबन्धनताडननिर्भर्त्सनादिभिरनुभावैरभिनयेत् ।

---

१. 'वलनाक्षि' का. २. '°धनबलाधिकैः' क-ख-का. ३. '°अपमानितस्य' क-ख. ४. 'तं शिरःकम्पनप्रस्वेदाधोमुखविचिन्तनाध्यवसायध्यानोपायान्वेषणादिभिरभिनयेत्' क-ख.; 'तस्य शिरःकम्पनस्वेदाधोमुखविचिन्तनाध्यवसायध्यानोपायान्वेषणादिभिरनुभावैरभिनयः प्रयोक्तव्यः ।' का. ५. 'भवति चात्र' क-ख. ६. 'विद्याशौर्यबलाधिकैः' ग. ७. '°संपन्नो ह्यमर्षो' क-ख-का. ८. 'विचिन्तितैः' क-ख. ९. 'प्रकम्पप्रस्वेदाः' क-ख. १०. '°अपजय' इति क-ख पुस्तकयोर्नास्ति. ११. 'उत्पद्यते' क-ख-का. १२. 'विलोकित' क-ख-का. १३. '°कृतैरनुभावैः' का. १४. '°अनुभावैः' इति क-ख पुस्तकयोर्नास्ति. १५. 'भवति चात्र' क-ख.; 'अत्र श्लोकः' का. १६. 'भयानकम्' क-ख-का. १७. 'तानि' क-ख-का. १८. 'अधोमता' क-ख-का. १९. 'उत्पद्यते' का.

अत्रार्या[1] भवति—

चौर्याभिग्रह[2]योगान्नृपापराधाच्चयोग्रता[3] भवति ।
वधबन्ध[4]ताडनादिभिरनुभावैरभिनयस्तस्याः ॥ ८१ ॥

मतिर्नाम—नानाशास्त्र[5]विचिन्तनोहापोहादिभिर्विभावैः समुत्पद्यते[6] । तामभिनयेत् शिष्योपदे[7]शार्थविकल्पनसंशयच्छेदादिभिरनुभावैः । भवति चात्र श्लोकः—

नानाशास्त्रार्थबोधेन मतिः संजायते नृणाम्[8] ।
शिष्योपदेशार्थकृतस्तस्यास्त्वभिनयो भवेत् ॥ ८२ ॥

व्याधिर्नाम—वातपित्तकफसंनिपातप्रभवः । तस्य ज्वरादयो विशेषाः । ज्वरस्तु[9] द्विविधः—सशीतः सदाहश्च । तत्र[10] सशीतो नाम[11] प्रवेपितसर्वाङ्गोत्कम्पननिकु[12]ञ्चनाग्न्यभिलापरोमाञ्चहनुचलननासाविकूणनमुखशोषणपरिदेवितादिभिरनुभावैरभिनेयः[13] । सदाहो नाम[14] विक्षिप्ता[15]ङ्गकरचरणभूम्यभिलापानुलेपनशी[16]ताभिलाषपरिदेवनमुखशोषोत्क्रुष्टादिभिरनुभावैः । ये चान्ये[17] व्याधयस्तेऽपि खलु मुखविकूर्णन[18]गात्रस्तम्भ[19]स्रस्ताक्षिनिःश्वसनस्तनितोत्क्रुष्टवेपनादिभिरनुभावैरभिनेयाः । अत्र[20] श्लोको भवति—

---

१. 'भवति चात्र' क-ख.; 'अत्रार्या' का. २. 'चौर्यग्रहणनिरोधात्' का., 'चौर्याभिग्रहणवशात्' घ. ३. 'अयोग्रता' च.; 'ततोग्रता' का. ४. '°बन्धन' क-ख. ५. '°शास्त्रचिन्तनो°' क-ख; '°शास्त्रार्थचिन्तनो°' का. ६. 'उत्पद्यते' क-ख-का. ७. 'शिष्ये चेदेशार्थ' (?) क-ख. ८. 'सुनिष्पन्ना' क-ख. 'विनिष्पन्ना' का. ९. 'तु खलु' का. १०. 'सशीतस्तावत्' का. ११. 'नाम' इति क-ख-पुस्तकयोर्नास्ति. १२. '°त्कम्पनहेतुचलनास्यविकूणनमुखशोषणरोमाञ्चासपरिदेवितादिभिः' क-ख.; '°त्कम्पनकुञ्चितहनुचलननासाविघूर्णनमुखशोषणरोमाञ्चासनेकपरिदेवनादिभिरनुभावैरभिनयः प्रयोक्तव्यः' का. १३. 'अभिनयेत्' घ. १४. 'सदाहस्तु' क-ख.; 'सदाहः पुनः' का. १५. '°विक्षिप्तवक्त्रकरचरण°' का. १६. 'शीताभिलाषपरिदेवितात्कुष्टादिभिः' क-ख.; 'शीताभिलाषपरिदेवितोत्क्रुष्टादिभिः' का. १७. '°ऽन्येऽपि' का. १८. 'विघूर्णन' का. १९. '°स्तम्भस्तनितात्कुष्टवेपनादिभिरभिनेयाः' क-ख.; 'स्तम्भनिश्वसनस्तनितोत्क्रुष्टवेपनपरिदेवनादिभिरनुभावैरभिनेयाः' का. २०. 'अत्र श्लोकः' क-ख-का.

सामान्यतस्तु[1] व्याधीनां कर्तव्योऽभिनयो बुधैः ।
स्रस्ताङ्गगात्रविक्षेपैस्तथा मुखविकूणनैः[2] ॥ ८३ ॥

उन्मादो नाम-इष्टजनवियोगविभवनाशाभिघात[3]वातपित्तश्लेष्मप्रकोपादिभिर्विभावैरुत्पद्यते[4] । तमनिमित्त[5]हसितरुदितोत्कुष्टासंबद्ध[6]प्रलापशयितो[7]पविष्टोत्थितप्रधावितनृत्त[8]गीतपठितभस्मपांसवधूलन[9]तृणनिर्माल्य[10]कुचेलचीरघटकपालशरावाभरण[11]धारणोपभोगैरनेकै[12]श्चानवस्थितैश्चेष्टानुकरणादिभिरनुभावैरभिनयेत् ।

अत्रार्ये[13] भवतः—

इष्टजनविभवनाशादभिघाताद्वातपित्तकफकोपात् ।
विविधाच्चित्त[14]विकारादुन्मादो नाम संभवति ॥ ८४ ॥
अनिमित्तहसितै[15]रुदितोपविष्टगीतप्रधावितोत्कुष्टैः ।
अन्यैश्च विकारकृतैरुन्मादं संप्रयुञ्जीत ॥ ८५ ॥

मरणं नाम—व्याधिजमभिघातजं च । तत्रान्त्रय[16]कृच्छूलदोषवैषम्य[17]गण्ड[18]पिटकज्वरविषूचिका[19]दिभिर्यदुत्पद्यते[20] तद्व्याधिप्रभवम् । अभिघातजं तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथपशु[21]यानपातविनाशप्रभवम् ।

एतयो[22]रभिनयविशेषान्वक्ष्यामः—तत्र व्याधिजं[23] नाम विषण्णगात्रव्यायताङ्गविचेष्टितनिमीलितनयनं हिक्काश्वासोपेतनमनवेक्षितपरिजनमव्यक्ताक्षरकथनादिभिरनुभावैरभिनयेत् । अत्र श्लोको भवति[24]—

---

१. ‘समासतस्तु’ क ख. २. ‘रुजा मुखविघूर्णनै’ का. ३ ‘व्यसनाभिघात’ घ्का. ४. ‘संमुत्पद्यते’ क-ख. ५ ‘तमपनिमित्त’ च. ६. ‘°ष्टाबद्धप्रलाप’ क ख.; ‘°ष्टासबन्ध’ का. ७. ‘शयनो°’ क-ख का. ८. ‘°प्रचितनृत्त’ क-ख. ९. ‘पांश्ववधूलन’ का. १०. ‘°वधूलननिर्माल्यवीरघटवत्र शरावाभरणस्पर्शनोपभोगैरन्यैश्चाव्यस्थितावष्टा (?) करणादिभिरनुभावैरभिनयेत’ क ख. ११. ‘°भारणा (?) धारणो°’ का. १२. ‘°रन्यैश्चानवहित-चेष्टाकरणादिभिरनुभावैरभिनयेत्’ का. १३. ‘भवति चात्र’ क-ख. १४. ‘पित्तविकारात्’ क-ख का. १५. ‘°रुदितहसितो’ घ. १६. ‘आन्त्रयकृच्छूल’ इति क-ख-पुस्तकयोर्नास्ति. १७. ‘यदान्त्र°’ का. १८ ‘गण्डपिण्डकाज्वर°’ का. १९. ‘विचार्चकादिभि.’ क-ख. २०. ‘यद्’ इति क ख का-पुस्तकेषु नास्ति. २१. ‘°पशु°’ इति क-ख का-पुस्तकेषु नास्ति. २२. ‘एतेष्विदानीम्’ क ख. २३. ‘व्याधिज विषण्णगात्रं व्यपेताङ्गविचेष्टितं निमीलित-नयन हिक्काश्वासोत्पतनमनपेक्षित°’ क-ख.; ‘विषण्णगात्रमप्यायताङ्गविचेष्टित निमीलित-नयनं हिक्काश्वासोत्पतनमनपेक्षितं°’ का. २४. ‘भवति’ इति क-ख-का-पुस्तकेषु नास्ति.

व्याधीनामेकभावो हि मरणाभिनयः स्मृतः ।
विषण्णगात्रैर्निश्चेष्टैरिन्द्रियैश्च विवर्जितः ॥ ८६ ॥

अभिघातजे तु नानाप्रकारा[1] अभिनयविशेषाः । यथा—शस्त्रक्षते तावत्सहसाभूमिपतनवेपन[2]स्फुरणादिभिरभिनयः प्रयोक्तव्यः । अहिदष्टे[3] विषपीतयोर्विषवेगो यथा—कार्श्यवेपथुविदाह[4]हिक्काफेनस्कन्धभङ्गजडतामरणानीत्यष्टौ विषवेगाः । अत्रानुवंश्यौ[5] श्लोकौ भवतः—

कार्श्यं तु प्रथमे वेगे द्वितीये वेपथुर्भवेत्[6] ।
दाहं[7] तृतीये हिक्कां च[8] चतुर्थे संप्रयोजयेत् ॥ ८७ ॥
फेनं च पञ्चमे कुर्यात्षष्ठे[9] स्कन्धस्य भञ्जनम् ।
जडतां सप्तमे कुर्यादष्टमे मरणं तथा[10] ॥ ८८ ॥

अत्रार्या[11] भवति—

श्वापदगजतुरगरथो[12]द्भवं तु पशुयानपतनजं चापि ।
शस्त्रक्षतवत्कुर्यादनवेक्षितगात्र[13]संचारम् ॥ ८९ ॥
इत्येवं[14] मरणं ज्ञेय नानावस्थान्तरात्मकम् ।
प्रयोक्तव्यं बुधैः सम्यग्यथाभावाङ्ग[15]चेष्टितैः ॥ ९० ॥

त्रासो नाम—विद्युदुल्काशनिपातनिर्घाताम्बुधर[16]महासत्त्वपशुरवादिभिर्विभावैरुत्पद्यते । तं[17] संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलापादिभिरनुभावैरभिनयेत् । अत्र[18] श्लोको भवति—

---

१. 'नानाभिनयविशिष्टा' क-ख.; 'नानाप्रकाराभिनयविशेषा' का. २. 'विकम्पन' क-ख.; 'भूमिपतनादिभिरनुभावै' का. ३. 'अहिदष्टे विषपीते नानाविषवेगैर्यथा' क-ख.; 'अहिदष्टे तु विषपीते वा विषवेगे यथा' का. ४. 'दाह' क-ख-का. ५. 'अनुवंश्यौ' इति च पुस्तके नास्ति. ६. 'वेपथुस्तथा' क-ख.; 'वेपथुं तथा' का. ७. 'दाह' क-ख. ८. 'तु' का. ९. 'स्यात् षष्ठे स्कन्धभञ्जनम्' क-ख.; 'षष्ठे तु स्कन्धभञ्जनम्' का. १०. भवेत्' च. ११. 'अत्रार्या भवति' इत्यधिक च-पुस्तके. १२. 'रथ' इति का-पुस्तके नास्ति. १३. 'अनक्षतगात्रसंचारं' क-ख. १४. 'इत्येतन्मरणं प्रोक्तं' क-ख.; 'इत्येवं मरणं ज्ञेयं' का. १५. 'भावाङ्गचेष्टितैः' का.; 'भावा... चेष्टितै' च. १६. 'अम्बुदरवसत्त्वदर्शनपक्षारवादिभि' का. १७. 'तमभिनयेत्' च.; 'तं' इति का पुस्तके नास्ति. १८. 'भवति चात्र' क-ख.; 'अत्र श्लोक.' का.

महाभैरवनादाद्यैस्त्रासः समुपजायते ।
स्रस्ताङ्गाक्षिनिमेषैश्च तस्य त्वभिनयो भवेत् ॥ ९१ ॥

वितर्को नाम—संदेहविमर्शविप्रतिपत्त्यादिभिर्विभावैरुत्पद्यते । तमभिनयेद्विविधविचारितप्रश्नसंप्रधारणमन्त्रसंगूहनादिभिरनुभावैः । अत्र श्लोको भवति—

विचारणादिसंभूतः संदेहातिशयात्मकः ।
वितर्कस्त्वभिनेयो वै शिरोभ्रूक्षेपकम्पनैः ॥ ९२ ॥

एवमेते त्रयस्त्रिंशद्व्यभिचारिणो भावा देशकालावस्थानुरूप्येणात्मगतपरमध्यस्था उत्तममध्यमाधमैः स्त्रीपुंसैः स्वप्रयोगवशादुपपाद्या इति ।

त्रयस्त्रिंशदिमे भावा विज्ञेया व्यभिचारिणः ।
सात्त्विकांस्तु पुनर्भावान्प्रवक्ष्याम्यनुपूर्वशः ॥ ९३ ॥

अत्राह—किमन्ये भावाः सत्त्वेन विनाभिनीयन्ते यस्मादुच्यते एते सात्त्विका इति । अत्रोच्यते एवमेतत् कस्मात्—इह हि सत्त्वं नाम मनःप्रभवम् । तच्च समाहितमनस्त्वादुत्पद्यते । मनःसमाधानाच्च सत्त्वनिर्वृत्तिरिति । तस्य च योऽसौ स्वभावो रोमाञ्चाश्रुवैवर्ण्यादिलक्षणो यथाभावोप-

---

१. '°नादाद्यै' क-ख. २. 'त्रासात्' क-ख. ३. 'स्रस्ताङ्गार्धनिमेषाद्यैः' का. ४. 'विप्रत्ययादिभिरनुभावैः.................' क-ख. 'विप्रत्ययादिभिर्विभावैरुत्पद्यते' का. ५. '°संज्ञासंप्रहारणमन्त्र°' का. ६. 'भवति चात्र' क-ख.; 'अत्र श्लोकः' का. ७. 'संभूतैः' क-ख. ८. 'स संदेहो त्रयात्मकः' (?) क-ख.; 'संदेहजननात्मकः' का. ९. 'वितर्कः सोऽभिनेयस्तु' ग.; वितर्कस्त्वभिनेयः स्यात्' का. १०. '°पक्षकम्पनैः' का. ११. 'एवमेते' इत्यारभ्य 'उपपाद्या इति' इत्यन्तं पाठः क-ख-पुस्तकयोर्नास्ति. १२. 'विभावा देशकालावस्थानुगतमध्यमाधमोत्तमैः स्त्रीनपुंसकैः पुरुषप्रयोगवशादुत्पाद्या इति' का. १३. '°अमी भावाः' क-ख. १४. 'सुविज्ञेयाः प्रयोक्तृभिः' क-ख. १५. 'व्याख्यास्यामि' का. १६. 'सात्वत (?)' क-ख. १७. 'नाभिनीयन्ते' क-ख.; 'विनाभिधीयन्ते' का. १८. 'येनैते सात्त्विका उच्यन्ते' क-ख.; 'यत एत सात्त्विका इत्युच्यन्ते' का. १९. 'एवमेतत् कस्मात्' इति क-ख-का-पुस्तकेषु नास्ति. २०. 'हि' इति का-पुस्तके नास्ति. २१. 'उच्यते' ग. २२. 'मनसः समाधौ सत्त्वनिष्पत्तिर्भवतीति' घ.; 'मनसः समाधानाच्च सत्त्वनिवृत्तिर्भवति' का. २३. 'च' इति क-ख-पुस्तकयोर्नास्ति. २४. 'रोमाञ्चाश्वादिकृतः स न शक्यतेऽन्यमनसा' क-ख.; 'स्तम्भस्वेदरोमाञ्चास्रवैवर्ण्यादिको न दृश्यते मनसा' का.

गतः स न शक्योऽन्यमनसा कर्तुमिति । लोकस्वभावानुकरणाच्च[1] नाट्यस्य सत्त्वमीप्सितम् । को[2] दृष्टान्तः । इह हि नाट्यधर्मप्रवृत्ताः[3] सुखदुःखकृतो[4] भावास्तथा सत्त्वविशुद्धाः[5] कार्या यथा स्वरूपा भवन्ति । दुः[6]खं नाम रोदनात्मकं तत्कथमदुःखितेन,[8] सुखं च[7] प्रहर्षात्मकमसुखितेनाभिनेयम्[9] । एतदेवास्य सत्त्वं यद्दुःखितेन[10] सुखितेन चाश्रुरोमाञ्चौ[11] प्रदर्शयितव्या[12]विति कृत्वा सात्त्विका भावा इत्यभिव्याख्याताः[13] । तत्र इमे[14]—

स्तम्भः[15] स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ[16] वेपथुः ।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः[17] ॥ ९४ ॥

अत्रार्याः—तत्र

क्रोधभयहर्षलज्जादुःखश्रमरोगतापघातेभ्यः ।
व्यायामक्लमधर्मैः[18] स्वेदः संपीडनाच्चैव ॥ ९५ ॥

हर्षभयरोगविस्मय[19]विषादरोषादिसंभवः[20] स्तम्भः ।
शीतभयहर्षरोषस्पर्शजरासंभवः[21] कम्पः ॥ ९६ ॥

आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात्[22] ।
अनिमेषप्रेक्षणतः[23] शीताद्रोगाद्भवेदश्रु[24] ॥ ९७ ॥

---

१. '°करणत्वाच्च नान्यस्य' का. २. 'अत्राह को दृष्टान्त इति चेत् । अत्रोच्यते' का. ३. 'नाट्यधर्मीप्रवृत्ता.' ग.; 'नाट्यधर्मः प्रवृत्त' का. ४. 'सुखदु खकृता भावा.' ग.; 'सुखदु.खकृतो भाव.' का. ५. 'सत्त्वविशुद्धाधिष्ठित. कार्यो यथास्वरूपोऽभवति' का. ६. 'तत्र दु.खं' का. ७. 'च' इति का पुस्तके नास्ति. ८. 'तत्कथमसुखितेन' क ख. ९. 'अभिनयेत्' ग.; 'अभिनेतुं शक्यते इति सत्त्वममीप्सितमिति कृत्वा सात्त्विको नाम इति भावः ।' का. १०. '[सर्वे] दु.खितेन' ग. ११. '°स्वरोमाञ्चौ' ग. १२. 'दर्शयितव्यौ' क-ख.; 'दर्शयितव्याविति व्याख्यातम् ।' का. १३. 'इत्यभिव्याख्या' क-ख. १४. 'तत्र' इति क-पुस्तके नास्ति ; 'इमे' इति क-ख-पुस्तकयोर्नास्ति. १५. पद्यमिदं क ख-पुस्तकयोर्नास्ति. १६. 'स्वरसादोऽथ' का. १७. 'स्मृता.' का. १८. '°धर्मात्' क-ख-का. १९. 'शोकविस्मय' क-ख. २०. 'रोगवशासंभव.' क-ख.; 'मदरोषसंभव' का. २१. 'जरारोगज.' क ख. २२. 'जृम्भणभयाच्च' का. २३. 'शोकानिमिषप्रेक्षणशीताद्रोगात् भवेदस्रम्' का. २४. 'भवेदास्रम्' ग.

शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम् ।
स्पर्शभयशीतहर्षैः क्रोधाद्रोगाच्च रोमाञ्चः ॥ ९८ ॥
स्वरभेदो भयहर्षक्रोधजरारौक्ष्यरोगमदजनितः ।
श्रममूर्च्छामदनिद्राभिघातमोहादिभिः प्रलयः ॥ ९९ ॥
एवमेते बुधैर्ज्ञेया भावा ह्यष्टौ तु सात्त्विकाः ।
कर्म चैषां प्रवक्ष्यामि रसभावानुभावकम् ॥ १०० ॥
व्यजनग्रहणाच्चापि स्वेदापनयनेन च ।
स्वेदस्याभिनयो योज्यस्तथा वाताभिलापतः ॥ १०१ ॥
निश्चेष्टो निष्प्रकम्पश्च स्थितः शून्यजडाकृतिः ।
स्कन्नगात्रतया चैव स्तम्भं त्वभिनयेद्बुधः ॥ १०२ ॥
वेपनात्स्फुरणात्कम्पाद्वेपथुं संप्रदर्शयेत् ।
स्वरभेदं तथा चैव भिन्नगद्गदनिस्वनैः ॥ १०३ ॥
मुहुःकण्टकितत्वेन तथोल्लुकसनेन च ।
रोमाञ्चस्त्वभिनेयो वै गात्रसंस्पर्शनेन च ॥ १०४ ॥

---

१. '°हर्षात्' क-ख-का. २. 'स्वरसादो' का. ३. '°जरारोगमदजनित.' क-ख.; '°ज्वररोगमदजनित.' का. ४. 'ह्यनुभावानुभावकम्' क-ख-का. ५. 'व्यञ्जक°' क-ख.; 'व्यञ्जन' का. ६. 'स्वेद एवाभिनेतव्य.' च-का. ७. घ-पुस्तके श्लोकानां पौर्वापर्य-मत्र वर्तते यथा—

'निःसंज्ञो निष्प्रकम्पश्च स्थित. शून्यजडाकृति. । स्कन्नगात्रतया चैव स्तम्भं त्वभिनयेद्बुधः ॥
व्यजनग्रहणाच्चैव स्वेदापनयनेन च । स्वेद एवाभिनेतव्यस्तथा वाताभिलाषत. ॥
मुहुः कण्टकितत्वेन तथोल्लुकसनेन च । पुलकेन च रोमाञ्चं गात्रस्पर्शेन दर्शयेत् ॥
स्वरभेदोऽभिनेतव्यो भिन्नगद्गदनिस्वनैः । वेपनात् स्फुरणात् कम्पाद्वेपथुं संप्रदर्शयेत् ॥
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः । वैवर्ण्यमभिनेतव्यं प्रयत्नात्तद्धि दुष्करम् ॥
बाष्पाम्बुप्लुतनेत्रत्वान्नेत्रसंमार्जनेन च । मुहुरश्रुकणापातैरास्रं त्वभिनयेद्बुधः ॥
निश्चेष्टो निष्प्रकम्पत्वादव्यक्तश्वसितादपि । महीनिपतनाच्चापि प्रलयाभिनयो भवेत् ॥'

श्लोकेष्वेतेषु पाठभेदोऽप्यवलोकनीयः ।

८. 'स्थितशून्यजडाकृतिः' का. ९. 'निःसंज्ञस्तब्धगात्रं च' का. १०. 'सत्त्वभिनयेद्बुधः (?)' क-ख. ११. 'संप्रदर्शयेत्' क-ख-का. १२. 'विस्वरैः' क-ख. १३. 'मिश्र कण्टकितत्वेन' क-ख.

नेत्रसंमार्जनैर्बाष्पैरश्रु चाभिनयेद्बुधः
मुखवर्णपरावृत्त्या नाडीपीडनयोगतः ॥ १०५ ॥
वैवर्ण्यमभिनेतव्यं प्रयत्नादङ्गसंश्रयम्।
महीनिपतनाच्चापि प्रलयाभिनयो भवेत् ॥ १०६ ॥

एकोनपञ्चाशदिमे यथावद्भावास्त्र्यवस्था गेदिता मया वः।
भूयश्च ये यत्र रसे नियोज्यास्ताञ्श्रोतुमर्हन्ति च विप्रमुख्याः ॥१०७॥

अत्र श्लोकाः—

ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा।
सुप्तं निद्रावहित्थं च शृङ्गारे वेपथुस्तथा ॥ १०८ ॥
आलस्योग्रजुगुप्साभिर्भावैस्तु परिवर्जिताः।
उद्भावयन्ति शृङ्गारे सर्वे भावाः स्वसंज्ञया ॥ १०९ ॥
ग्लानिः शङ्का ह्यसूया च श्रमश्चपलता तथा।
सुप्तं निद्रावहित्थं च हास्ये भावाः प्रकीर्तिताः ॥ ११० ॥
निर्वेदश्चैव चिन्ता च दैन्यं ग्लान्यास्रमेव च।
जडता मरणं चैव व्याधिश्च करुणे स्मृताः ॥ १११ ॥

---

१. 'त्वभिनयेद्' का. २. इत पूर्वं क ख पुस्तकयो 'निश्चेष्टो निष्प्रकम्पश्च स्थित शून्यजडाकृति' इति पद्यार्धं वर्तते। 'महीनिपतनाच्चापि' का. ३. 'अमी' क-ख. ४. '°स्त्यवस्था (?) क ख. ५ 'ह्युदिता मयेह' घ. ६ 'एषां च ये' क ख., 'येषां च ये' का. ७. 'अत्र श्लोका इति' क-ख का पुस्तकेषु नास्ति. ८. 'अत्र' घ पुस्तके निम्नलिखितश्लोका अधिका—

[शङ्का व्याधिस्तथा ग्लानिश्चिन्तासूया भयं तथा। विस्मयश्च वितर्कश्च स्तम्भश्चपलता तथा॥
रोमाञ्चहर्षौ निद्रा च तयोन्मादमदावपि। खेदश्चैवावहित्थं च प्रलयो वेपथुस्तथा॥
विषादश्रमनिर्वेदा गर्वावेगौ धृतिः स्मृतिः। मतिर्मोहो विबोधश्च सुप्तमौत्सुक्यलज्जिते॥
क्रोधामर्षौ च हासश्च शोकोऽपस्मार एव च। दैन्यं च मरणं चैव रतिरुत्साहसंयुता॥
त्रासवैवर्ण्यरुदितैः स्वरभेदः शमोऽपि च। जडता च तथा षट् च चत्वारिंशत्प्रकीर्तिताः॥]

९. 'वै पुनस्तथा' क-ख. १०. 'जुगुप्साख्यैरेव भावैस्तु वर्जिता' ब. ११. अत्र घ-पुस्तके—[यथावसरमेते हि स्थायिसंचारिसंज्ञकाः। उद्दीपयन्ति शृङ्गारं रसमास्वाद्य संज्ञितम्॥] इत्यधिकम्, १२. 'हास्यभावाः' क-ख. १३. 'निर्वेदाद्येव' क-ख. १४. 'दैन्यं ग्लान्यस्रमेव च' क-ख., 'दैन्यग्लान्यस्रमेव च' का. १५. 'चाकरुणा (?) क-ख. १६. 'रसे' का.

असंमोहस्तथोत्साह आवेगो हर्ष एव च ।
मतिश्चैव तथोग्रत्वममर्षो मद एव च ॥ ११२ ॥
रोमाञ्चः स्वरभेदश्च क्रोधोऽसूयौ धृतिस्तथा ।
गर्वश्चैव वितर्कश्च वीरे भावा भवन्ति वै ॥ ११३ ॥
गर्वोऽसूया तथोत्साह आवेगो मद एव च ।
क्रोधश्चपलता हर्षो रौद्रे चोग्रत्वमेव च ॥ ११४ ॥
स्वेदश्च वेपथुश्चैव रोमाञ्चो गद्गदस्तथा ।
त्रासश्च मरणं चैव वैवर्ण्यं च भयानके ॥ ११५ ॥
अपस्मारस्तथोन्मादो विषादो मद एव च ।
मृत्युर्व्याधिर्भयं चैव भावा बीभत्ससंश्रिताः ॥ ११६ ॥
स्तम्भः स्वेदश्च मोहश्च रोमाञ्चो विस्मयस्तथा ।
आवेगो जडता हर्षो मूर्च्छा चैवाद्भुताश्रयाः ॥ ११७ ॥
ये त्वेते सात्त्विका भावा नानाभिनयसंश्रिताः ।
रसेष्वेतेषु सर्वेषु ते ज्ञेया नाट्ययोक्तृभिः ॥ ११८ ॥
न ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः ।
भावो वापि रसो वापि प्रवृत्तिर्वृत्तिरेव वा ॥ ११९ ॥
[ बहूनां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ॥ १२० ॥
दीपयन्तः प्रवर्तन्ते ये पुनः स्थायिनं रसम् ।
ते तु संचारिणो ज्ञेयास्ते हि स्थायित्वमागताः ॥ १२१ ॥

१. 'अमर्षादय एव च' क-ख.; 'हर्ष उन्माद एव च' का. २. 'मतिबोधश्च' क-ख-का. ३. 'क्रोधासूये' क. ४. पद्यमिदं घ-पुस्तके नास्ति. ५. 'तूग्रतामेव च' का. ६. 'वेपथुःस्वरभेदश्च रोमाञ्चो गद्गदस्तथा । स्तम्भश्च मरणं स्वेदो वैवर्ण्यं च भयानके ॥' इति च-पुस्तके. ७. 'व्यसनो नाम एव च' क-ख. ८. 'मृत्युर्व्याधी' का. ९. 'चैवाद्भुते रसे' घ. १०. 'नानालाभसमाश्रया.' क-ख. ११. 'सर्वेति (?) ते' क-ख. १२. 'विज्ञेया' का. १३. 'प्रयोगजम्' क-ख. १४. 'च' क-ख. १५. इत प्रभृति कोष्ठकवद्धानि १२७ यावत् पद्यानि क-ख-पुस्तकयोर्न सन्ति. १६. 'सर्वेषां समवेतानां' का. १७. पद्यमेतत् का. पुस्तके नास्ति.

विभावानुभावयुक्तो ह्यङ्गवस्तुसमाश्रयः ।
संचारिभिस्तु संयुक्तः स्थाय्येव तु रसो भवेत् ॥ १२२ ॥
स्थायी सत्त्वातिरेकेण प्रयोक्तव्यः प्रयोक्तृभिः ।
संचार्याकारमात्रेण स्थायी यस्मादवस्थितः ॥ १२३ ॥
( ये त्वेते सात्त्विका भावा नानाभिनययोजिताः ।
रसेष्वेतेषु सर्वेषु ते ज्ञेया नाट्यकोविदैः ॥ १२४ ॥ )
न ह्येकरसजं काव्यं नैकभावैकवृत्तिकम् ।
विमर्दे रागमायाति प्रयुक्तं हि प्रयत्नतः ॥ १२५ ॥
भावा वापि रसा वापि प्रवृत्तिर्वृत्तिरेव वा ।
बीभत्साद्भुतशान्तानां त्रैविध्यं नात्र कथ्यते ॥ १२६ ॥
षण्णां रसानां त्रैविध्यं नानाभावरसान्वितम् ।
सत्त्वप्रयोजितो ह्यर्थः प्रयोगोऽत्र विराजते ।
विदित्वा हि विराजन्ते लोके चित्रं हि दुर्लभम् ॥ १२७ ॥]
नानाभावार्थसंपन्ना स्थायिसत्त्वाभिचारिणः ।
पुष्पावकीर्णाः कर्तव्याः काव्येषु हि रसा बुधैः ॥ १२८ ॥
सर्वेषां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो (?) रसः स्थायी शेषाः संचारिणो मताः ॥ १२९ ॥
एवं रसाश्च भावाश्च व्यवस्था नाटके स्मृताः ।
य एवमेताञ्जानाति स गच्छेत्सिद्धिमुत्तमाम् ॥ १३० ॥

इति श्रीभारतीये नाट्यशास्त्रे भावव्यञ्जनो नाम सप्तमोऽध्यायः ।

---

१. 'युतो' का. २. 'व्यवस्थित' का. ३. अत्र 'चित्राणि न विरज्यन्ते लोके चित्रं हि दुर्लभम् । विमर्दो रागमायाति प्रयुक्तमपि यत्नत ॥' इत्येकमेव पद्यं का. पुस्तके च. पुस्तकस्य शेषपद्यानां स्थाने ४. 'नानार्थभावसंपन्ना' क. ख.; 'नानार्थभावनिष्पन्ना' का. ५ 'स्थायिभावा विचालिन' क. ख.; 'स्थायित्वविचारिण' का. ६. 'पुष्पावकीर्णा' का. ७. 'सत्त्वरसाश्रये' का. ८. पद्यमिदं च-का-पुस्तकयोः १२० श्लोकत्वेन पूर्वमेवागतम्. ९. 'एवं रसानां भावानां व्यवस्थानमिह स्मृतम्' च. १०. 'व्यवस्था' का. ११. 'भावविकल्पो' च.

अष्टमोऽध्यायः ।

ऋषय ऊचुः—

भावानां च रसानां च समुत्थानं यथाक्रमम् ।
त्वत्प्रसादाच्छ्रुतं सर्वमिच्छामो वेदितुं पुनः ॥ १ ॥
नाट्ये कतिविधः कार्यस्तज्ज्ञैरभिनयक्रमः ।
कथं चाभिनयो ह्येष कतिभेदश्च कीर्तितः ॥ २ ॥
सर्वमेतद्यथातत्त्वं कथयस्व महामुने ।
यो यथाभिनयो यस्मिन्योक्तव्यः सिद्धिमिच्छता ॥ ३ ॥
तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः ।
प्रत्युवाच पुनर्वाक्यं चतुरोऽभिनयान्प्रति ॥ ४ ॥
अहं वः कथयिष्यामि निखिलेन तपोधनाः ।
यस्मादभिनयो ह्येष विविधस्समुदाहृतः ॥ ५ ॥

यदुक्तं चत्वारोऽभिनया इति तान्वर्तयिष्यामः । अभिनय इति कस्मादुच्यते अभीत्युपसर्गः । 'णीञ्' प्रापणार्थो धातुः । अस्याच्प्रत्ययान्तस्याभिनय इति रूपं सिद्धम् । एतच्च धात्वनुवचनेनावधार्यं भवति । अत्र श्लोकौ—

अभिपूर्वस्तु णीञ्धातुराभिमुख्यार्थनिर्णये ।
यस्मात्प्रयोगं नयति तस्मादभिनयः स्मृतः ॥ ६ ॥
विभावयति यस्माच्च नानार्थान्हि प्रयोगतः ।
शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयः स्मृतः ॥ ७ ॥
चतुर्विधश्चैष भवेन्नाट्यस्याभिनयो द्विजाः ।
अनेकभेदबाहुल्यं नाट्यमस्मिन्प्रतिष्ठितम् ॥ ८ ॥

---

१. 'ऋषय. ऊचु.' का पुस्तके नास्ति. २. 'तैर्के.' क-ग. ३. 'वा' का. ४. 'च' का. ५. 'भगवन् वक्तुमर्हसि' का. ६. 'प्रसाद' इत्यधिकं का. पुस्तके. ७. 'अत्र' इत्यधिकं का. पुस्तके. ८. 'प्रापणार्थश्च' का. ९. 'अस्याभिनीत्येवं व्यवस्थितस्य' इत्यधिकं का-पुस्तके १०. 'इत्येवं' का. ११. 'तार्थवचनेनोपधार्यम्' क-ग. १२. 'पुरा' क-ग. १३. 'यस्मात् पदार्थान् नयति' का. १४. 'भावान्' क-ग. १५. 'बाहुल्यं' का. १६. 'यस्मिन्' का.

आङ्गिको वाचिकश्चैव ह्या[1]हार्यः सात्त्विकस्तथा ।
ज्ञेयस्त्वभिनयो विप्राश्चतुर्धा परिकल्पितः ॥ ९ ॥
सात्त्विकः पूर्वमुक्तस्तु भावैश्च[2] सहितो मया ।
अङ्गाभिनयमेवादौ [3]गदतो मे निबोधत ॥ १० ॥
त्रिविधस्त्वाङ्गिको ज्ञेयः[4] शारीरो मुखजस्तथा ।
तथा चेष्टाकृतश्चैव शाखाङ्गोपाङ्गसंयुतः ॥ ११ ॥
शिरोहस्तकटीवक्ष.पार्श्वपादसमन्वितः ।
अङ्गप्रत्यङ्गसंयुक्तः षडङ्गो नाट्यसंग्रहः ॥ १२ ॥
तस्य शिरोहस्तोरःपार्श्वकटीपादतः षडङ्गानि ।
नेत्रभ्रूनासाधरकपोलचिबुकान्युपाङ्गानि ॥ १३ ॥
[5]अस्य शाखा च नृत्तं च तथैवाङ्कुर एव च ।
वस्तून्यभिनयस्येह विज्ञेयानि प्रयोक्तृभिः ॥ १४ ॥
आङ्गिकस्तु भवेच्छाखा [6]ह्यङ्कुरः सूचना भवेत् ।
अङ्गहारविनिष्पन्नं नृत्तं तु करणाश्रयम् ॥ १५ ॥
मुखजेऽभि[7]नये विप्रा नानाभावरसा[8]श्रये ।
शिरसा प्रथमं कर्म गदतो मे निबोधत ॥ १६ ॥
आकम्पितं कम्पितं च धुतं विधुतमेव च ।
परिवाहित[9]माधूतमवधूतं तथाञ्चितम् ॥ १७ ॥
निहञ्चितं परावृत्तमुत्क्षिप्तं चाप्यधोगतम् ।
लोलितं चेति[10] विज्ञेयं त्रयोदशविधं शिरः ॥ १८ ॥
शनैराकम्पनादूर्ध्वमधश्चाकम्पितं भवेत् ।
[11]द्रुतं तदेव बहुशः कम्पितं कम्पितं शिरः ॥ १९ ॥
संज्ञोपदेशपृच्छासु स्वभावाभाषणे तथा ।
निर्देशा[12]वाहने चैव भवेदाकम्पितं शिरः ॥ २० ॥

---

१. 'प्रादार्य' का. २. 'तु' का. ३. 'प्रादौ' का. ४. 'इऽ.' का. ५. 'अस्य' का. ६. 'हि' इति का-पुस्तके नास्ति. ७. 'मुखानभिनये' क-ख. ८. 'न समाश्रये'. ९. '°हितोद्वाहितक' का. १०. 'चैव'. ११. 'द्रुतम्' क-ख. १२. 'निर्देशे वाहने' का.

रोषे वितर्के विज्ञाने प्रतिज्ञाने च तर्जने ।
प्रेच्छातिशयवाक्येषु शिरः कम्पितमिष्यते ॥ २१ ॥
शिरसो रेचनं यत्तु शनैस्तद्धुतमु[3]च्यते ।
द्रुतमारेचनादेतद्विधुतं चें भवेच्छिरः ॥ २२ ॥
अनीप्सिते विषादे च विस्मये प्रत्यये तथा ।
पार्श्वावलोकने शून्ये प्रतिषेधे धुतं शिरः ॥ २३ ॥
शीतग्रस्ते भयार्ते च त्रासिते ज्वरिते तथा ।
पीतमात्रे तथा मद्ये विधुतं चे भवेच्छिरः ॥ २४ ॥
पर्यायशः[6] पार्श्वगतं शिरः स्यात्परिवाहितम् ।
आधूतमुच्यते तिर्यक्सकृदुद्वाहितं च यत् ॥ २५ ॥
साधने विस्मये हर्षे स्मृते वामर्षिते तथा ।
विचारे निह्नुते चैव लीलायां परिवाहितम् ॥ २६ ॥
गर्वास्मैदर्शने चैव पार्श्वस्थोर्ध्वनिरीक्षणे ।
आधूतं तु शिरो ज्ञेयमात्मसंभावनादिषु ॥ २७ ॥
यदधः सकृदाक्षिप्तमवधूतं तु तच्छिरः ।
संदेशावाहनालापसंज्ञादिषु तदिष्यते ॥ २८ ॥
किंचित्पार्श्वानतग्रीवं शिरो विज्ञेयमञ्चितम् ।
व्याधिते मूर्च्छिते मेंचे चिन्तायां हनुधारणे ॥ २९ ॥
[16]उत्क्षिप्तबाहुशिखरं निकुञ्चितशिरोधरम् ।
निहञ्चितं शिरो[17] ज्ञेयं स्त्रीणामेतत्प्रयोजयेत् ॥ ३० ॥
गर्वे विलासे ललिते विब्बोके किलकिञ्चिते ।
मोट्टायिते कुट्टमिते स्तम्भे माने निहि(ह?)ञ्चितम् ॥ ३१ ॥

---

१. 'प्रतिकालेऽथ' का. २. 'व्यास्यपर्णणयोर्थेव' का. ३. 'दृश्यते' का. ४. 'तु' का. ५. 'तु' का. ६. 'पर्यायत' का. ७. 'सकृदुद्वाहितं चोर्ध्वमुद्वाहितमिति स्मृतम्' का. ८. 'उद्वाहितं' क ख. ९. 'स्थिते चा°' का. १०. 'विहृते' का. ११. 'गर्वेच्छादर्शने' का. १२. 'तथा चोर्ध्वं°' का. १३. 'मार्त (?)' १४. 'सचिन्ते तु रिते भवेत्' का. १५. '°शिरसस्तपाधितशिरोधर.' का. १६. 'उद्वाहितं तु कर्तव्यम्' का. १७. 'तु विज्ञेयम्' का. १८. 'स्तम्भमाने' का.

पराधृत्तानुकरणात्पराधृत्तं शिरः स्मृतम्।
तत्स्यान्मुखापहरणे पृष्ठतः[1] प्रेक्षणादिषु ॥ ३२ ॥
उत्क्षिप्तं चापि विज्ञेयमुन्मुखावस्थितं शिरः।
प्रांशुदिव्या[2]र्थयोगेषु स्यादुत्क्षिप्तं प्रयोगतः ॥ ३३ ॥
अधोमुखं[3]स्थितं चापि शिरः प्राहुरधोमुखम्[4]।
लज्जायां च प्रणामे च दुःखे चाधोगतं भवेत् ॥ ३४ ॥
सर्वतो लोलनाच्चापि शिरः स्यात्परिलोलितम्।
मूर्च्छाव्याधिमदावेशग्रह[5]निद्रादिषु स्मृतम् ॥ ३५ ॥
एभ्योऽन्ये बहवो भेदा लोकाभिनयसंश्रया[6]ः।
ते च लोकस्वभावेन प्रयोक्तव्याः प्रयोक्तृभिः ॥ ३६ ॥
त्रयोदशविधं ह्येतच्छिरःकर्म[7] मयोदितम्।
अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥ ३७ ॥
कान्ता भयानका हास्या करुणा चाद्भुता तथा।
रौद्री वीरा च बीभत्सा विज्ञेया रसदृष्टयः ॥ ३८ ॥
स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता।
जुगुप्सिता विस्मिता च स्थायिभावेषु दृष्टयः ॥ ३९ ॥
शून्या च मलिना चैव श्रान्ता[8] सलज्जिता तथा।
म्लाना[10] च शङ्किता चैव विषण्णा मुकुला तथा ॥ ४० ॥
कुञ्चिता चाभितप्ता[11] च जिह्मा[9] सललिता तथा।
वितर्किताऽर्धमुकुला विभ्रान्ता विप्लुता तथा ॥ ४१ ॥
आकेकरा विकोशा च त्रस्ता च[12] मदिरा तथा।
षट्त्रिंशद्दृष्टयो ह्येता नामतोऽभिहिता[13] मया ॥ ४२ ॥
अस्य दृष्टिविधानस्य नानाभावरसा[14]श्रितम्।
लक्षणं संप्रवक्ष्यामि यथाकर्म प्रयोगतः ॥ ४३ ॥

१. 'पृच्छत.' का. २. 'दिव्यास्त्र°' का. ३. 'अधोमुखं' का. ४. 'अधोगतम्' का. ५. '°वेगग्रह°' का. ६. 'स्थिता.' का. ७. 'शिरःकर्म' का. ८. 'दम्भा' का. ९. 'जिह्मा' घ-ख. १०. 'ग्लाना' का. ११. 'साभिमाना' का. १२. '°थ' का. १३. 'निहिता' का. १४. '°रसाश्रयम्' का.

हर्षप्रसादजनिता कान्तात्यर्थं समन्मथा ।
सभ्रूक्षेपकटाक्षा च शृङ्गारे दृष्टिरिष्यते ॥ ४४ ॥
प्रोद्वृत्तनिष्टब्धपुटा स्फुरदुद्वृत्ततारका ।
दृष्टिर्भयानकात्यर्थं भीता ज्ञेया भयानके ॥ ४५ ॥
क्रमादाकुञ्चितपुटा संविभ्रान्ताल्पतारका ।
हास्योद्दृष्टिस्तु कर्तव्या कुहकाभिनयं प्रति ॥ ४६ ॥
पतितोर्ध्वपुटा सास्रा मन्युमन्थरतारका ।
नासाग्रानुगता दृष्टिः करुणा करुणे रसे ॥ ४७ ॥
या चाकुञ्चितपक्ष्माग्रा साश्चर्योद्वृत्ततारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥ ४८ ॥
क्रूरा रूक्षारुणोद्वृत्तनिष्टब्धपुटतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसाश्रया ॥ ४९ ॥
निकुञ्चितपुटापाङ्गा घूर्णोपप्लुततारका ।
संश्लिष्टस्थिरपक्ष्मा च बीभत्सा दृष्टिरिष्यते ॥ ५० ॥
नासाग्रसक्तानिमिषा तथाधोभागचारिणी ।
आकेकरपुटा चैव शान्ता दृष्टिर्भवेदसौ ॥ ५१ ॥
रसजा दृष्टयो ह्येता विज्ञेया लक्षणान्विताः ।
अतः परं लक्षयिष्ये स्थायिभावसमाश्रयाः ॥ ५२ ॥
व्याकोशमध्या मधुरा स्थिरतारामिलाषिणी ।
सानन्दाश्रुकृता दृष्टिः स्निग्धैवं रतिभावजा ॥ ५३ ॥
चला हसितगर्भा च विशचाराभिलाषिणी ।
किंचिदाकुञ्चिता हृष्टा दृष्टिर्हासे प्रकीर्तिता ॥ ५४ ॥

---

१. '°तवोपामर्षं' क-ख. २. 'प्रस्फुरद्वृत्ततारका' का. ३. '°र्थभीता.' ४. 'विभ्रान्ताकुलतारका' का. ५. 'स्याद्दृष्टिस्तु प्रकर्तव्या' का. ६. 'साश्रा' का. ७. 'ताकुञ्चित' का. ८. '°द्भुत' का. ९. 'रूक्षोद्वृत्त' का. १०. 'घूर्णो°' क ख. ११. 'स्थित°' का. १२. पद्यमिदं का पुस्तके नास्ति. १३. 'रजसा' क-ख. १४. 'स्थिततारामिलाषिणः' क-ख. १५. 'सानन्दभ्रूकृता' क-ख. १६. 'स्निग्धेयं' का. १७. 'वलद्वद्धनतारका' का. 'सितसर्गे वे' क ख. १८. 'विश्वताराविमेषिणी' का. १९. 'दृष्टि हृष्टा' का.

अर्धसंकोचपुटा रुद्धतारा जलाविला ।
मन्दसंचारिणी दीना सा शोके दृष्टिरिष्यते ॥ ५५ ॥
रूक्षा स्थिरोद्वृत्तपुटा निष्टब्धोद्वृत्ततारका ।
कुटिलभ्रुकुटिर्दृष्टिः क्रुद्धा क्रोधेऽभिधीयते ॥ ५६ ॥
संस्थिते तारके यस्याः स्थिरा विकसिता तथा ।
सत्त्वमुद्गिरती दृप्ता दृष्टिरुत्साहसंभवा ॥ ५७ ॥
विस्फारितोभयपुटा भयकम्पिततारका ।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥ ५८ ॥
संकोचितपुटन्यासा दृष्टिर्मीलिततारका ।
लक्ष्योद्देशात्समुद्विग्ना जुगुप्सायां जुगुप्सिता ॥ ५९ ॥
भृशमुद्वृत्ततारा या दृष्टोभयपुटाञ्चिता ।
समा विकसिता दृष्टिर्विस्मिता विस्मये स्मृता ॥ ६० ॥
स्थायिभावाश्रया ह्येता दृष्टयो लक्षिता मया ।
संचारिणीनां दृष्टीनां संप्रवक्ष्यामि लक्षणम् ॥ ६१ ॥
समतारा समपुटा निष्कम्पा शून्यदर्शना ।
बाह्यार्थग्राहिणी क्षामा शून्या दृष्टिः प्रकीर्तिता ॥ ६२ ॥
[ प्रस्पन्दमानपक्ष्मान्ता नात्यर्थमुकुलैः पुटैः ।
मलिनान्ता च मलिना दृष्टिर्विस्मिततारका ॥ ६३ ॥
श्रमसम्ग्लापितपुटा क्षामाकाञ्चितलोचना ।
सन्ना पतिततारा च श्रान्ता दृष्टिः प्रकीर्तिता ॥ ६४ ॥ ]
किंचिदञ्चितपक्ष्माग्रा पतितोर्ध्वपुटा ह्रिया ।
त्रपाधोगततारा च दृष्टिर्लज्जान्विता तु सा ॥ ६५ ॥

---

१. 'ईषत्°' का. २. 'किंचित् संरब्धतारका' का. ३. 'सशोका' क-ख. ४. '°द्धतपुटा' का. ५. '°द्धततारका' का. ६. 'कुटिला' का. ७. 'विधीयते' का. ८. '°न्योमा (?)' क ख. ९. 'पक्ष्मोद्देशान्' का. १०. 'विमलोद्धततारा च' का. ११. 'नष्टो°' क ख. १२. '°न्विता' का. १३. '°स्मजा' का. १४. 'लक्षिता दृष्टयो' का. १५. 'ध्याया' (?) क ख. १६. 'कोष्टकबद्धा श्लोकद्वयी' क-ख-पुस्तकयोर्नास्ति. १७. '°धोमुखतार' का.

म्लानभ्रूपुटपक्ष्मा च शिथिला मन्दचारिणी ।
क्रमप्रविष्टतारा च ग्लाना दृष्टिस्तु सा स्मृता ॥ ६६ ॥
किंचिच्चला स्थिरा किंचिदुन्नता तिर्यगायता ।
गूढा चकिततारा च शङ्किता दृष्टिरिष्यते ॥ ६७ ॥
विषादविस्तीर्णपुटा पर्यस्तान्तानिमेषिणी ।
किंचिन्निष्टब्धतारा च कार्या दृष्टिर्विषादिनी ॥ ६८ ॥
स्फुरदाश्लिष्टपक्ष्माग्रा मुकुलोर्ध्वपुटाञ्चिता ।
सुखो(ख)मीलिततारा च मुकुला दृष्टिरुच्यते ॥ ६९ ॥
आनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा ।
संनिकुञ्चिततारा च कुञ्चिता दृष्टिरुच्यते ॥ ७० ॥
मन्दायमानतारा या पुटैः प्रचलितैस्तथा ।
संतापोपप्लुता दृष्टिरभितप्ता तु सव्यथा ॥ ७१ ॥
लम्बिताकुञ्चितपुटा शनैस्तिर्यङ्निरीक्षिणी ।
निगूढा गूढतारा च जिह्मा दृष्टिरुदाहृता ॥ ७२ ॥
मधुरा कुञ्चितान्ता च सभ्रूक्षेपा च सस्मिता ।
समन्मथविकारा च दृष्टिः सा ललिता स्मृता ॥ ७३ ॥
वितर्कोद्वर्तितपुटा तथैवोत्फुल्लतारका ।
अधोगतविचारा च दृष्टिरेषा वितर्किता ॥ ७४ ॥
अर्धव्याकोशपक्ष्मा च ह्लादार्धमुकुलैः पुटैः ।
स्मृतार्धमुकुला दृष्टिः किंचिल्ललिततारका ॥ ७५ ॥
अनवलिततारा च विभ्रान्ताकुलदर्शना ।
विस्तीर्णोत्फुल्लमध्या च विभ्रान्ता दृष्टिरुच्यते ॥ ७६ ॥

---

१. 'ग्लान' का. २. 'या' का. ३. 'भग्ना'(?) क. ख. ४. 'पर्यस्तान्ता' का. ५. 'चाला' क.-ख. ६. 'किंचिदुत्तुङ्गा किंचिदायता' का. ७. 'पर्यस्तारा' का. ८. 'स्फुटिताश्लिष्ट°' का. ९. 'सुखोन्मीलित°' का. १०. 'इष्यते' का. ११. 'सनि°' का. १२. '°च' का. १३. '°निरीक्षणा' का. १४. '°रिता' का. १५. '°तारा' का. १६. 'विभ्रान्ततारका या तु विभ्रान्तपुटदर्शना' का.

हास्यबीभत्सयोश्चापि प्रवेशनमिहेष्यते।
पातनं करुणे कार्यं निष्कामणमथाद्भुते॥ १००॥
प्राकृतं शेषभावेषु शृङ्गारे च विवर्तितम्।
स्वभावसिद्धमेवैतत्कर्म लोकक्रियाश्रयम्॥ १०१॥
एवं रसेषु भावेषु ताराकर्माणि योजयेत्।
अथात्रैव प्रवक्ष्यामि प्रकारान्दर्शनस्य तु॥ १०२॥
समं साच्यनुवृत्ते च ह्यालोकितविलोकिते।
प्रलोकितोल्लोकिते चाप्यवलोकितमेव च॥ १०३॥
समतारं च सौम्यं च यद्दृष्टं तत्समं स्मृतम्।
पक्ष्मान्तर्गततारं यत्र्यस्रं साचीकृतं तु तत्॥ १०४॥
रूपनिर्वर्णनायुक्तमनुवृत्तमिति स्मृतम्।
सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते॥ १०५॥
विलोकितं पृष्ठतस्तु पार्श्वाभ्यां तु प्रलोकितम्।
ऊर्ध्वमुल्लोकितं ज्ञेयमवलोकितमप्यधः॥ १०६॥
इत्येष दर्शनविधिः सर्वभावरसाश्रयः।
ताराकृतोऽस्यानुगतं पुटकर्म निबोधत॥ १०७॥
उन्मेषश्च निमेषश्च प्रसृतं कुञ्चितं समम्।
विवर्तितं प्रस्फुरितं पिहितं सवितालितम्॥ १०८॥
विश्लेषः पुटयोर्यस्तु स तून्मेषः प्रकीर्तितः।
समागमो निमेषः स्यादायामः प्रसृतं भवेत्॥ १०९॥
आकुञ्चितं कुञ्चितं स्यात्समं स्वाभाविकं स्मृतम्।
विवर्तितं समुद्वृत्तं स्फुरितं स्पन्दितं तथा॥ ११०॥

१. 'प्रवेश-' क ख. २. 'पपात' का. ३. 'सर्वेषु' का. ४. 'ताराकर्म' का. ५. 'तथा तत्रैव वक्ष्यामः' का. ६. 'प्रकारं' का. ७. 'सव्ये' का. ८. 'च आलो°' का. ९. 'चावलोकितमेव च'. १०. 'पक्षा' क ख. ११. 'साचीकृतं' का. १२. 'रूपनिर्वाणायुक्तं' का. १३. 'स्फुटम्' का. १४. 'सस्फुरितं' का. १५. 'सवितात्रयम्' क-ख. १६. 'निक्षेपे' क ख. १७. 'तु' इति नास्ति क ख पुस्तकयोः. १८. 'समागतो' का. १९. '°यामस्तु प्रसारितम्' का.

स्थगितं विहितं प्रोक्तमाहतं तु वितालितम् ।
अथैषां रसभावेषु विनियोगं निबोधत ॥ १११ ॥
क्रोधे विवर्तितं[3] कार्यं निमेषोन्मेषणैः सह ।
विस्मयार्थे च हर्षे च वीरे च प्रसृतं स्मृतम् ॥ ११२ ॥
अनिष्टदर्शने गन्धे रसे स्पर्शे च कुञ्चितम् ।
शृङ्गारे च समं कार्यमीर्ष्यासु स्फुरितं तथा ॥ ११३ ॥
सुप्तमूर्च्छितवातोष्णधूमवर्षाञ्जनादिषु ।
नेत्ररोगे च पिहितमभिघाते वितालितम् ॥ ११४ ॥
इत्येषु रसभावेषु तारकापुटयोर्विधिः ।
कार्यानुगतमस्यैव भ्रुवोः कर्म निबोधत ॥ ११५ ॥
उत्क्षेपः पातनं चैव भ्रुकुटी चतुरं भ्रुवोः ।
कुञ्चितं रेचितं कर्म सहजं चेति सप्तधा ॥ ११६ ॥
भ्रुवोरुद्गतिरुत्क्षेपः सममेकैकशोऽपि वा ।
सममेकैकशोऽप्येव पातनं स्यादधोगति ॥ ११७ ॥
भ्रुवोर्मूलसमुत्क्षेपाद्भ्रुकुटी परिकीर्तिता ।
चतुरं किंचिदुच्छ्वासान्मधुरायतयोर्भ्रुवोः ॥ ११८ ॥
एकस्या उभयोर्वापि मृदुभङ्गेन कुञ्चितम् ।
एकस्या एव ललितादुत्क्षेपाद्रेचित[20] भ्रुवः ॥ ११९ ॥
सहजातं तु सहजं कर्म स्वाभाविकं स्मृतम् ।
अथैषां संप्रवक्ष्यामि रसभावप्रयोजनम् ॥ १२० ॥

---

१. 'छादितं पिहित' क-ख. २. 'विलोलितम्' का. ३. '°त कार्यं.' क-ख. ४. '°यार्थेषु°' का ५ 'वीर्ये चैव प्रसारितम्' का. ६. 'अदृष्टदर्शने' क-ख. ७. 'स्फुटितं' क ख. ८. 'भवेत्' का. ९. 'वर्षाञ्जनादिषु' क ख. 'वर्षाद्यनर्थिषु' का. १०. 'वितालिते' क-ख. ११. 'इत्येवं' का. १२. 'कार्येऽनुगत°' का. १३. 'उत्क्षेपं' का. १४. 'तानन' क ख. १५. 'चेत' का. १६. 'उद्गति.' का. १७. 'एकस्य वा द्वयोर्वापि पातनं स्यादधोमुखम्' का. १८. 'मधुरा आयता' क ख. १९. 'भङ्गो निकुञ्चित' क-ख. २०. '°रचित' का. २१. 'सहज' क-ख.

कोपे [1]वितर्के हेलायां लीलादौ सहजे तथा।
दर्शने श्रवणे चैव भ्रुवमेकां समुत्क्षिपेत् ॥ १२१ ॥
[2]उत्क्षेपो विस्मये हर्षे रोषे चैव द्वयोरपि।
[3]असूयितजुगुप्सायां हासे घ्राणे च पातनम् ॥ १२२ ॥
क्रोधस्थानेषु दीप्तेषु योजयेद्भ्रुकुटीं बुधः।
शृङ्गारे ललिते सौम्ये स्पर्शे च चतुरं भवेत् ॥ १२३ ॥
मोट्टायिते कुट्टमिते विलासे किलकिञ्चिते।
[4]निकुञ्चितं तु कर्तव्यं नृत्ये योज्यं तु रेचितम् ॥ १२४ ॥
अनाविद्धेषु भावेषु विद्यात्स्वाभाविकं बुधः।
[5]इत्येता दृष्टयः प्रोक्ता नासाकर्म निबोधत ॥ १२५ ॥
नता मन्दा विकृष्टा च सोच्छ्वासा [6]च विघूर्णिता।
[7]स्वाभाविकी चेति बुधैः षड्विधा नासिका स्मृता ॥ १२६ ॥
[ [8]नता मन्दा विकृष्टा च सोच्छ्वासा च विघूर्णिता।
स्वाभाविका चेति बुधैः षड्विधा नासिका स्मृता ॥ १२७ ॥]
नता मुहुः श्लिष्टपुटा मन्दा तु निभृता [9]मता।
[10]विकृष्टोत्फुल्लितपुटा सोच्छ्वासाकृष्टमारुता ॥ १२८ ॥
[11]विघूर्णिता संकुचिता समा [12]स्वाभाविका स्मृता।
[ [13]नासिकालक्षणं ह्येतद्विनियोगं निबोधत ॥ १२९ ॥
विच्छिन्नमन्दरुदिते सोच्छ्वासे च नता स्मृता।]
निर्वेदौत्सुक्यचिन्तासु मन्दा शोके [14]प्रकीर्तिता ॥ १३० ॥
विकृष्टा तीव्र[15]गन्धोर्ध्वश्वासरोषभयार्तिषु।
सोच्छ्वासा मधुरे गन्धे दीर्घोच्छ्वासकृतेषु च ॥ १३१ ॥

---

१. 'वितर्कें' क-ख. २. 'उत्क्षेपे' का. ३. 'असूयते' का. ४. 'विकुञ्चित' का. ५ 'इत्येव तु भ्रुव' का. ६. '°नुविकूणिता' क-ख. ७. 'स्वाभाविका' का. ८. पद्यमिदं क-ख पुस्तकयोर्नास्ति ९. 'स्मृता' का. १०. 'विकृष्टा पुल्लिनपुटा' क-ख. ११. 'विघूर्णिता' क-ख. १२. 'स्वाभाविकी' क-ख. १३. इदमपि पद्यं क-ख पुस्तकयोर्नास्ति. १४. 'तु कीर्तिता' का. १५. 'गन्धा च' क-ख.

[1]विघूर्णितोक्ता हासे[2] च जुगुप्सायामसूयिते ।
स्वाभाविकाशेषभावेष्वित्येवं नासिका स्मृता ॥ १३२ ॥
क्षामं फुल्लं च पूर्णं च कम्पितं कुञ्चितं समम् ।
षड्विधं गण्डमुद्दिष्टं[3] तस्य लक्षणमुच्यते ॥ १३३ ॥
क्षामं त्ववनतं ज्ञेयं फुल्लं विकसितं भवेत् ।
उन्नतं पूर्णमत्रोक्तं[4] कम्पितं स्फुरितं[5] भवेत् ॥ १३४ ॥
स्यात्कुञ्चितं संकुचितं समं प्राकृतमुच्यते ।
गण्डयोर्लक्षणं प्रोक्तं विनियोगं निबोधत ॥ १३५ ॥
क्षामं दुःखेषु कर्तव्यं प्रहर्षे फुल्लमेवं च ।
पूर्णमुत्साहगर्वेषु[6] रोषहर्षेषु[7] कम्पितम् ॥ १३६ ॥
कुञ्चितं च सरोमाञ्चं[8] कम्पे शीते[9] भये ज्वरे ।
प्राकृतं शेषभावेषु गण्डकर्म भवेदिति ॥ १३७ ॥
[10]विवर्तनं कम्पनं च विसर्गो विनिगूहनम् ।
[11]संदष्टकं समुद्गश्च[12] षट्कर्माण्यधरस्य तु ॥ १३८ ॥
[13]विघूर्णनं विवर्तस्तु वेपनं कम्पनं स्मृतम् ।
विनिष्क्रामो विसर्गस्तु प्रवेशो विनिगूहनम् ॥ १३९ ॥
[14]संदष्टको द्विजैर्दष्टः समुद्गृत्तं[15] समुद्गकः ।
इत्योष्ठलक्षणं[16] प्रोक्तं विनियोगं निबोधत ॥ १४० ॥
असूयावेदनावज्ञालस्यादिषु[17] विवर्तनम् ।
कम्पनं[18] कोपशीतार्तिभयरोगजयादिषु ॥ १४१ ॥

१. 'विकूणतार्तौ' क-ख. २. 'हास्येषु' का. ३. 'द्विष्टमस्य' क ख. ४. '°मानोक्तं' क-ख. ५. '°मिष्यते' का. ६. '°उच्छाह' क-ख. ७. 'रोम°' क-ख. ८. 'सर्वे' का. ९. 'शीतभये' क-ख. १०. 'विकर्तनं' क ख.; 'विवर्तने' का. ११. 'संदष्टकं' क-ख. १२. 'समुद्गगं' का. १३. 'विकूणनं विवर्तस्तु' क-ख. १४. 'संदष्टकं द्विजैर्दष्टं' क-ख. १५. 'समुद्गः सहिता यति.' का. १६. 'इत्यष्टौ' क-ख. १७. '°वज्ञा' क-ख., 'लज्जावस्यादिषु' का. १८. 'कम्पनं वेपनं शीतज्वररोषभयादिषु' का.

स्त्रीणां विलासे विव्वोके विसर्गः सुरते स्मृतः।
विनिगूहनमायासे सदष्टं क्रोधकर्मसु ॥ १४२ ॥
समुद्गस्त्वनुकम्पायां चुम्बने चाभिनन्दने।
इत्योष्ठकर्माण्युक्तानि चिबुकस्य निबोधत ॥ १४३ ॥
कुट्टनं खण्डनं छिन्नं चिकितं लेहनं समम्।
दष्टं च दन्तक्रियया चिबुके त्विह लक्ष्यते ॥ १४४ ॥
कुट्टनं दन्तसघर्षः सस्फोटः खण्डनं मुहुः।
छिन्नं तु गाढसश्लेषश्चिकितं दूरमुचतम् ॥ १४५ ॥
लेहनं जिह्वया लेहः किंचिचेष्टः समं भवेत्।
दन्तैर्दष्टेऽधरे दष्टमित्येषां विनियोजनम् ॥ १४६ ॥
भयशीतज्वरव्याधिमस्तीना कुट्टनं भवेत्।
जप्याध्ययनसलापभक्षयोगे च खण्डनम् ॥ १४७ ॥
छिन्नं व्याधौ भये शीते व्यायामे रुषिते क्षिते।
जृम्भणे चिकितं कार्यं तथा लेह्ये च लेहनम् ॥ १४८ ॥
समं स्वभावभावेषु सदष्टं क्रोधकर्मसु।
इति दन्तोष्ठजिह्वाना करणाचिबुकक्रिया ॥ १४९ ॥
[ विधुत विनिवृत्तं च निर्भ(र्भु)ग्नं भुग्नमेव च।
निवृत्तं (विवृत ?) च तथोद्वाही(हि ?) कर्माण्यत्रास्यजानि तु ॥ १५०

१. 'विसर्गे रञ्जने तथा' का. २ 'सदष्टं' क ख. ३. 'क्रोधकर्मणि' का. ४. '°तिकम्पाङ्गधूनने चाभिनन्दने' क ख. ५ 'दन्तचिकितं' क-ख. ६. 'चुक्षित' का. ७. 'दष्टं' क-ख. ८. 'भक्ष्यते' क ख. ९ 'सदर्पे' क ख. १० 'सस्फोट' क-ख. ११. 'चुक्षितं दूरविच्युति' का. १२ 'किंचिल्लेप' क-ख. १३. 'दष्टे' क ख. १४. 'दष्ट' क-ख. 'दष्ट इत्ये°' का. १५ 'मस्ताना' क ख. १६. 'जपा..... यन सतापभक्षायातेषु' क-ख. १७ 'व्याधिभये' क ख. १८. 'शीतेष्वायामे' क ख. १९. 'कूजिते-म्रते' क ख. २० 'चुक्षित' का. २१ 'तथालोक्ये' क ख. २२. 'सदष्टं' क ख. २३. 'विधुत' इत्यादयोऽष्टौ श्लोका क-ख पुस्तकयोर्न सन्ति.

स्याद्वृत्तं विनिवृत्तं स्याद्विधुतं तिर्यगायतम् ।
अवाङ्मुखं च निर्भुग्नं व्याभुग्नं किंचिदायतम् ॥ १५१ ॥
विश्लिष्टोष्ठं च विवृतमुद्वास्यु(हु ?)त्क्षिप्तमेव च ।
विनिवृत्तमसूयायामीर्ष्याक्रोधकृतेन च ॥ १५२ ॥
अवज्ञाविहृतादौ च स्त्रीणां कार्यं प्रयोक्तृभिः ।
विधुतं वारणे चैव नैवमित्येवमादिषु ॥ १५३ ॥
निर्भुग्नं चापि विज्ञेयं गम्भीरालोकनादिषु ।
भुग्नं लज्जान्विते योज्यं यती(ति ?)नां तु स्वभावजम् ॥ १५४ ॥
निर्वेदौत्सुक्यचिन्तासु तथा च विनिमन्त्रणे ।
विवृत्तं ( तं? ) चापि विज्ञेयं हास्यशोकभयादिषु ॥ १५५ ॥
स्त्रीणामुद्वाहलीलाया गर्वे गच्छत्वनादरे ।
एवं नामेति कार्यं च कोपवाक्ये विचक्षणैः ॥ १५६ ॥
समं साचि(ची ?)कृताद्युक्ता यच्च दृष्टिविकल्पितम् ।
तज्ज्ञेस्तेनानुसारेण कार्यं तदनुगं मुखम् ॥ १५७ ॥ ]
अथातो मुखरागस्तु चतुर्धा स च कीर्तितः ।
स्वाभाविकः प्रसन्नश्च रक्तः श्यामोऽर्थसंश्रयः ॥ १५८ ॥
स्वाभाविकस्तु कर्तव्यः स्वभावाभिनयाश्रयः ।
मध्यस्थादिषु भावेषु मुखरागः प्रयोक्तृभिः ॥ १५९ ॥
प्रसन्नस्त्वद्भुते कार्यो हास्यशृङ्गारयोस्तथा ।
वीररौद्रमदाद्येषु रक्तः स्यात्करुणे तथा ॥ १६० ॥
भयानके सबीभत्से श्यामं संजायते मुखम् ।
एवं भावरसार्थेषु मुखरागं प्रयोजयेत् ॥ १६१ ॥
शाखाङ्गोपाङ्गसंयुक्तः कृतो ह्यभिनयः शुभः ।
मुखरागविहीनस्तु नैव शोभान्वितो भवेत् ॥ १६२ ॥
शारीराभिनयोऽल्पोऽपि मुखरागसमन्वितः ।
द्विगुणां लभते शोभां रात्राविव निशाकरः ॥ १६३ ॥

---

१. 'मुखरागश्चतुर्धा परिकीर्तित' म. २. 'रागप्रयोक्तृभि.' प-म.

नयनाभिनयोऽपि स्यात्स्थानाभावरसान्वितः ।
मुखरागान्वितो यस्मात्सोऽयमत्र प्रतिष्ठितम् ॥ १६४ ॥
यथा नेत्रं प्रसर्पेत मुखभ्रूदृष्टिसंयुतम् ।
तथा भावरसोपेतं मुखरागं प्रयोजयेत् ॥ १६५ ॥
इत्येवं मुखरागस्तु प्रोक्तो भावरसाश्रयः ।
अतःपरं प्रवक्ष्यामि ग्रीवाकर्म द्विजोत्तमाः ॥ १६६ ॥
समा ना(न)तोन्नता त्र्यस्रा रेचिता कुञ्चिताञ्चिता ।
वलिता च निवृत्ता च ग्रीवा नवविधार्थतः ॥ १६७ ॥
समा स्वाभाविकी ध्यानस्वभावजपकर्मसु ।
नता नतास्यालंकारबन्धे कण्ठावलम्बने ॥ १६८ ॥
उन्नताम्युन्नतमुखी ग्रीवा चोर्ध्वनिवेशने ।
त्र्यस्रा पार्श्वगता चैव स्कन्धभारे च दुःखिते ॥ १६९ ॥
रेचिता विधुतभ्रान्ता हावे मथननृत्तयोः ।
कुञ्चिताकुञ्चिते मूर्ध्नि धौरिते गलरक्षणे ॥ १७० ॥
अञ्चितापस्तोद्बन्धकेशकर्षोच्चदर्शने ।
पार्श्वोन्मुखी स्याद्वलिता ग्रीवाभङ्गे च वीक्षणे ॥ १७१ ॥
निवृत्ताभिमुखीभूता स्वस्थानाभिमुखादिषु ।
इत्यादिलोकभावार्था ग्रीवाभङ्गैरनेकधा ॥ १७२ ॥
ग्रीवाकर्माणि सर्वाणि शिरःकर्मानुगानि हि ।
शिरसः कर्मणा कर्म ग्रीवायाः संप्रवर्तते ॥ १७३ ॥
इत्येतल्लक्षणं प्रोक्तं शीर्षोपाङ्गसमाश्रयम् ।
अङ्गकर्माणि शेषाणि वदतो मे निबोधत ॥ १७४ ॥

इति श्रीभारतीये नाट्यशास्त्रे उपाङ्गाभिनयो नामाष्टमोऽध्यायः ।

---

१. '°रसस्फुट' क-ख. २. 'यथानेनं प्रतिष्ठितम्' क-ख. ३. '°संयुते' क-ख. ४. 'इत्येव' क-ख. ५. 'ग्रीवाकर्माणि वै द्विजाः' का. ६. 'चोन्नता' क-ख. ७. 'तना' क-ख. ८. 'मैत्रेयोऽर्वादिदर्शने' क-ख. ९. '°रेऽस्य' का. १०. 'गदिता' क-ख. ११. 'भारिते' क-ख. १२ '°तापस्ततायद्धकेशाकर्षे च' क-ख. १३. 'ग्रीवाभेदैः' क-ख. १४. 'च' का. १५. 'सम्प्रवर्तते' क-ख. १६. 'गदतो' का. १७. 'उपाङ्गविधानं' का.

नवमोऽध्यायः ।

एवमेतच्छिरोनेत्र[1]भ्रूनासोष्ठक[2]पोलजम् ।
कर्मलक्षणसंयुक्तमपाङ्गानां मयोदितम् ॥ १ ॥
[3]हस्तोरःपार्श्वजठरकटीजङ्घोरुपादतः ।
लक्षणं संप्रवक्ष्यामि विनियोगं च तत्त्वतः ॥ २ ॥
हस्तानां तु[4] प्रवक्ष्यामि कर्म नाट्यप्र[5]योगजम् ।
यथा येनाभिनेयं च ग[6]दतो मे निबोधत ॥ ३ ॥
पताकस्त्रिपताकश्च तथा वै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥ ४ ॥
मुष्टिश्च शिखराख्य[7]श्च कपित्थः खटकामुखः[8] ।
सूच्यास्यः पद्मकोपश्च तथा वै सर्पशीर्षकः[9] ॥ ५ ॥
[10]मृगशीर्षः परो ज्ञेयो हस्ताभिनययोक्तृभिः ।
[11]लाङ्गूलोत्पलपद्मश्च चतुरो भ्रामरस्तथा ।
हंसास्यो हंसपक्षश्च संदंशो मुकुलस्तथा ॥ ६ ॥
ऊर्णनाभस्ताम्रचूडश्च[12]तुर्विंशदिमे कराः ।
असंयुताः सयुताश्च गदतो मे निबोधत ॥ ७ ॥
अञ्जलिश्च कपोतश्च कर्कटः स्वस्तिकस्तथा ।
खट[13]का वर्धमानश्च ह्यु[14]त्सङ्गो निषधस्तथा ॥ ८ ॥
[15]दोलः पुष्पपुटश्चैव तथा मकर एव च ।
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ॥ ९ ॥

---

१. '°नेत्रे' क-ख. २. 'कपोलकम्' क ख. ३. श्लोकोऽयं क-ख-पुस्तकयोरत्र नास्ति परमेकश्लोकोत्तरमस्ति. ४. 'च' भा. ५. 'प्रयोजकम्' क ख. ६. 'तन्मे निगदतः शृणु' भा. ७. 'शिखराभ्यश्च' क-ख. ८. 'कटका°' भा. ९. 'सर्पशास्तृगशीर्षक' क-ख. १०. 'पद्यार्धमिदं क ख-पुस्तकयोर्नास्ति. ११. 'काङ्गूलोत्पं (?) क-ग. १२. 'चतुर्विंशतिकीर्तिता' इति क-ख. १३. 'कटका' भा. १४. 'हि' इति भा पुस्तके नास्ति. १५. 'दोलपुष्पपुटाश्चैव' क ख.

एते तु[1] सयुता हस्ता मया प्रोक्तास्त्रयोदश ।
नृत्तहस्तानतश्चो[2]र्ध्वं गदतो मे निबोधत ॥ १० ॥
चतुरस्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ।
स्वस्तिकौ विप्रकीर्णौ चा[3]प्यरालखटकामुखौ ॥ ११ ॥
अविद्धवक्रौ सूच्यास्यौ[4] रेचितावर्धरेचितौ ।
उत्तानावञ्चितौ चैवं[5] पल्लवौ च तथाकरौ ॥ १२ ॥
नि[6]तम्बावपि[7] विज्ञेयौ केशबन्धौ तथैव च ।
[8]लताख्यौ च तथा प्रोक्तौ करिहस्तौ तथैव च ॥ १३ ॥
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ।
ज्ञेयौ गरुडपक्षौ च हंसपक्षौ तथैव च ॥ १४ ॥
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा[10] ।
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डले ॥ १५ ॥
[11]मुष्टिकः स्वस्तिकश्चापि नलि[12]नीपद्मकोपकौ ।
अलपल्लवोल्बणौ च ललितौ वलितौ तथा ॥ १६ ॥
चतुःषष्टिकरा ह्येते नामतोऽभिहिता मया ।
[13]यथालक्षणमेतेषां कर्माणि च निबोधत ॥ १७ ॥
[14]प्रसारिताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
कुञ्चितश्च तथाङ्गुष्ठः स पताक इति स्मृतः ॥ १८ ॥
एष प्रहारपाते प्रतापने नोदने प्रहर्षे च ।
[15]गर्वेऽप्यहमिति तज्ज्ञैर्ल[16]लाटदेशस्थितः कार्यः ॥ १९ ॥

---

१. 'सयुता' क-ख. २. 'च' इति क-ख पुस्तकयोर्नास्ति. 'चाप्यरालावटकामुखौ' क-ख. ३. 'कटका°' का. ४. 'सूच्यास्यौ' का. ५. '…………चैव' क-ख. ६. 'चापि' का. ७. 'नितम्बौ चापि' का. ८. 'सप्रोक्तौ करिहस्तौ च लताख्यौ च तथैव च' का. ९. 'दण्डपक्षाव्रत परम्' क-ख. १०. 'तथा' इति क-ख-पुस्तकयोस्त्रुटितम्. ११. 'मुष्टिक. स्वस्ति' इति गलित क-ख पुस्तकयो; 'स्वस्तिकं' का. १२. '°नौ पद्मकोपकौ' क-ख. १३. 'अथ लक्षण' का. १४. 'प्रसारिता समाः सर्वा.' क-ख. १५. 'गर्वेष्वह°' क-ख. १६. 'ललाटदेशोत्थितः कार्य.' क-ख.

एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च ।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः ॥ २० ॥
'स्वस्तिकविच्युतिकरणात् पल्लवपुष्पोपहारशष्पाणि ।
विरचितमुर्वीसंस्थं यद्द्रव्यं तच्च निर्देश्यम् ॥'
स्वस्तिकविच्युतिकरणात्पुनरेवाधोमुखेन कर्तव्यम् ।
संवृतविवृतं पाल्यं छन्नं निबिडं च गोप्यं च ॥ २१ ॥
अस्यैव चाङ्गुलीभिस्त्वधोमुखप्रस्थितोत्थितचलाभिः ।
वायूर्मिवेगवेलाक्षोभौघोघश्च कर्तव्यः ॥ २२ ॥
उत्साहनं बहु तथा महाजनप्रांशुपुष्करमहतिम् ।
पक्षोत्क्षेपाभिनयं रेचककरणेन कुर्वीत ॥ २३ ॥
परिघृष्टतलस्थेन तु धौतं मुदितं प्रमृष्टपिष्टे च ।
पुनरेव शैलधारणमुत्पाटनमेव चाभिनयेत् ॥ २४ ॥
एवमेव प्रयोक्तव्यः स्त्रीपुंसाभिनये करः ।
अतःपरं प्रवक्ष्यामि त्रिपताकस्य लक्षणम् ॥ २५ ॥
पताके तु यदा वक्रानामिका त्वङ्गुलिर्भवेत् ।
त्रिपताकः स विज्ञेयः कर्म चास्य निबोधत ॥ २६ ॥
आवाहनमवतरणं विसर्जनं वीरणं प्रवेशश्च ।
उन्नामनं प्रणामो निदर्शनं विविधवचनं च ॥ २७ ॥
माङ्गल्यद्रव्याणां स्पर्शः शिरसोऽथ संनिवेशश्च ।
उष्णीषमुकुटधारणनासास्यश्रोत्रसंवरणम् ॥ २८ ॥
अस्यैव चाङ्गुलीभ्यामधोमुखप्रेस्थितोत्थितचलाभ्याम् ।
रेधुमुखपर्वनस्रोतोभुजगभ्रमरादिकान्कुर्यात् ॥ २९ ॥

१. आर्येयं नास्ति क-ख-पुस्तकयो २. 'विशुति' (?) का. ३. '°चलिताभिः' क-ख. ४. '°क्षोभ°' का. ५ 'महत्' का. ६. 'महताम्' का. ७. '°करणैः प्रयुञ्जीत' का. ८. 'परिमृष्ट°' का. ९. 'पिष्ठे' का. १०. '°उद्घाटन–' का. ११. 'धारणं' क-ख. १२. 'प्रस्थितौ स्थितचलाभ्याम्' का. १३. 'स्फुरट' का. १४. 'पतनश्रोतो' क-ख. १५. 'भुजगतभ्रमरादिकान्' का.

एतेन त्वभिनेय नाहं न त्वं न कृत्यमिति चार्थे।
आवाहने विसर्गे धिगिति वचने च सावज्ञम् ॥ ५० ॥
अङ्गुल्यो यस्य हस्तस्य तलमध्येऽग्रसंस्थिताः।
तासामुपरि चाङ्गुष्ठः स मुष्टिरिति संज्ञितः ॥ ५१ ॥
एष प्रहारे व्यायामे निर्गमे हस्तपीडने।
संवाहनेऽसियष्टीनां कुन्तदण्डग्रहे तथा ॥ ५२ ॥
अस्यैव तु यदा मुष्टेरूर्ध्वोऽङ्गुष्ठः प्रयुज्यते।
हस्तः स शिखरो नाम तथा ज्ञेयः प्रयोक्तृभिः ॥ ५३ ॥
रश्मिकुशाङ्कुशधनुषां तोमरशक्तिप्रमोक्षणं चैव।
अधरोष्ठपादरञ्जनमलकस्योत्क्षेपणं चैव ॥ ५४ ॥
अस्यैव शिखराख्यस्य मुखेऽङ्गुष्ठनिपीडिता।
यदा प्रदेशिनी नक्रा स कपित्थस्तदा स्मृतः ॥ ५५ ॥
असिचापचक्रतोमरकुन्तगदाशक्तिवज्रबाणानि।
शस्त्राण्यभिनेयानि तु कार्यं सत्यं च पथ्यं च ॥ ५६ ॥
उत्क्षिप्तवक्रा तु यदानामिका सकनीयसी।
अस्यैव तु कपित्थस्य तदासौ खटकामुखः ॥ ५७ ॥
होत्रं हव्यं छत्रं प्रग्रहपरिकर्षणं च व्यजनकम्।
आदर्शधारणं खण्डनं तथा पेषणं चैव ॥ ५८ ॥
आयतदण्डग्रहणं मुक्ताप्रालम्बसंग्रहं चैव।
स्रग्दामधारणं खलु वस्त्रान्तालम्बनं चैव ॥ ५९ ॥
मन्थानशराकर्षणपुष्पावचयप्रतोदकार्याणि।
अङ्कुशरज्वाकर्षस्त्रीदर्शनमेव कार्यं च ॥ ६० ॥

१ 'चाहं' क ख. २ 'चार्थे' क ख. ३ 'विसर्गेच' क ख. ४ 'तलमाध्यप्रसंस्थिता' क ख. ५ 'पीडने तथा' क ख. ६. 'दण्डकुन्तग्रहे' क ख. ७ 'तदा' का. ८. 'पुस्तकद्वयेऽपि त्रुटिचिह्न नास्ति' क ख. ९ '°मोक्षणे' क ख. १० 'ग्रहष्ठकनिपीडिता' क ख. ११. '°वर्गाणि' क ख. १२ 'पथ्य च तथ्य च' क ख. १३. '°चक्रा' का. १४. 'कटकामुख' का. १५. 'कर्पणं' क ख. १६ 'पुष्पभच' क ख. १७. '°कर्षणं' का.

खटकाख्ये यदा हस्ते तर्जनी संप्रसारिता ।
हस्तः सूचीमुखो नाम तदा ज्ञेयः प्रयोक्तृभिः ॥ ६१ ॥
अस्या विविधान्योगान्वक्ष्यामि समासतः प्रदेशिन्याः ।
ऊर्ध्वनतलोलकम्पितविजृम्भितोद्वाहितचलाया: ॥ ६२ ॥
चक्रं तडित्पताकामञ्जर्यः कर्णचूलिकाश्चैव ।
कुटिलगतयश्च सर्वे निर्देश्याः साधुवादाश्च ॥ ६३ ॥
बालोरगपल्लवधूपदीपवल्लीलताशिखण्डाश्च ।
परिपतनवक्रमण्डलमभिनेयान्यूर्ध्वलोलितया ॥ ६४ ॥
भूयश्चोर्ध्वविरचिता तारा घोणैकदण्डयष्टिषु च ।
विनता च तथा कार्या दंष्ट्रिषु तथास्ययोगेन ॥ ६५ ॥
पुनरपि मण्डलगतयः सर्वग्रहणं तथैव लोकस्य ।
प्रणतीकृता च कार्या ध्यायेदर्थे च दिवसे च ॥ ६६ ॥
वदनाभ्यासे कुञ्चितविजृम्भिता वाक्यरूपणे कार्या ।
[11]........................................ ॥ ६७ ॥
श्रवणाभ्यासे वक्रा विजृम्भणे वाक्यरूपणे च गुरो ।
सेति वादति (!) च योज्या प्रसारितोत्कम्पितोत्ताना ॥ ६८ ॥
कार्या प्रकम्पिता रोषदर्शने स्वेदमार्जने चैव ।
कुन्तलककुण्डलाङ्गदगण्डाश्रयेसंश्रयेऽभिनये ॥ ६९ ॥
गर्वेऽहमिति ललाटे रिपुनिर्देशे [16]तथैव च क्रोधे ।
कोऽसाविति निर्देशेऽर्थे कर्णकण्डूयने चैव ॥ ७० ॥
संयुक्तासंयोगे कार्या विश्लेषिता वियोगे च ।
कलहे स्वस्तिकयुक्ता परस्परोत्पीडिता बन्धे ॥ ७१ ॥

---

१. 'खटकाख्ये' क०. २. 'गुरुप्रसरिता' क-ग. ३. 'अस्य विविधान् प्रयोगान्' क.ग. ४. 'ऊर्ध्वनम्र°' क.ग. ५. '°चलेषा' क-ग. ६. 'साधुवादाय' क-ग. ७. '°वल्लराधूम°' क-ग. ८. '°भिनेयं चोर्ध्वं' क. ९. '°र्ध्वं विरचिता तु' क-ग. १०. 'दंष्ट्रेषु च' ख ग. ११. 'वदनं हाव° ध्वर्थे च स्यादेर्थे च' ग. १२. अत्र त्रुटितो ग्रन्थ इति प्रतिभाति. १३. 'लेदमार्जने चैव' क. १४. 'कुन्तलकुण्डल' क. १५. '°श्रयेऽभिनये' क. १६. 'तथैव च क्रोधे' क-ग. १७. 'च' क-ग.

द्वाभ्यां तु वामपार्श्वे दक्षिणतो दिननिशावसानानि।
अभिमुखपराङ्मुखाभ्यां विश्लिष्टाभ्यां प्रयुञ्जीत॥ ७२॥
पुनरपि च भ्रमिताग्रा रूपशिलावर्तयन्त्रशैलेषु।
परिवेषणे तथैव हि कार्या चाधोमुखी नित्या॥ ७३॥
श्लिष्टा ललाटपट्टेष्वधोमुखी शम्भुरूपेण।
शक्रस्याभ्युत्थानाचज्ञैस्तिर्यक्स्थिता कार्या॥ ७४॥
द्वाभ्यां प्रदर्शयेन्नित्यं संपूर्णं चन्द्रमण्डलम्।
श्लिष्टा ललाटे शक्रस्य कार्या ह्युत्तानसंश्रया॥ ७५॥
परिमण्डलभ्रमितया मण्डलयोर्दर्शयेच्च चन्द्रस्य।
हरनयने च ललाटे शक्रस्य तिर्यगुत्ताना॥ ७६॥
यस्याङ्गुल्यस्तु विरलाः सहाङ्गुष्ठेन कुञ्चिताः।
ऊर्ध्वा हंसंगताग्राश्च स भवेत्पद्मकोषकः॥ ७७॥
बिल्वकपित्थफलानां ग्रहणं कुचदर्शनं च नारीणाम्।
ग्रहणे ह्यामिषलाभे भवन्ति ताः कुञ्चिताग्रास्तु॥ ७८॥
देवार्चनबलिहरणे समुद्गके साग्रपिण्डदाने च।
कार्यः पुष्पप्रकरश्च पद्मकोषेण हस्तेन॥ ७९॥
मणिबन्धश्लिष्टाभ्यां प्रविरलचलिताङ्गुलीयुतकराभ्याम्।
कार्योपवर्तिताभ्यां विकसितकमलोत्पलाभिनयः॥ ८०॥
अङ्गुल्यः संहताः सर्वाः सहाङ्गुष्ठेन यस्य च।
तथा निम्नतलश्चैव स तु सर्पशिराः करः॥ ८१॥

---

१. 'वामगमन' क-ख. २. श्लोकद्वयी क ख पुस्तकयोर्नास्ति ३. 'संदर्शयेत्' का. ४. 'कार्योत्पलं' का. ५. 'विरला' क ख. ६. 'कुञ्चिता' क-ख. ७. 'हंसगताग्राश्च' क-ख. ८. 'देवार्चने' क ख. ९. 'समुद्गे' का. १०. 'पद्मकोशेन' का. ११. क ख-पुस्तकयोर्लेखकादिदोषाच्छन्दोभङ्गदूषितोऽयं पाठः—

मणिबन्धनविश्लिष्टविरलचलिताङ्गुलिकराभ्याम्।
कार्ये विवर्तिताभ्यां विकमलोत्पलाभिनयः॥ एवमन्यत्रापि ज्ञेयम्.

१२. 'सहिताः' का. १३. 'च' क-ख. १४. 'सर्पशिरः' का.

एष सलिलप्रदाने भुजगगतौ तोयसेचने चैव ।
आस्फोटने च योज्यः करिकुम्भास्फालनाद्येषु ॥ ८२ ॥
अधोमुखीनां सर्वासामङ्गुलीनां समागमः ।
कनिष्ठाङ्गुष्ठकावूर्ध्वौ स भवेन्मृगशीर्षकः ॥ ८३ ॥
इह सांप्रतमस्त्यद्य [1]शक्यश्चेल्लालनेऽक्षपाते च ।
[2]स्वेदापमार्जनेषु च [3]कुड्ड(ट्ट?)मिते [4]प्रचलिते तु भवेत् ॥ ८४ ॥
[5]त्रेताग्निसंस्थिता मध्या तर्जन्य[6]ङ्गुष्ठका यदा ।
[7]अङ्गुलेऽनामिका वक्रा तथा [8]चोर्ध्वकनीयसी ॥ ८५ ॥
[9]एतेन तरुणफलरूपणानि नानाविधानि च लघूनि ।
कार्याणि [10]रोपजानि स्त्रीवचनान्यङ्गुलिक्षेपैः ॥ ८६ ॥
मरकत[11]वैडूर्यादीनां निदर्शनं कार्यम् ।
भाख्यं विडालपदमिति चैव प्रयोगेषु ॥ ८७ ॥
आवर्तिन्यः करतले यस्याङ्गुल्यो भवन्ति हि ।
[12]पार्श्वागतविकीर्णाश्च स [13]भवेदलपल्लवः ॥ ८८ ॥
प्रतिषेधकृते यो[14]ऽर्थः कस्य त्वं नास्ति शून्यवचनेषु ।
पुनरात्मोपन्यासः स्त्रीणामेतेन कर्तव्यः ॥ ८९ ॥
[15]तिस्रः प्रसारिता यत्र तथा चोर्ध्वा [16]कनीयसी ।
तासां [17]मध्ये स्थितोऽङ्गुष्ठः [18]स करश्चतुरः स्मृतः ॥ ९० ॥
[19]नयविनयनियम[सु?]निपुणबालातुरसत्त्वकैतवार्थेषु ।
[20]वाक्ये युक्ते पथ्ये सत्ये प्रथमे च विनियोज्यः ॥ ९१ ॥

१. 'वशक्येश्चोल्लालने' क-ख. २. 'स्वेद' क-ख. ३. 'कुट्टिमिते' का. ४. 'प्रचलितस्तु' क-ख. ५. 'त्रेताग्नि°' क-ख. ६. '°ङ्गुष्ठकास्तथा' का. ७. 'कागूले(?)' क-ख. ८. 'चोर्ध्वा' का. ९. 'एतेन तरुणफलानि नानाविधानि च लघूनि कार्याणि' का. १०. 'रोपजाति' का. ११. 'वैदूर्यादीना' का. १२. 'पार्श्वगता विकीर्णाश्च' का. १३. 'भवेदलपद्मकः' का. १४. 'योऽर्थं विकल्प' क-ख. १५. 'विस्र. (?)' क-ख. १६. 'कनीयसाम्' क-ख. १७. 'मध्यस्थपाङ्गुष्ठ.' क-ख. १८. 'करश्चतुरकः स्मृतः' क-ख. १९. 'नयनिपुणसमसुनिपुणबालातुरशठ्यकैतवार्थेषु' का. २०. 'वाक्ये मध्ये पुत्रे पदे प्रथमे च विनियोज्यः' क-ख.

एकेन द्वाभ्यां वा किंचिन्मण्डलकृतेन हस्तेन[1] ।
विधूत[2]विचारितरचितं वितर्कितं[3] लज्जितं चैव ॥ ९२ ॥
नयनौ[4]पम्यं पद्मदलरूपणं हरिणकर्ण[5]निर्देशम् ।
संयु[6]क्तकरेणैव[च?]चतुरेणैतानि कुर्वीत ॥ ९३ ॥
लीलां[7] रतिं रुचिं स्मृतिबुद्धिविभावनाः क्षमां पुष्टिं (च[8])
संज्ञामो[9]शां प्रणयं विचारणं संग[10]तं शौचम् ॥ ९४ ॥
चातुर्यं माधुर्यं दाक्षिण्यं मार्दवं सुखं शीलम् ।
प्रे[11]ङ्खं वार्तायुक्तिं वेषं मृदुशा[12]ड्वलं स्तोकम् ॥ ९५ ॥
विभवाविभवौ सुरतं गुणागुणौ यौवनं दा[13]रान् ।
नानावर्णांश्च तथा चतुरेणैवं प्रयुञ्जीत ॥ ९६ ॥
सितमूर्ध्वेन तु कुर्याद्रक्तं पीतं च मण्ड[14]लकृते च ।
परिमृदितेन तु नीलं वर्णांश्चतुरेण हस्तेन ॥ ९७ ॥
मध्यमाङ्गुष्ठसं[15]दंशो वक्रौ[16] चैव प्रदेशिनी ।
ऊ[17]र्ध्वमन्ये प्रकीर्णे च अङ्गु[18]ल्यो भ्रमरे करे ॥ ९८ ॥
पद्मोत्पलकुमुदानामन्येषां चैव दीर्घवृन्तानाम् ।
पुष्पाणां ग्रहणविधिः कर्तव्यः कर्णपूरश्च ॥ ९९ ॥
वि[19]च्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
वा[20]लालापे च शीघ्रे च तांले विश्वासने तथा ॥ १०० ॥
तर्जनीमध्यमाङ्गुष्ठास्तेताभिस्था निरन्तराः ।
भवेयुर्हंसवक्त्रस्य शेषे द्वे संप्रसारिते ॥ १०१ ॥

---

१. 'हस्तदण्डेन' का. २. 'विधूनविचरितचरितं' का. ३. 'विवर्जितं' का. ४. 'नयनोपम्यं' क ख. ५. 'कर्णनिर्देशः' क-ख. अत्र 'हरिण' इति क-ख-पुस्तकयोर्नास्ति. ६. 'सयुतकरणेनैवातुरेणैतानि' क-ख. ७. 'लीलारतिं' क; 'लीलारती' ख. ८. 'च' इत्यधिकं प्रतिभाति ९. '°भाशा' क-ख. १०. 'सततं' क-ख. ११. 'प्रशमं वार्तां युक्तिम्' का. १२. 'शाड्वलं' का. १३. 'गृहान् दारान्' का. १४. 'मण्डलकरेण' का. १५. 'सदेशो' क-ख. १६. 'वक्रे चैव' का. १७. 'ऊर्ध्वमान्य°' क ख. १८. 'द्वाङ्गुलौ' का. १९. 'विधुतश्च सहजश्च' क-ख. २०. 'वालविश्वासने' क-ख.

श्लक्ष्णाल्पशिथिललाघवनिःसारार्था[1] मृदुत्वयोगे च ।
कार्योऽभिनयविशेषः किंचित्प्रस्यन्दिताग्रेण ॥ १०२ ॥
समाः प्रसारितास्तिस्रस्तथा चोर्ध्वा कनीयसी ।
अङ्गुष्ठः कुञ्चितश्चैव हंसपक्ष इति स्मृतः ॥ १०३ ॥
एषं[2] च निवापसलिले दातव्ये गन्धसंश्रये[3] चैव ।
कार्यः प्रतिग्रहार्थे[4]मानभोजनार्थेषु विप्राणाम् ॥ १०४ ॥
आलिङ्गने महास्तम्भनिदर्शने रोमहर्षणे चैव ।
स्पर्शेऽनुलेपनार्थे[5] योज्यः संवाहने चैव ॥ १०५ ॥
पुनरेव च नारीणां स्तनान्तरस्थेन विभ्रमविशेषाः ।
कार्या यथा[6] रसाः स्युर्दुःखे हनुधारणे चैव ॥ १०६ ॥

तर्जन्यङ्गुष्ठसंदंशो[7] ह्यरालस्य यथा भवेत् ।
आभुग्नतलमध्यश्च[8] स संदंश इति स्मृतः ॥ १०७ ॥
संदंशस्त्रिविधो ज्ञेयस्त्व[9]ग्रजो मुखजस्तथा ।
तथा पार्श्वगतश्चैव रसभावोपबृंहितः ॥ १०८ ॥
पुष्पावचयग्रथने ग्रहणे तृणपर्णकेशसूत्राणाम्[10] ।
शल्याकर्षग्रहणापकर्षणे चाग्रसंदंशः[11] ॥ १०९ ॥
वृन्तात्पुष्पोद्धरण[12] वर्ति[13]शलाकादिपूरण चैव ।
धिगिति च वचन रोषा[14]न्मुखसंदंशस्य कर्माणि ॥ ११० ॥
यज्ञोपवीत[15]धारणवेधनगुणसूक्ष्मबाणलक्ष्येषु[16] ।
योगे[17] ध्याने स्तोके संयुक्तकरस्तु[18] कर्तव्यः ॥ १११ ॥

---

१. '°र्थो मृदुतयोगेच' क-ख '°र्था मृदुतत्त्वयोगेषु' का. २. 'एष विधि' का. ३. 'गन्ध सश्रये' का. ४. 'वमन' ख. ५. '°नुमेपनार्थे' क-ख. ६. 'यथारस स्याद्' का. ७. 'संदेहस्त्वरालस्य यदा' च-ख. ८. '°मध्यस्थ' क-ख. ९. 'ज्ञेयो अग्रतो' का. १०. 'शिलावयवग्रहणे प्रकर्षणे' क-ख. ११. '°ग्रसदंश.' क ख. १२. 'उद्धारणं' क-ख. १३. 'वति (?)' क. 'विति' ख. १४. 'रोषे' क ख. १५. 'यज्ञे पर्वतधारण' क-ख. 'यज्ञोपवीतनिधन°' का. १६. 'लक्षेषु' का. १७. 'योगेऽध्ययने' का. योगस्थाने का. १८. 'सयुतकरणस्तु' क ख.

पेलवकुत्सासूयासदोषवचने च वामहस्तेन ।
किंचिद्विवर्तिताग्रः प्रयुज्यते पार्श्वसंदंशः ॥ ११२ ॥
आलेख्यनेत्ररञ्जनवितर्कवृन्तप्रवालरचनं च ।
निष्पीडनं तथालक्तकस्य कार्यं च नारीभिः ॥ ११३ ॥
समानताग्राः सहिता यस्याङ्गुल्यो भवन्ति हि ।
ऊर्ध्वा हंसमुखस्यैव स भवेन्मुकुलकः करः ॥ ११४ ॥
देवार्चनबलिकरणे पद्मोत्पलमुकुलरूपणे चैव ।
विटचुम्बने च कार्यो विकुत्सिते विप्रकीर्णे च ॥ ११५ ॥
भोजनहिरण्यगणनामुखसंकोचप्रदानशीघ्रेषु ।
मुकुलितकुसुमेषु तथा तज्ज्ञैरेष प्रयोक्तव्यः ॥ ११६ ॥
पद्मकोषस्य हस्तस्य ह्यङ्गुल्यः कुञ्चिता यदा ।
ऊर्णनाभः स विज्ञेयः केशचौर्यग्रहादिषु ॥ ११७ ॥
शिरःकण्डूयने चैव कुष्ठव्याधिनिरूपणे ।
सिंहव्याघ्रेष्वभिनयः प्रस्तरग्रहणे तथा ॥ ११८ ॥
मध्यमाङ्गुष्ठसंदंशो वक्रा चैव प्रदेशिनी ।
शेषे तलस्थे कर्तव्ये ताम्रचूडे कराङ्गुली ॥ ११९ ॥
विच्युतश्च सशब्दश्च कार्यो निर्भर्त्सनादिषु ।
तालेष्विश्वसिते चैव शीघ्रार्थे सज्ञितेषु च ॥ १२० ॥
[तथा कलासु काष्ठासु निमेषे तु क्षणे तथा ।
एष एव करः कार्यो बलालापनिमन्त्रणे ॥ १२१ ॥]

१. 'पेशल°' का. २. 'सदूष°' क-ख. ३. '°च' क-ख. ४. 'किंचिद्विवर्तितकराग्रः' का. ५. '°वृत्त°' क-ख. ६. '°रचनेषु' का. ७. 'समागताग्रा.' क ख. ८. 'शुकुलः' का. ९. '°मुकुद°' क-ख. १०. 'विदचुम्बने' क-ख. ११. 'विधुचिते विप्रकीर्णस्य' क-ख. १२. 'अङ्गुल्यः' का. १३. 'गृहादिषु' का. १४. 'सिंहव्याघ्राद्यभिनयः' का. १५. 'ताम्रचूलकरेङ्गुली' क-ख. १६. 'च्युतप्रश्च' क ख. १७. 'ताले विश्वासमे' का. १८. एष श्लोकः क-ख-पुस्तकयोर्नास्ति.

अङ्गुल्यः[1] संयुता[2] वक्रा उपर्यङ्गुष्ठपीडिताः[3] ।
प्रसारिता कनिष्ठा च ताम्रचूडः करः स्मृतः[4] ॥ १२२ ॥
शतं सहस्रं लक्षं[5] च करेणैकेन दर्शयेत् ।
क्षिप्रमुक्ताङ्गुलीभिस्तु स्फुलिङ्गान्विप्रुषस्तथा ॥ १२३ ॥[6]
असंयुताः करा ह्येते मया प्रोक्ता द्विजोत्तमाः ।
अधुना संयुतान्हस्तान् गदतो[7] मे निबोधत ॥ १२४ ॥
पताकाभ्यां तु हस्ताभ्यां संश्लेषादञ्जलिः स्मृतः ।
देवतानां गुरूणां च मित्राणां चाभिवादने ॥ १२५ ॥
देवतानां शिरःस्थस्तु[8] गुरूणामास्यसंस्थितः ।
वक्षःस्थश्चैव मित्राणां शेषे[9] त्वनियमो भवेत् ॥ १२६ ॥
उभाभ्यामपि[10] हस्ताभ्यामन्योन्यं पार्श्वसंग्रहात् ।
हस्तः कपोतको नाम कर्म चास्य निबोधत ॥ १२७ ॥
एषोऽभिनयाभिगमे[11] प्रणामकरणे गुरोश्च संभाषे ।
शीते भये च कार्यो वक्षःस्थः कम्पितः[12] स्त्रीभिः ॥ १२८ ॥
अयमेवाङ्गुलिपरिघृष्यमाणमुक्तस्तु खिन्नवाक्येषु ।
एतावदिति च[13] कार्यो भेदाङ्गीकृत्यमिति चार्थे[14] ॥ १२९ ॥
अङ्गुल्यो यस्य हस्तस्य ह्यन्योन्यान्तरनिःसृताः[15][16] ।
स कर्कट इति ज्ञेयः करः कर्म च वक्ष्यते ॥ १३० ॥
एष मदनाङ्गमर्दे सुप्तोत्थितजृम्भणे[17] बृहद्देहे[18] ।
अनुधारणे[19] च योज्यः शङ्खग्रहणेऽर्थतत्त्वज्ञैः[20] ॥ १३१ ॥

---

१. 'अथवा' इत्यधिकं क-ख-पुस्तकयोः २. 'संहिता' का. ३. '°पीडिता' क-ख. ४. 'ताम्रचूलकरः स्मृतः' क-ख. ५. 'लक्षादि कनकं चापि' क-ख. ६. 'इति' इत्यधिकं' क-ख-पुस्तकयोः. ७. 'नादितो' क-ख. ८. 'शिरस्कंस्तु' क-ख. ९. 'स्त्रीणां कार्यो यथेप्सितः' क ख. १०. '°मभिहस्ताभ्या' क-ख. ११. 'द्विषद्दियाभ्युपगमे' का. १२. 'कल्पितः' का. १३. 'च' इति नास्ति क-ख-पुस्तकयोः. १४. 'वा य' क-ख. १५. 'हि' इति नास्ति का-पुस्तके. १६. '°न्तरपि स्मृतः' क-ख. १७. 'सुप्तोत्थविजृम्भणे' का. १८. 'मह देहे'(?) का. १९. 'हनुधा' २०. 'च तत्त्वज्ञैः' का.

मणिबन्धनविन्यस्तावरालौ स्त्रीप्रयोजितौ ।
उत्तानौ वामपार्श्वस्थौ स्वस्तिकः परिकीर्तितः ॥ १३२ ॥
स्वस्तिकविच्युतिकरणाद् दिशो घनाः खं वनं समुद्राश्च ।
ऋतवो मही तथान्यद् विस्तीर्णं चाभिनेयं स्यात् ॥ १३३ ॥
कटकः कटकैर्न्यस्तः कटको वर्धमानकः ।
शृङ्गारार्थेषु योक्तव्यः प्रणामकरणे तथा ॥ १३४ ॥
अरालौ तु विपर्यस्तावुत्तानौ वर्धमानकौ ।
उत्सङ्ग इति विज्ञेयः कार्यः सिंहावलोकिते ॥ १३५ ॥
[ सनिष्पेषकरश्चैव रोषेऽमर्षेऽपि च स्मृतः ।
निष्पीडितः पुनश्चैव स्त्रीणामीर्ष्याकृतो भवेत् ॥ १३६ ॥
गृहीत्वा वामहस्तेन कूर्पराभ्यन्तरे भुजम् ।
दक्षिणे चापि वामस्य कूर्पराभ्यन्तरं न्यसेत् ॥ १३७ ॥
स चापि दक्षिणो हस्तः सम्यङ् मुष्टीकृतो भवेत् ।
इत्येष निषधो हस्तः कर्म चास्य निबोधत ॥ १३८ ॥
एतेन मदगर्वसौष्ठवौत्सुक्यविक्रमाटोपाः ।
अभिमानावष्टम्भः स्तम्भस्थैर्यादयः कार्याः ॥ १३९ ॥

१. 'वर्धमानकौ' का. २. '°करणा' क-ख. ३. 'घना' का. ४. 'तथायं' का. ५. 'चाभिनेयं' क-ख. ६. 'खटक खेटके न्यस्त' क-ख. ७. 'खटका' क-ख. ८. अत्र 'अन्ये' 'मुकुलोत्पलवृन्तेषु कर्तव्यश्छत्रधारणे' इति इत्यधिकं क.ख-पुस्तकयोः ९. 'विपर्यस्तात्' क-ख. १०. 'उत्तानावूर्ध्वमानतौ' का. ११. 'सर्शस्य ग्रहणे कर.' का. १२. 'सनिष्पेषकरश्चैव' इत्याद्यारभ्य 'प्रयोक्तव्याभिघट्टने' इत्यन्तं श्लोकपञ्चकं क-ख-पुस्तकयोर्नास्ति परं श्लोकद्वयमत्राधिकं क-ख पुस्तकयो —

मुकुलं तु यदा हस्तं कपित्थ परिवेष्टयेत् ।
स मन्तव्यस्तदा हस्तो निषे(ष?)धो नाम नामतः ॥ १२१ ॥

अग्रे का. पुस्तके तु–'वर्धमानः सविज्ञेय कर्म चास्य निबोधत ।'
सग्रहपरिग्रहो धारणं च समयश्च सत्यवचनं च ।
सक्षेपः (प) [तस्तु] (हो) संक्षिप्त (प्त ?) निपीडितेनाभिनेतव्यम् ॥

अथवा—

ज्ञेयो वै निषधो नाम हंसपक्षौ पराङ्मुखौ ।
जालवातायनादीनां प्रयोक्तव्याभिघट्टने ॥ १४० ॥ ]
अंसौ प्रशिथिलौ मुक्तौ पताकौ तु प्रलम्बितौ ।
यदा भवेतां करणे स दोल इति संज्ञितः ॥ १४१ ॥
संभ्रमविषादमूर्च्छितमदाभिघाते तथैव चावेगे ।
व्याधिप्लुते च शस्त्रक्षते च कार्योऽभिनययोगः १४२ ॥
यस्तु सर्पशिराः प्रोक्तस्तस्याङ्गुलिनिरन्तरः ।
द्वितीयः पार्श्वसंश्लिष्टः स तु पुष्पपुटः स्मृतः ॥ १४३ ॥
धान्यफलपुष्पसदृशान्यनेन नानाविधानि युक्तानि ।
ग्राह्याण्युपनेयानि च तोयानयनापनयने च ॥ १४४ ॥
पताकौ तु यदा हस्तावू(वू?)र्ध्वाङ्गुष्ठावधोमुखौ ।
उपर्युपरि विन्यस्तौ तदा स मकरः करः ॥ १४५ ॥
सिंहव्यालद्वीपिप्रदर्शनं नक्रमकरमत्स्यानाम् ।
ये चान्ये क्रव्यादा अभिनेयास्तेऽर्थयोगेन ॥ १४६ ॥
कूर्परांसस्थितौ हस्तौ यदास्तां सर्पशीर्षकौ ।
गजदन्तः सै तु करः कर्म चास्य निबोधत ॥ १४७ ॥
एष वै वधूवराणामुद्वाहे चातिभारयोगेन ।
स्तम्भग्रहणे च तथा शैलशिलोत्पाटने चैव ॥ १४८ ॥
शुकतुण्डौ करौ कृत्वा वक्षस्यभिमुखाञ्चितौ ।
शनैरधोमुखाविद्धौ सोऽवहित्थ इति स्मृतः ॥ १४९ ॥

---

१. 'प्रतिष्ठितौ' का. २. '°भिवद्दे' क.ग. ३. 'तथुभवे' का. ४. '°सुश्लिष्टः' का. ५. 'धान्यफलपुष्पसदृशान्यनेकनानाविधानि पुष्टेन,' का. ६. 'ग्राह्माणु°' क.च. ७. '°नयनं' क.ग. ८. 'हस्ताद्' क.ग. 'हस्तौ मूर्ध्नि' का. ९. '°निरन्तरौ' का. १०. 'हस्तिनेयास्तेन हस्तेन' का. ११. 'कूर्परांसर्पि°' क.ग. १२. 'च निर्देश' का. १३. 'वं' हरौ क.ग पुस्तकयोर्नास्ति. १४. '°शैल च' का. १५. 'स्तम्बे' का. १६. '°निरोधाद्युच्य' क.ग.

दौर्बल्ये निःश्वसिते गात्राणां दर्शने तनुत्वे च।
उत्कुण्ठिते [च?] तज्ज्ञैरभिनययोगार्थं कर्तव्यः ॥ १५० ॥
मुकुलस्तु यदा हस्तः कपित्थपरिवेष्टितः।
वर्धमानः स विज्ञेयः कर्म चास्य निबोधत ॥ १५१ ॥
सग्रहपरिग्रहौ धारणं च समयश्च सत्यवचनं च।
सक्षेपतस्तु सक्षिप्तविपीडितेनाभिनेतव्यम् ॥ १५२ ॥
ज्ञेयो वै वर्धमानस्तु हंसपक्षौ पराङ्मुखौ।
जालवातायनादीना प्रयोक्तव्यो विघाटने ॥ १५३ ॥
उक्ताश्चैते द्विविधा ह्यसयुक्ताः संयुताश्च सक्षेपात्।
अभिनयकरास्तु ये त्विह तेऽन्यत्राप्यर्थतः साध्याः ॥ १५४ ॥
अन्यैरप्युक्तम्—'आकृत्या चेष्टया चिह्नैर्जात्या विज्ञाय वस्तुत'।
स्वयं वितर्क्य कर्तव्य हस्ताभिनयनं बुधै' ॥' इति ॥ १५५ ॥
नास्ति कश्चित्तथा हस्तो नाट्याभिनयनं प्रति।
यस्य संदृश्यते रूपं बहुशस्तन्मयोदितम् ॥ १५६ ॥
अन्ये चाप्यर्थसयुक्ता लौकिका ये करास्त्विह।
छन्दतस्ते प्रयोक्तव्या रसभावविचेष्टितैः ॥ १५७ ॥
देशं काल प्रयोगं चार्थयुक्तिमवेक्ष्य च।
हस्ता ह्येते प्रयोक्तव्या नृणा स्त्रीणां विशेषत' ॥ १५८ ॥
सर्वेषामेव हस्ताना यानि कर्माणि सन्ति वै।
तान्यहं संप्रवक्ष्यामि रसभावकृतानि तु ॥ १५९ ॥

---

१. 'दैन्यस' क-ख. २. 'ननु त्वे' क ख. ३. 'उत्कण्ठिता न तर्ह °' क. ख. ४. '°स्तु' का. ५ 'एषा पद्यद्वयी' क ख. पुस्तकयो पूर्वमेव १३१, १३२ श्लोकत्वेन विन्यस्ता. ६. 'विज्ञेयो' का. ७. 'ह्येते' का. ८. '°करा ये त्विह' का. ९. 'ह्यत्रा' का. १०. 'अन्यैरप्युक्त' इति नास्ति का. पुस्तके. ११ 'तत्पुन' का. १२. 'वितर्कात्' का. १३. 'नाट्यार्थाभिनय' का. १४. 'यद् दृश्यते' का. १५. 'छन्दस्तेऽपि' क-ख. १६. 'नियोक्तव्या' का. १७ 'अपि' इति नास्ति का पुस्तके. १८. '°अर्थमुक्ति' क ख. १९. 'स्त्रीणा नृणां' का. २०. 'हन्ति' क-ख. २१. 'हि' का. २२ 'सप्त वक्ष्यामि' क ख.

उत्कर्षणं विकर्षणं तथा व्याकर्षणं पुनः ।
परिग्रहश्चाप्याह्वानं ताडनं तर्जनं तथा ॥ १६० ॥
संश्लेषश्च वियोगश्च रक्षणं मोक्षणं तथा ।
विक्षेपधूनने चैव विसर्गस्तर्जनं तथा ॥ १६१ ॥
छेदनं भेदनं चैव स्फोटनं मोहनं तथा ।
ताडनं चेति विज्ञेयं तज्ज्ञैः कर्मकरान्प्रति ॥ १६२ ॥
सर्वे हस्तप्रचाराश्च प्रयोगेषु यथाविधि ।
नेत्रभ्रूमुखरागाद्यैः कर्तव्या व्यञ्जिता बुधैः ॥ १६३ ॥
करणं कर्मस्थानं प्रकारयुक्तिं क्रियां च सर्मवेक्ष्य ।
हस्ताभिनयः कार्यस्तज्ज्ञैर्लोकोपचारेण ॥ १६४ ॥
उत्तमानां कराः कार्या ललाटक्षेत्रचारिणः ।
वक्षःस्थाश्चैव मध्यानामधमानामधोगताः ॥ १६५ ॥
ज्येष्ठे स्वल्पप्रचाराः स्युर्मध्ये मध्यविचारिणः ।
लोकक्रियास्वभावेन नीचैरप्यर्थसंश्रयाः ॥ १६६ ॥
अथ यान्यादृशं प्राप्य प्रयोगं कालमेव च ।
विपरीताश्रया हस्ताः प्रयोक्तव्या बुधैर्नरैः ॥ १६७ ॥
विषण्णे मूर्च्छिते भीते जुगुप्साशोकपीडिते ।
ग्लाने सुप्ते विहस्ते च निश्चेष्टे तन्द्रिते जडे ॥ १६८ ॥
व्याधिग्रस्ते जरार्ते च भयार्ते शीतविप्लुते ।
मत्ते प्रमत्ते चोन्मत्ते चिन्तायां तपसि स्थिते ॥ १६९ ॥

---

१. 'चैवापकर्षणम्' का. २. 'परिग्रहो निग्रहश्च आह्वानं नोदनं तथा' का. ३. 'विसर्गस्तदनन्तरम्' का. ४. 'छिन्धि(द ?) विस्फोटनं तथा' क-ख. ५. '°रागैश्च' का. ६. 'व्यञ्जितात्बुधैः' क-ख. ७. 'प्रचारयुक्तिं' क-ख. ८. 'संप्रेक्ष्य' का. ९. 'तज्ज्ञैः' 'यो' का. मा. १०. 'ललाटा' क-ख. ११. 'ज्येष्ठ' क ख. १२. 'कुर्वीत मध्यमैः' क-ख. १३. 'चान्यदृशप्राप्यं' क-ख. १४. 'विपरीतक्रिया' क ख. १५. 'हीने' क-ख. १६. 'स्रस्ते' क-ख. १७. 'जडे' क-ख. १८. 'मत्तप्रमत्ते' क-ख.

[ हिमवर्षगते[1] वन्ये हरिणप्लवसंश्रिते ।
स्वमायिते च संघ्राते नखसंस्फोटने तथा ] ॥ १७० ॥
ने[2] हस्ताभिनयः कार्यः कार्यः सत्त्वसमाश्रयः ।
तथा[3]कारविशेषश्च नानाभावरसान्वितः ॥ १७१ ॥
[4]यथा व्यग्रावुभौ हस्तौ तत्र [5]दृष्टिविलोकनैः ।
[6]वाचिकाभिनयं का (कु)र्याद्विरामैरर्थदर्शकैः ॥ १७२ ॥
[7]उत्तानः पार्श्वगश्चैव तथाधोमुख एव च ।
प्रचारस्त्रिविधोऽङ्गानां नाट्यनृत्तसमाश्रयः ॥ १७३ ॥
[8]उत्तानो वर्तुलस्त्र्यस्रः स्थितोऽधोमुख एव च ।
पञ्च प्रकारा हस्तस्य नाट्य[9]नृत्तसमाश्रयाः ॥' इति ॥ १७४ ॥
एवं ज्ञेयाः करा ह्येते नानाभिनयसं[10]श्रिताः ।
अत ऊर्ध्वं प्रवक्ष्यामि [11]करान्नृत्तसमाश्रयान् ॥ १७५ ॥
[12]वक्षःस्थोऽष्टाङ्गुलस्थौ तु प्राङ्मुखौ [13]खटकामुखौ ।
समानकूर्परांसौ तु चतुरस्रौ प्रकीर्तितौ ॥ १७६ ॥
हंसपक्षकृतौ हस्तौ व्यावृत्तौ तालवृन्तवत् ।
उद्वृत्ताविति विज्ञेयावथवा ताल[14]वृन्तकौ ॥ १७७ ॥
चतुरस्र[15]स्थितौ हस्तौ हंसपक्षकृतौ तथा ।
तिर्यक्स्थितौ [16]चाभिमुखौ ज्ञेयौ तलमुखाविति ॥ १७८ ॥
तावेव मणिबन्धान्ते स्वस्तिकाकृतिसंस्थितौ ।
स्वस्तिकाविति विख्यातौ विच्युतौ विप्रकीर्णकौ ॥ १७९ ॥

---

१. पद्यमेतत् क-ख-पुस्तकयोर्नास्ति. २. 'तथा हस्ताभिनयः कार्यः सत्त्वस्य संग्रहः' का. ३. 'काकुविशेषश्च' क-ख. ४. 'यथाव्यग्रावुभौ' क-ख. ५. 'यत्र दृष्टिविलोकितैः' का. ६. एतत् पद्यार्धं का-पुस्तके नास्त्येव. ७. का-पुस्तके तु—'उत्तानोऽधस्तलस्तिर्यगूर्ध्वाधोमुख एव च । हस्तप्रचारा विज्ञेया नाट्ये नृत्ते च पञ्चधा'. ॥ ८. एतत्पद्यं का-पुस्तके नास्ति. ९. '°नृत्त' क-ख. १०. 'सङ्ज्ञकाः' क-ख. ११. 'हस्तान्' का. १२. 'वक्षःस्थो°' का. १३. 'कटकामुखौ' का. १४. 'वृन्तके' क-ख. १५. '°प्रस्थितौ' क-ख. १६. 'वा' क-ख.

अल्पपल्लवसंस्थानावूर्ध्वास्यौ पद्मकोपकौ ।
अरालखटकाख्यौ वाप्यरालखटकामुखौ ॥ १८० ॥
अन्ये तु, 'तथैव मणिबन्धान्ते ह्यरालविच्युतावुभौ ।
ज्ञेयौ प्रयोक्तृभिर्नित्यमरालखटकाविति ॥' इति ॥ १८१ ॥
भुजांसकूर्पराग्रैस्तु कुटिलावर्तितौ करौ ।
पराङ्मुखतयाविद्धौ ज्ञेयावाविद्धवक्रकौ ॥ १८२ ॥
हस्तौ तु सर्पशिरसौ मध्यस्थाङ्गुष्ठकौ यदा ।
तिर्यक्प्रसारितास्यौ च तदा सूचीमुखौ स्मृतौ ॥ १८३ ॥
अन्यैः, 'सर्पशीर्षौ यदा हस्तौ भवेतां स्वस्तिकस्थितौ ।
मध्यप्रसारिताङ्गुष्ठौ ज्ञेयौ सूचीमुखौ तदा ॥' इति ॥ १८४ ॥
रेचितौ चापि विज्ञेयौ हंसपक्षोद्धृतभ्रमौ ।
प्रसारितोत्तानतलौ रेचिताविति संस्थितौ ॥ १८५ ॥
चतुरस्रो भवेद्वामः सव्यहस्तश्च रेचितः ।
विज्ञेयौ नृत्ततत्त्वज्ञैरर्धरेचितसंज्ञकौ ॥ १८६ ॥
अञ्चितौ कूर्परांसौ तु त्रिपताकाकृतौ करौ ।
किंचित्तिर्यग्गतावेतौ स्मृतावुत्तानवञ्चितौ ॥ १८७ ॥
मणिबन्धनमुक्तौ तु पताकौ पल्लवौ स्मृतौ ।
बाहुशीर्षाद्विनिष्क्रान्तौ नितम्बाविति कीर्तितौ ॥ १८८ ॥
केशदेशाद्विनिष्क्रान्तौ पारिपार्श्वस्थितौ तथा ।
विज्ञेयौ केशबन्धाख्यौ करावाचार्यसंमतौ ॥ १८९ ॥
तिर्यक्प्रसारितौ चैव पार्श्वसंस्थौ तथैव च ।
लताख्यौ च करौ ज्ञेयौ नृत्ताभिनयनं प्रति ॥ १९० ॥

---

१. 'अल्पपवसंस्थानात्तूद्वास्यौ' क-ख. २. '°कटका' का. ३. 'तु' क-ग. ४. 'कटका' का. ५. 'पद्यमिदं' का पुस्तके नास्ति. ६. '°तलाविद्धौ' क-ग. ७. 'मध्यमा°' क-ख. ८. 'पद्यमिदं का-पुस्तके नास्ति. ९. 'वापि' क-ग. १०. 'संज्ञितौ' क-ख. ११. 'संज्ञितौ' क-ख. १२. 'त्रिपताकौ करौ इतौ' का. १३. 'तिर्यग्गलावेतौ'(!) क-ग. १४. 'बहुशोपाद्' क-ख. १५. 'नित्यं वार्थित'(!) क-ग. १६. 'पारिपार्श्वोत्थितौ' क-ख.

समुन्नतो लताहस्त पार्श्वात्पार्श्वं विलोलित॰ ।
त्रिपताकोऽपर कर्णे करिहस्त प्रकीर्तित॰ ॥ १९१ ॥
'कैटिशीर्षनिविष्टौ द्वौ त्रिपताकौ यदा करौ ।
पक्षवञ्चितकौ हस्तौ तदा ज्ञेयौ प्रयोक्तृभि॰ ॥ १९२ ॥
तावेव तु परावृत्तौ पक्षप्रद्योतकौ स्मृतौ ।
अधोमुखतलाविद्धौ ज्ञेयौ गरुडपक्षकौ ॥ १९३ ॥
हंसपक्षकृतौ हस्तौ व्यावृत्तपरिवर्तितौ ।
तथा प्रसारितभुजौ दण्डपक्षाविति स्मृतौ ॥ १९४ ॥
ऊर्ध्वमण्डलिनो हस्तावूर्ध्वदेशविवर्तनात् ।
तावेव पार्श्वविन्यस्तौ पार्श्वमण्डलिनौ स्मृतौ ॥ १९५ ॥
उद्वेष्टितो भवेदेको द्वितीयश्चापवेष्टित ।
भ्रामितावुरैस्स्थाने ह्युरोमण्डलिनौ स्मृतौ ॥ १९६ ॥
अरौलपल्लवकरावुरोर्धभ्रमणक्रमात् ।
पार्श्वावर्तश्च विज्ञेयावुर पार्श्वार्धमण्डलौ ॥ १९७ ॥
हस्तौ तु मणिबन्धान्ते कुञ्चितावञ्चितौ यदा ।
खैटकाख्यकृतौ स्याता मुष्टिकस्वस्तिकौ तदा ॥ १९८ ॥
पद्मकोषौ यदा हस्तौ ँव्यावृत्तपरिवर्तितौ ।
नलिनीपद्मकोषौ तु तदा ज्ञेयौ प्रयोक्तृभि॰ ॥ १९९ ॥
करावुद्वेष्टिताग्रौ तु प्रविधायालपल्लवौ ।
ऊर्ध्वप्रसारिताविद्धौ विज्ञेयावुल्बणावपि ॥ २०० ॥
ँअथावेष्टितमेक स्यादुद्वेष्टितमथापरम् ।
ँव्यावर्तित तृतीय तु चतुर्थं परिवर्तितम् ॥ २०१ ॥
[पल्लवौ च शिरोदेशे संभाषौ ललितौ स्मृतौ ।
कूर्परस्वस्तिकगतौ लताख्यौ ललिताविति ॥ २०२ ॥

---

१ 'करिहस्तौ प्रकीर्तितौ' का. २ 'करिहस्त' क-ख. ३ '॰श्च विवेष्टित . ४. '॰वुर-स्स्थाने' क ख ५ का पुस्तके 'हि' इति नास्ति ६ 'अलपल्लवकारालावुरोर्ध-भ्रमणक्रमात्' का. ७ 'कटकाख्यौ तु तौ' का. ८. 'व्यावर्त' का. ९. 'कर्तव्या-वुल्बणावपि' का. १०. 'अपवेष्टित' क. ११. 'व्यावृत्ति' क-ख.

वियुताः संयुताश्चैव नृत्तहस्ताः प्रकीर्तिताः ।
अतः परं प्रवक्ष्यामि करणं हस्तसंश्रयम् ॥ २०३ ॥
सर्वेषामेव हस्तानां नाट्यहस्ते निदेशिभिः ।
विज्ञातव्या प्रयत्नेन करणं तु चतुर्विधम् ॥ २०४ ॥]
आवेष्ट्यन्ते यदाङ्गुल्यस्तर्जन्याद्या यथाक्रमम् ।
अभ्यन्तरेण[1] करणं तदावेष्टितमुच्यते ॥ २०५ ॥
उद्वेष्ट्यन्ते[2] यदाङ्गुल्यस्तर्जन्याद्या बहिर्मुखम्[3] ।
क्रमशः करणं विप्रास्तदुद्वेष्टितमुच्यते ॥ २०६ ॥
आवर्त्यन्ते[4] कनिष्ठाद्या ह्यङ्गुल्योऽभ्यन्तरेण तु ।
यथाक्रमेण करणं तद्व्यावर्तितमुच्यते ॥ २०७ ॥
उद्वर्त्यन्ते कनिष्ठाद्या बाह्यतः क्रमशो यदा ।
अङ्गुल्यः करणं विप्रास्तदुक्तं परिवर्तितम् ॥ २०८ ॥
नृत्तेऽभिनययोगे च पाणिभिर्वर्तनाश्रयैः ।
मुखभ्रूनेत्रयुक्तानि करणानि प्रयोजयेत् ॥ २०९ ॥
तिर्यक् तथोर्ध्वसंस्थो ह्यधोमुखश्चाञ्चितोपविध(द्ध)स्तु ।
मण्डलगतिस्तथा स्वस्तिकश्च पृष्ठानुसारी च ॥ २१० ॥
उद्वेष्टितप्रसारित इत्येते वै स्मृताः प्रकारास्तु ।
बाह्वोरिति करणगता विज्ञेया निव(न)र्तकैर्नित्यम् ॥ २११ ॥
हस्तानां करणविधिर्मया समासेन निगदितो विप्राः ।
अत ऊर्ध्वं व्याख्यास्ये हृदयोद[र]पार्श्वकर्माणि ॥ २१२ ॥[10]

---

१. 'अभ्यन्तरेण' क-ख. २. 'आवेष्ट्यन्ते' क-ख. ३. 'तर्जन्या बहिर्मुखा' का. ४. 'आवर्तन्ते' का. ५. 'हि' इति क-ख-पुस्तकयोर्नास्ति. ६. 'यत्तु' का. ७. 'उद्वर्तन्ते' का. ८. 'बाह्यश-' का. ९. का-पुस्तके तु—

तिर्यगूर्ध्वगतं चैव तथाधोमुख एव च ।
आविद्धापविद्धश्च मण्डलस्वस्तिकस्तथा ॥
अञ्चितः कुञ्चितश्चैव पृष्ठगश्चेति चोदितः ।
बाहुप्रकारो दशधा नाट्यशास्त्रप्रयोक्तृभिः ॥

१०. का-पुस्तकेऽत्रैवाध्यायसमाप्तिरेवं वर्तते—

इति भारतीये नाट्यशास्त्रे हस्ताभिनयो नाम नवमोऽध्यायः ।

आभुग्नमथ निर्भुग्नं तथा चैव प्रकम्पितम् ।
उद्वाहितं समं चैव उरः पञ्चविधं स्मृतम् ॥ २१३ ॥
निम्नमुन्नतपृष्ठं च व्याभुग्नं संश्लथं क्वचित् ।
आभुग्नं तदुरो ज्ञेयं कर्म चास्य निबोधत ॥ २१४ ॥
संभ्रमविषादमूर्च्छाशोकभयव्याधिहृदयशिल्पेषु ।
कार्यं शीतस्पर्शे वर्षे लज्जान्वितेऽर्थवशात् ॥ २१५ ॥
स्तब्धं च निम्नपृष्ठं च निर्भुग्नांसं समुन्नतम् ।
उरोनिर्भुग्नमेतद्धि कर्म चास्य निबोधत ॥ २१६ ॥
स्तम्भे मानग्रहणे विस्मयदृष्टे च सत्यवचने च ।
अहमिति च दर्पवचने गर्वोत्सेके च कर्तव्यम् ॥ २१७ ॥
हसितरुदितादिसंभ्रमभयश्रमव्याधिपीडितार्थेषु ।
नानाभावोपगतं कार्यमुरोनाट्ययोगेषु ॥ २१८ ॥
दीर्घनिश्वसिते चैव जृम्भणामोटने तथा ।
विक्षो(व्वो)के च पुनः स्त्रीणां तद्विज्ञेयं प्रयोक्तृभिः ॥ २१९ ॥
ऊर्ध्वक्षेपैरुरो यत्र निरन्तरकृतैः कृतम् ।
प्रकम्पितं तु तज्ज्ञेयमुरो नाट्यप्रयोक्तृभिः ॥ २२० ॥
उद्वाहितमूर्ध्वगतमुरो ज्ञेयं प्रयोक्तृभिः ।
दीर्घोच्छ्वासोऽत्र चालोकजृम्भणादिषु चेष्यते ॥ २२१ ॥

---

१. 'अभुग्नमप्यनिर्भुग्नं' क-ख. २. 'व्याभुग्ना संश्लेष' क-ख. ३. 'वेन सर्शे' क-ख. ४. 'लज्जायिते' का. ५. 'स्तब्ध च निम्नपृष्ठं च' का. ६. 'तु' का. ७. 'गर्वोत्साहे. तु' का. ८. 'तु' का. ९. क-ख-पुस्तकयोरधिकम् (आर्ये, पुनः केचित् क्षेपकोऽयम् ।) १०. का-पुस्तके पद्यमिदं नास्ति. ११. 'विगुणयं' क-ख. १२. 'यत्तु' का. १३. 'विज्ञेयं' का. १४. क-ख पुस्तकयोस्तु—

'हसितरुदितेषु कार्यं श्रमे भये श्वासकासयोश्चैव ।
हिक्कादुःखे च तथा नाट्यज्ञैरर्थवेगेन ॥'

१५. 'ऊर्ध्वकृतं क-ख. १६. 'प्रयोगत.' का. १७. 'दीर्घोच्छ्वसनता' का.

सर्वैरेवाङ्गविन्यासैश्चतुरस्रकृतैः कृतम् ।
उरः [1]समं तु विज्ञेयं स्वस्थं सौष्ठवसंयुतम् ॥ २२२ ॥
एतदुक्तं मया सम्यगुरसस्तु विकल्पनम् ।
अतः [2]परं प्रवक्ष्यामि पार्श्वयोरिह लक्षणम् ॥ २२३ ॥
[3]नतं समुन्नतं चैव प्रसारितविवर्तिते ।
तथा[4]पसृतमेवं तु पार्श्वयोः कर्म पञ्चधा ॥ २२४ ॥
[5]कटी भवेत्तु व्याभुग्ना पार्श्वमाभुग्नमेव च ।
तथैवापसृतांसं च किंचित्पार्श्वे नतं स्मृतम् ॥ २२५ ॥
[6]तस्यैव चापरं पार्श्वं विपरीतं तु युक्तितः ।
कटीपार्श्वभुजांसैश्चाप्युन्नतैरुन्नतं भवेत् ॥ २२६ ॥
[7]आयामनादुभयतः पार्श्वयोः स्यात्प्रसारितम् ।
[8]परिवर्तित्रिकस्यापि विवर्तितमिहेष्यते ॥ २२७ ॥
वि[9]वर्तितोपनयनाद्भवेदपसृतं पुनः ।
पार्श्वलक्षणमित्युक्तं विनियोगं निबोधत ॥ २२८ ॥
उप[10]सर्पे नतं कार्यमुन्नतं चापसर्पणे ।
प्रसारितं महर्पादौ परि[11]वृत्ते विवर्तितम् ॥ २२९ ॥
विनिवृत्ते त्वपसृतं [12]पार्श्वमर्थवशाद्भवेत् ।
एतानि पार्श्वकर्माणि जठरस्य निबोधत ॥ २३० ॥
क्षामं खल्वं च पूर्णं च संप्रोक्तमुदरं त्रिधा ।
तनु क्षाम नतं खल्वं पूर्णमाध्मातमुच्यते ॥ २३१ ॥
क्षामं [13]हासेऽथ रुदिते निःश्वासे जृम्भणे भवेत् ।
व्याधिते तपसि [14]भ्रान्ते क्षुधार्ते खल्वमिष्यते ॥ २३२ ॥

---

१. 'ससौष्ठवैरसैः' का. २. 'ऊर्ध्वं' का. ३. 'नतं सुमतं प्रसारित°' क-ख. ४. 'तथा प्रसृतमेतत्तु' का. ५. 'कटिर्भवेत्तु व्याभुग्ना' का. ६. 'नतस्यैवापरं' क-ख. ७. 'आयामत्वाद्' क-ख. ८. 'परिवर्तात्रिकस्य' क-ख. ९. 'विवर्तनोपनयनात्' क-ख. १०. 'उपसार्ये' क-ख. ११. 'परिवर्तौ' का. १२. 'पार्श्वनर्थ° (!)' क-ख. १३. 'हासे च' का. १४. 'भ्रान्ते' क-ख.

पूर्णमुच्चलितं स्थूले व्याधि(धि)तन्द्राशनादिषु ।
अन्ये तु, 'क्षामं खल्वं समं पूर्णमुदरं स्याच्चतुर्विधम् ।
इत्येतदुदरस्योक्तं कर्म कट्या निबोधत ॥' इति ।
छिन्ना चैव निवृत्ता च रेचिता कम्पिता तथा ॥ २३३ ॥
उद्वाहिता चेति कटी नाट्ये नृत्ते च पञ्चधा ।
कटीमध्यस्य वलनाच्छिन्ना संपरिकीर्तिता ॥ २३४ ॥
पराङ्मुखस्याभिमुखी निवृत्ता स्यान्निवर्तिता ।
सर्वतो भ्रमणाच्चापि विज्ञेया रेचिता कटी ॥ २३५ ॥
तिर्यग्गता गताक्षिप्ता कटी ज्ञेया प्रकम्पिता ।
नितम्बपार्श्वोद्वहनाच्छनैरुद्वाहिता कटी ॥ २३६ ॥
पुनश्चासां प्रवक्ष्यामि विनियोगप्रयोजनम् ।
छिन्ना व्यायामसंभ्रान्तव्यावृत्तप्रेक्षणादिषु ॥ २३७ ॥
निवृत्तावर्तने चैव रेचिता भ्रमणादिषु ।
कुब्जवामननीचानां गतौ कार्या प्रकम्पिता ॥ २३८ ॥
स्थूलेषूद्वाहिता योज्या स्त्रीणां लीलागतेषु च ।
कम्पनं वलनं चैव स्तम्भनोद्वर्तने तथा ।
विवर्तनं च पञ्चैतान्यूरुकर्माणि कारयेत् ॥ २३९ ॥
नमनोन्नमनात्पार्ष्णेर्मुहुः स्यादूरुकम्पनम् ।
गच्छेदभ्यन्तराज्जानु यत्र तद्वलनं स्मृतम् ॥ २४० ॥
[स्तम्भनं चापि विज्ञेयमपवृत्तधियात्मकम् ।
वलिताविद्धकरणादूर्वोरुद्वर्तनं स्मृतम् ॥ २४१ ॥]

---

१. '°शुच्छ्वासिते' क-ख. २. 'व्याधिनान्यशतादिषु' क-ख. ३. 'अन्ये तु-' इति क्षाम खल्वमित्यादि-च पद्यार्धं का पुस्तकेनास्ति. ४. '°दुदरं प्रोक्तं' का. ५ 'कट्याः कर्म' का. ६. 'चैव' का. ७. 'नाट्यनृत्ते' का. ८. 'चलनात्' क-ख. ९. 'नमनात्' क-ख. १०. 'क्षिप्रकटी ज्ञेया सा वै प्रकम्पिता' क-ख. ११. '°द्वहनच्छनै' क-ख. १२. 'कटीकर्म मया प्रोक्तं विनियोगं निबोधत' का. १३. '°क्षेपणादिषु' क-ख. १४. 'भ्रमणेषु च' का. १५. 'कुब्ज(?)' का. १६. 'लाजगतेषु च' क-ख. १७ 'चलनं' क-ख. १८. 'निवर्तनं' का. १९. 'भ्यन्तरं जानु' क-ख. २०. 'पद्यमिदं' क-ख पुस्तकयोर्नास्ति.

पार्ष्णिरभ्यन्तरं गच्छेद्यत्र तत्र निवर्तनम् ।
गतिष्वधमपात्राणां भये चापि हि कम्पनम् ॥ २४२ ॥
वलनं चैव कर्तव्यं स्त्रीणां स्वैरपरिक्रमे ।
साध्वसे च विषादे च स्तम्भनं संप्रयोजयेत् ॥ २४३ ॥
व्यायामे ताण्डवे चैव कार्यमुद्वर्तनं बुधैः ।
विवर्तनं च कर्तव्यं संभ्रमादिपरिक्रमे ॥ २४४ ॥
यथादर्शनमन्यच्च लोकाद्ग्राह्यं प्रयोक्तृभिः ।
इत्यूर्वोर्लक्षणं प्रोक्तं जङ्घयोस्तु निबोधत ॥ २४५ ॥
आवर्तितं नतं क्षिप्तमुद्वाहितमथापि च ।
परिवृत्तं तथा चैव जङ्घाकर्माणि पञ्चधा ॥ २४६ ॥
वामो दक्षिणपार्श्वेन दक्षिणश्चापि वामतः ।
पादो यत्र व्रजेद्धिमात्तदावर्तितमुच्यते ॥ २४७ ॥
(केचित्) 'जङ्घास्वस्तिकयोगेन क्रमादावर्तितं स्ये(नये)त् ।
जानुनः कुञ्चनाच्चैव नतं ज्ञेयं प्रयोक्तृभिः ॥ २४८ ॥
विक्षेपश्चापि जङ्घायाः क्षिप्तमित्यभिधीयते ।' इति ।
केचित्तु, क्षेपकोऽयम् ।
नतं स्याज्जानुनमनात्क्षिप्तं विक्षेपणाद्बहिः ।
उद्वाहितं च विज्ञेयमूर्ध्वमुद्वाहनादिदं ॥ २४९ ॥
प्रतीपनयनं यत्तु परिवृत्तं तदुच्यते ।
आवर्तितं प्रयोक्तव्यं संभ्रान्तिपरिक्रमे ॥ २५० ॥
नतं चापि हि कर्तव्यं स्थानासनगतादिषु ।
क्षिप्तं व्यायामयोगेषु ताण्डवे च प्रयुज्यते ॥ २५१ ॥

---

१. 'तेऽप्युद्विवर्तनम्' क. ग. २. 'भयेचापि' क. ग. ३. 'चलनं' क.-ग. ४. '०परिक्रमम्' क. ग. ५ 'तु प्रयो०' ग. ६. 'तु' ग. ७. '०परिक्रमे' क.-ग. ८. 'तथा दर्शन' क.-ग. ९. 'जङ्घायास्तु' ग. १०. 'केचित्' इत्यारभ्य पद्यार्धमिदं ग-पुस्तके नास्ति. ११. 'कुञ्चनं चापि' ग. १२. 'विक्षेपश्च' ग. १३. 'केचित्' इत्यारभ्येदमपि पद्यार्धं ग पुस्तके नास्ति. १४. 'अपि' ग. १५ 'यत्र' ग. १६. 'विदूषकपरिक्रमे' क. ग. १७. 'गतादिषु' ग. १८. 'क्षिप्रं' क.-ग. १९. 'च (?)' ग.

तथा चोद्वाहितं कार्यमाविद्धगमनादिषु।
ताण्डवादौ प्रयोक्तव्यं परिवृत्तं प्रयोक्तृभिः॥ २५२॥
इत्येवं जङ्घयोः कर्म पादयोश्च निबोधत।
उद्घट्टितं समं चैव तथाग्रतलसंचरः।
अञ्चितः कुञ्चितः सूचीपादः षोढा प्रकीर्तितः॥ २५३॥
स्थित्वा पादतलाग्रेण पार्ष्णिर्भूमौ निपात्यते।
यस्य पादस्य करणे भवेदुद्घट्टितस्तु सः॥ २५४॥
अयमुद्घट्टितकरणेष्वनुकरणार्थं प्रयोगमासाद्य।
द्रुतमध्यमप्रचारः सकृदसकृद्वा प्रयोक्तव्यः॥ २५५॥
स्वभावरचितो भूमौ समस्थानश्च यो भवेत्।
समः पादः स विज्ञेयः स्वभावाभिनयाश्रयः॥ २५६॥
स्थिरः स्वभावाभिनये नानाकरणसंश्रये।
चलितश्च पुनः कार्यो विक्षेपः पादरेचिते॥ २५७॥
उत्क्षिप्ता तु भवेत्पार्ष्णिः प्रसृतोऽङ्गुष्ठकस्तथा।
अङ्गुल्यश्चाञ्चिताः सर्वाः पादोऽग्रतलसंचरः॥ २५८॥
तोदननिकुट्टने स्थितनिशुम्भने भूमिताडने भ्रमणे।
विक्षेपविविधरेचकपार्ष्णिक्षताग्रगमनमेतेन॥ २५९॥
पार्ष्णिर्यस्य स्थिता भूमावूर्ध्वमग्रतलं तथा।
अङ्गुल्यश्चाञ्चिताः सर्वाः स पादोऽञ्चित उच्यते॥ २६०॥
पादाग्रस्थितसंचारे वर्तितोद्वर्तिते तथा।

---

१. 'कुर्यात्' का. २. 'इत्येतत्' का. ३. 'तु' क-ख. ४. 'उद्घट्टित समग्रो यथा' क-ख. ५. 'कुञ्चितश्चैव पादः पञ्चविधः स्मृतः' का. ६. 'द्घट्टितस्तु' क-ख. ७. '°द्घट्टितं. ८. '°दा' का. ९. '°रचिते' का. १०. 'समस्थाने' का. ११. 'समपादः' क-ख. १२. 'स्थिरस्वभावा°' का. १३. 'चलितश्च' का. १४. '°र्ष्णिरचितो' का. १५. '°श्चाञ्चिताः' क-ख. १६. 'पादाग्रतलसंचरे' क-ख. १७. 'तोदननिकुट्टिते स्थितनिशुंभिते भूमिताडनभ्रमणे' का. १८. 'क-ख-पुस्तकयोस्तु विक्षिप्तभ्रान्तकारचका(!) स्वनेनाभिनेतव्या।' १९. 'यस्याश्चिता' का. २०. 'भूमौ ऊर्ध्वाग्रतलं तथा' का. २१. 'संपादस्त्वञ्चितः स्मृतः' का. २२. 'पादाग्रतलसंचारे' का.

[1]अतिक्रान्तक्रमे चैव पादमेतं प्रयोजयेत् ॥ २६१ ॥
[2][उत्क्षिप्ता यस्य पार्ष्णिः स्यादङ्गुल्यः कुञ्चितास्तथा ।
तथाकुञ्चितमध्यश्च स पादः कुञ्चितः स्मृतः ॥ २६२ ॥
उदात्तगमने चैव वर्तितोद्वर्तिते तथा ।]
[3]उत्क्षिप्ता तु भवेत्पार्ष्णिरङ्गुष्ठाग्रेण संस्थि[4]तः ।
[5]षड्विधं वादितोऽन्ये ।
वामश्चैव स्वभावस्थः सूचीपादः प्रकीर्तितः ॥ २६३ ॥
[6]नृत्तेऽन्तःपुरकरणे प्रयोगस्तस्य कीर्ति[7]तः ।
[8]अतिक्रान्तक्रमे चैव पादमेवं प्रयोजयेत् ॥ २६४ ॥
पादजङ्घोरुकरणं समं कार्यं प्रयोक्तृभिः ।
पादस्य करणं सर्वं जङ्घोरुकृतमिष्यते ॥ २६५ ॥
यथा पादः प्रवर्तेत त[9]थैवोरुः प्रवर्तते ।
त[10]योः समानकरणात्पा[11]दचारी प्रयोजयेत् ॥ २६६ ॥
इत्येतदङ्गजं प्रोक्तं ल[12]क्षणं चैव कर्म हि ।
अतः परं प्रवक्ष्यामि चा[13]रीव्यायामलक्षणम् ॥ २६७ ॥
[14]इति श्रीभारतीये नाट्यशास्त्रेऽङ्गाभिनयो नाम नवमोऽध्यायः ।

---

द[15]शमोऽध्यायः ।

[[16]एवं पादस्य जङ्घाया ऊर्वोः कट्यास्तथैव च ।
समानकरणाच्चेष्टा सा चारीत्यभिधीयते ॥ १ ॥]

---

१. 'एष पादस्थे कार्यो नानाभ्रमरकेषु च' का. २. इत प्रभृति सार्धं पद्यं क-ख-पुस्तकयोर्नास्ति. ३. 'उत्क्षिप्तं तु भवेत् का. ४. 'संस्थिता' का. ५. का पुस्तके नास्त्येतत्. ६. 'नृत्ते नूपुरकरणे' का. ७. 'कीर्त्यते' का. ८. पद्यार्धमिदं क-ख-पुस्तकयोर्नास्ति. ९. 'तथैवैता' क-ख. १०. 'अनयो' का. ११. 'पादचारी' क-ख. १२. 'कर्म चैव हि' का. १३. 'चारीव्यायामलक्षणम्' क-ग. १४. 'इति भारतीये नाट्यशास्त्रे शारीराभिनयो नाम दशमोऽध्यायः' का. १५. 'अथैकादशोऽध्यायः' का. १६. पद्यमेतत् क-ख-पुस्तकयोर्नास्ति.

विधानोभयतश्चार्यो व्यायच्छन्ति परस्परम् ।
यस्मादङ्गसमायुक्तस्तस्माद्व्यायाम उच्यते ॥ २ ॥
एकपादप्रचारो यः सा चारीत्यभिधीयते ।
द्विपादकर्मणं यत्तु करणं नाम तद्भवेत् ॥ ३ ॥
करणानां समायोगः खण्ड इत्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥ ४ ॥
चारीभिः प्रस्तुतं नृत्तं चारीभिश्चेष्टितं यथा ।
चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः ॥ ५ ॥
यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संस्थितम् ।
नहि चार्यो विना किंचिन्नाट्येऽङ्गं संप्रवर्तते ॥ ६ ॥
तस्माच्चारीविधानस्य संप्रवक्ष्यामि लक्षणम् ।
यो यास्मिंश्च प्रयोक्तव्या नृत्ते युद्धे तथा गतौ ॥ ७ ॥
समपादा स्थिता वार्ता शकटास्या तथैव च ।
अध्यर्धिका चापगतिर्विच्यवाचा तथापरा ॥ ८ ॥
एडकाक्रीडिता बद्धा उरूद्वृत्ता तथाड्डिता ।
उत्स्पन्दिता च जनिता स्पन्दिता चापस्पन्दिता ॥ ९ ॥
समोत्सारितमत्तल्ली च मतल्ली चेति षोडश ।
एता भौम्यः स्मृताश्चार्यः शृणुताकाशिकीः पुनः ॥ १० ॥
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका ॥ ११ ॥

१. 'नोपगताश्चार्यो व्यायामोद्या' क-ख. २. 'एकपादे' क-ख. ३. 'संचारी' क-ख. ४. 'प्रवण' क ख. ५ 'यस्तु' क ख. ६. 'समायोगात् खण्डमित्य°' का. ७. 'चारिभि' का. ८. 'चारिभि.' का. ९. 'चारिभि' का. १०. 'चार्यो युद्धेषु कीर्तिता' क-ख. ११. 'सङ्गितम्' का. १२. 'चार्यो' क ख. १३. 'ये' क-ख. १४. 'गतो तथा' का. १५. 'अर्धिका चापगति च चार्विभ्यथल' (?) क ख. १६. 'एलका' क-ख. १७. 'वर्धो' क-ख. १८. 'भूरद्वृत्ता' क ख. १९. 'तथाश्रिता' क-ख. २०. 'समोसरितवाशी' क ख. २१. 'चापि' का. २२. 'सौम्यस्थिता' क. २३. 'कौशिकी' क ख. २४. 'तयात्तपरपादिका'(?) क ख.

दोलापादा तथाक्षिप्ता व्याविद्धोद्वृत्तसंज्ञिते ।
विद्युद्भ्रान्ता ह्यलाता च भुजङ्गत्रासिता तथा ॥ १२ ॥
मृगप्लुता च दण्ड च भ्रमरी चेति षोडश ।
आकाशिक्यः स्मृता ह्येता लक्षणं च निबोधत ॥ १३ ॥
पादैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा स्मृता चारी विज्ञेया स्थानसंश्रया ॥ १४ ॥
भूमिघृष्टेन पादेन कृत्वाभ्यन्तरमण्डलम् ।
पुनरुत्सारयेदन्यं स्थिता वार्ता तु सा स्मृता ॥ १५ ॥
निषण्णाङ्गस्तु चरणं प्रसार्य तलसंचरम् ।
उद्वाहितमुरः कृत्वा शकटास्यां प्रयोजयेत् ॥ १६ ॥
सव्यस्य पृष्ठतो वामश्चरणस्तु यदा भवेत् ।
तस्योपसर्पणं चैव ज्ञेया साध्यर्धिका बुधैः ॥ १७ ॥
पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्यापसर्पी या चापगत्यां विधीयते ॥ १८ ॥
धीर्च्यवाङ् समपादायां विक्षेपं संप्रयोजयेत् ।
निकुट्टयंस्तथाग्रेण पादस्य धरणीतलम् ॥ १९ ॥
तलसंचरपादाभ्यामुत्प्लुत्य पतनं तु यत् ।
पर्यायतश्च क्रियते एडकाक्रीडिता तु सा ॥ २० ॥
अन्योन्यजङ्घासंवेधात्कृत्वा तु स्वस्तिकं ततः ।
ऊरुभ्यां वेलनं यस्मात्सा बद्धा चार्युदीरिता ॥ २१ ॥

---

१. 'दोलापादा' क-ग. २. 'आविद्धाहृतसंज्ञके' क-ख. ३. 'विद्युद्भ्रान्ता' क-ग. ४. 'ह्यलाता' क-ग. ५. 'दण्डपादा' क-ग. ६. 'आकाशिक्यः' क-ग. ७. 'तु सा' क-ग. ८. 'भूमिहृष्टेन' क-ग. ९. '°रुत्सारयेदन्यं' क-ख. १०. 'शकटास्यं' क-ग. ११. 'पृष्ठतो' क-ग. १२. 'तस्यापसर्पणं' क-ग. १३. 'साध्यर्धिका' क-ग. १४. 'एवं वा' क-ग. १५. 'विच्यां वा' क-ग. १६. 'न चाग्रेण' क-ग. १७. 'उत्प्लुत्य' क-ग. १८. 'पातनं' क-ग. १९. 'उपर्युपरि' क-ख. २०. 'एलका°' २१. 'कृत्वा ह स्वस्तिकं' क-ख. २२. 'वलनं' क-ग.

विधानोभयतश्चार्यो व्यायच्छन्ति परस्परम् ।
यस्मादङ्गसमायुक्तस्तस्माद्यायाम उच्यते ॥ २ ॥
एकपादप्रचारो यः सा चारीत्यभिधीयते ।
द्विपादक्रमणं यत्तु करणं नाम तद्भवेत् ॥ ३ ॥
करणानां समायोगः खण्ड इत्यभिधीयते ।
खण्डैस्त्रिभिश्चतुर्भिर्वा संयुक्तं मण्डलं भवेत् ॥ ४ ॥
चारीभिः प्रस्तुतं नृत्तं चारीभिश्चेष्टितं यथा ।
चारीभिः शस्त्रमोक्षश्च चार्यो युद्धे च कीर्तिताः ॥ ५ ॥
यदेतत्प्रस्तुतं नाट्यं तच्चारीष्वेव संस्थितम् ।
नहि चार्या विना किंचिन्नाट्येऽङ्गं संप्रवर्तते ॥ ६ ॥
तस्माच्चारीविधानस्य संप्रवक्ष्यामि लक्षणम् ।
या यास्मिंश्च प्रयोक्तव्या नृत्ते युद्धे तथा गतौ ॥ ७ ॥
समपादा स्थिता वार्ता शकटास्या तथैव च ।
अध्यर्धिका चापगतिर्विच्यवाचा तथापरा ॥ ८ ॥
एडकाक्रीडिता बद्धा ऊरूद्वृत्ता तथोड्डिता ।
उत्स्यन्दिता च जनिता स्यन्दिता चापस्यन्दिता ॥ ९ ॥
समोत्सारितमत्तल्ली च मतल्ली चेति षोडश ।
एता भौम्यः स्मृताश्चार्यः शृणुताकाशिकीः पुनः ॥ १० ॥
अतिक्रान्ता ह्यपक्रान्ता पार्श्वक्रान्ता तथैव च ।
ऊर्ध्वजानुश्च सूची च तथा नूपुरपादिका ॥ ११ ॥

---

१. 'नोपगताश्चार्यो व्यायामोटाः' क-ख. २. 'एकपादे' क-ख. ३. 'संचारी' क-ख. ४. 'प्रवणं' क-ख. ५. 'यस्तु' क-ख. ६. 'समायोगात् खण्डमित्य°' का. ७. 'चारिभिः' का. ८. 'चारिभिः' का. ९. 'चारिभिः' का. १०. 'चार्यो युद्धेषु कीर्तिता' क-ख. ११. 'संज्ञितम्' का. १२. 'चार्या' क-ख. १३. 'ये' क-ख. १४. 'गतौ तथा' का. १५. 'अर्धिका वापगति च चार्विभ्यश्चल' (?) क-ख. १६. 'एलका°' क-ख. १७. 'वर्धा' क-ख. १८. 'भूरुद्वृत्ता' क-ख. १९. 'तथाश्रिता' क-ख. २०. 'समोसरितवल्ली' क-ख. २१. 'चापि' का. २२. 'सौम्यस्थिताः' क. २३. 'कौशिकीः' क-ख. २४. 'तथात्तपरपादिका'(?) क-ख.

दोला[1]पादा तथाक्षिप्ता व्याविद्धो[2]द्वृत्तसंज्ञिते ।
विद्यु[3]द्भ्रान्ता [4]ह्यलाता च भुजङ्गत्रासिता तथा ॥ १२ ॥
मृगप्लुता च[5] दण्ड च भ्रमरी चेति षोडश ।
आकाशि[6]क्यः स्मृता ह्येता लक्षणं च निबोधत ॥ १३ ॥
पादैर्निरन्तरकृतैस्तथा समनखैरपि ।
समपादा [7]स्मृता चारी विज्ञेया स्थानसंश्रया ॥ १४ ॥
भूमिघृष्टे[8]न पादेन कृत्वाभ्यन्तरमण्डलम् ।
पुनरुत्सार[9]येदन्यं स्थिता वार्ता तु सा स्मृता ॥ १५ ॥
निषण्णाङ्गस्तु चरणं प्रसार्य तलसंचरम् ।
उद्वाहितमुरः कृत्वा शकटा[10]स्यां प्रयोजयेत् ॥ १६ ॥
सव्यस्य पृ[11]ष्ठतो वामश्चरणस्तु यदा भवेत् ।
तस्योप[12]सर्पणं चैव ज्ञेया सा[13]ध्यर्धिका बुधैः ॥ १७ ॥
पादः प्रसारितः सव्यः पुनश्चैवोपसर्पितः ।
वामः सव्यापसर्पी वा चापगत्यां विधीयते ॥ १८ ॥
वीच्यवाक् समपादायां वि[15]क्षेपं संप्रयोजयेत् ।
निकुट्टयं[16]स्तथाग्रेण पादस्य धरणीतलम् ॥ १९ ॥
तलसंचरपादाभ्यामुत्प्लु[17]त्य प[18]तनं तु यत् ।
पर्यायत[19]श्च क्रियते एडका[20]क्रीडिता तु सा ॥ २० ॥
अन्योन्यजङ्घासंवेधात्कृ[21]त्वा तु स्वस्तिकं ततः ।
ऊरुभ्यां [22]वेलनं यस्मात्सा बद्धा चार्युदीरिता ॥ २१ ॥

---

१. 'डोलापादा' घ्रा. २. 'आविद्धात्तृतसंज्ञके' क-ख. ३. 'विद्युत्क्रान्ता' क-ख. ४. 'स्थलका' क-ख. ५. 'दण्डपादा' क-ख. ६. 'आक्षेप्यिक.' क-ख. ७. 'तु सा' क-ख. ८. 'भूमिकुट्टेन' क ख. ९. '°दुत्सादयेदन्यं' क-ख. १०. 'शकटास्यं' का. ११. 'मृष्ठतो' क-ख. १२. 'तस्यापसर्पणं' क-ख. १३. 'साध्यर्चिका' क-ख. १४. 'एवं या' क ख. १५. 'विच्यां वां' क-ख. १६. 'न चाग्रेण' क ख. १७. 'उत्प्लुत्य' क-ख. १८. 'पातनं' क-ख. १९. 'उपर्यधश्च' क-ख. २०. 'अलका°' २१. 'कृत्वा र स्वस्तिकं' क-ख. २२. 'चलनं' क-ख.

तलसंचरपादस्य पार्ष्णिर्[1]बाह्योन्मुखी यदा ।
जङ्घाञ्चिता तथोद्वृत्तो[2] ऊरुद्वृत्तेति सा स्मृता ॥ २२ ॥
अग्रतः पृष्ठतश्चापि[3] पादैस्तु[4] तलसंचरः ।
द्वितीयपादो[5] निर्घृष्टो यस्यां[6] सादङ्किता[7] तु सा ॥ २३ ॥
शनैः पादो विवर्तेत[8] बाह्येनाभ्यान्तरेण च ।
यद्रेचकानुसारेण सा[9] चार्युत्स्पन्दिता[10] स्मृता ॥ २४ ॥
मुष्टिहस्तश्च[11] वक्षःस्थः करोऽन्यश्च[12] प्रवर्तितः ।
तलसंचरपादश्च[13] जनिता चार्युदाहृता ॥ २५ ॥
पञ्चतालान्तरं पादं प्रसार्य स्पन्दितां[14] न्यसेत् ।
द्वितीयेन तु पादेन[15] तथापस्पन्दितामपि ॥ २६ ॥
तलसंचरपादाभ्यां[16] घूर्णमाना[17]पसर्पणैः ।
समोत्सारितमतल्ली[18] व्यायामे समुदाहृता[19] ॥ २७ ॥
[ उभाभ्यामपि पादाभ्यां घूर्णमानोपसर्पणैः ।
उद्वेष्टितापविद्धैश्च हस्तैर्मत्तल्युदाहृता ॥ २८ ॥
एता भौम्यः[20] स्मृताश्चार्यो नियुक्त[21]करणाश्रयाः ।
आकौशिकीनां[22] चारीणां संप्रवक्ष्यामि लक्षणम् ॥ २९ ॥
कुञ्चितं पादमुत्क्षिप्य[23] पुरतः संप्रसारयेत् ।
उत्क्षिप्य पातयेच्चैनमतिक्रान्ता तु सा स्मृता ॥ ३० ॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वोत्थान[24]गतिं न्यसेत् ।
उद्घट्टितेन पादेन पार्श्वक्रान्ता विधीयते ॥ ३१ ॥

---

१. 'पार्ष्णिबाह्योन्मुखी' क ख. २. 'तयोद्वृता' क ख. ३. 'पृष्ठतो चापि' क ख. ४. 'पादोऽग्रतल°' क-ख. ५. '°पादनिर्घृष्टो' क-ख. ६. 'यस्या' क-ख. ७. 'स्याद-ङ्किता' क-ख. ८. 'निवर्तेत' क-ख. ९. 'सा' इति त्रुटितं क-ख-पुस्तकयो. १०. '°त्स्पन्दिता' का. ११. 'पुष्टिहस्तश्च' क ख. १२. 'करोत्यश्चप्रकीर्तित.' १३. 'तल सचारपादश्च' क-ख. १४. 'सन्यतो' क-ख. १५. 'पार्श्वेन' क-ख. १६. 'संचार-' का. १७. 'घूर्ण्यमाना°' क-ख. १८. 'समोत्सरितवल्ली च' क ख. १९. 'समुदाहृता.' का. २०. 'भौम्यै.' क-ख. २१. 'निरुद्ध°' क-ख. २२. 'आकौशिकीनां' क-ख. 'आकाशकीना' का. २३. पद्यमिदमधिकं का पुस्तके. २४. 'जानुस्तनसमं' क-ख.

कुञ्चितं पादमुत्क्षिप्य जानुस्तनसमं न्यसेत् ।
द्वितीयं च क्रमात् स्तब्धमूर्ध्वजानुः प्रकीर्तिता ॥ ३२ ॥
पृष्ठतो कुञ्चितं कृत्वा पादमग्रतलेन तु ।
द्रुतं निपातयेद्भूमौ चारी नूपुरपादिका ॥ ३३ ॥
कुञ्चितं पादमुत्क्षिप्य जानुरूर्ध्वं प्रसारयेत् ।
पातयेच्चाग्रयोगेन सा सूची परिकीर्तिता ॥ ३४ ॥
कुञ्चितं पादमुत्क्षिप्य पार्श्वं पार्श्वं तु दोलयेत् ।
पातयेदञ्चितं चैव दोलापादा प्रकीर्तिता ॥ ३५ ॥
कुञ्चितं पादमुत्क्षिप्य व्याक्षिप्य त्वञ्चितं न्यसेत् ।
जङ्घा स्वस्तिकसंयुक्ता प्रक्षिप्ता नाम सा स्मृता ॥ ३६ ॥
स्वस्तिकस्याग्रतः पादः कुञ्चितश्च प्रसारितः ।
निपतेदञ्चिताविद्ध आविद्धा नाम सा स्मृता ॥ ३७ ॥
पादमाविद्धमावेश्य समुत्क्षिप्य निपातयेत् ।
परिवृत्त्य द्वितीयं च सोद्वृत्ता चार्युदाहृता ॥ ३८ ॥
पृष्ठतो वलितं पादं शिरोघृष्टं प्रसारयेत् ।
सर्वतो मण्डलाविद्धं विद्युद्भ्रान्ता तु सा स्मृता ॥ ३९ ॥
पृष्ठतः सर्वतः पादो वलिताभ्यन्तरीकृतः ।
पार्ष्णिप्रपतितश्चैव ह्यलाता समकीर्तिता ॥ ४० ॥
कुञ्चितं पादमुत्क्षिप्य त्र्यस्रमूरुं विवर्तयेत् ।
कटीजानुविवर्ताच्च भुजङ्गत्रासिता भवेत् ॥ ४१ ॥

---

१. '°प्रस्तब्ध ऊर्ध्व°' क-ख. २. 'प्रकीर्तित.' क-ख. ३. 'पृष्ठतो' इत्यारभ्य 'सा सूची परिकीर्तिता' इत्यन्तं श्लोकद्वयी का-पुस्तके नास्ति. ४. 'पार्श्वपार्श्वं' क-ख. ५. 'तु सा स्मृता' का. ६. 'आक्षिप्यं चाञ्चितं' का. ७. 'उत्क्षिप्ता' का. ८. 'भवेत्' का. ९. 'तु' क-ख. १०. 'निपातान्' क-ख. ११. 'समुत्प्लुत्य' क-ख. १२. 'सा द्रुता' (?) क-ख. १३. 'शरोद्धृष्टं' क-ख. १४. 'पृष्ठ. प्रसारित.' का. १५. 'वलितो' क-ख. १६. '°प्रपादित°' क-ख. १७. 'हि' इति का-पुस्तके नास्ति. १८. 'प्रवर्तयेत्' का. १९. '°विवर्तेन' का.*

अतिक्रान्तक्रमं[1] कृत्वा चोत्लुत्य[2] विनिपातयेत् ।
जङ्घाश्वितोपरिक्षिप्ता[3] सा ज्ञेया हरिणीप्लुता[4] ॥ ४२ ॥
नूपुरं चरणं कृत्वा पुरतः संप्रसारयेत् ।
क्षिप्तमाविद्धकरणं दण्डपादा[5] तु सा स्मृता ॥ ४३ ॥
अतिक्रान्तक्रमं[6] कृत्वा त्रिकं तु परिवर्तयेत् ।
द्वितीयपादभ्रमणाच्चलने[7] भ्रमरी स्मृता ॥ ४४ ॥
आकाशिक्यः[8] स्मृता ह्येता ललिताङ्गक्रियात्मिकाः ।
धनुर्वज्रादि[9]शस्त्राणां योक्तव्याः[10] शस्त्रमोक्षणे ॥ ४५ ॥
अग्रगौ पृष्ठगौ[11] वापि ह्यनुगौ[12] वापि योगतः ।
पादयोस्तु द्विजौ[13] हस्तौ कर्तव्यौ नाट्ययोक्तृभिः ॥ ४६ ॥
यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादस्य निर्गतिं[14] कृत्वा तथोपाङ्गानि[15] योजयेत् ॥ ४७ ॥
पादचार्यो[16] यथा पादो धरणीमेव गच्छति ।
एवं हस्तं[17] चरित्वा तु कटीदेशं समाश्रयेत् ॥ ४८ ॥
एताश्चार्यो[18] मया प्रोक्ता ललिताङ्गक्रियात्मिकाः ।
स्थानान्यासां[19] प्रवक्ष्यामि सर्वशस्त्रविमोक्षणे ॥ ४९ ॥
वैष्णवं समपादं च वैशाख[20] मण्डलं तथा ।
प्रत्यालीढं तथालीढं[21] स्थानान्येतानि षण्नृणाम् ॥ ५० ॥
द्वौ तालावर्धतालश्च पादयोरन्तरं भवेत् ।
तयोः समुत्थितस्त्वेकस्त्र्यस्रपाद[22]स्थितोऽपरः ॥ ५१ ॥

---

१. 'अतिक्रान्तसम' क ख. २. 'समुत्लुत्य पातयेत्' का. ३. 'जङ्घाचितो°' क-ख. ४. 'हरिणप्लुता' का. ५ 'दण्डपाता' क ख. ६ 'अतिक्रान्त सम' क ख. ७. '°चलेन' का. ८. 'आकौशिक्य' क ख. ९. '°वज्रादि' क ख. १०. 'योक्तव्या' क-ख.; 'प्रयोक्तव्या प्रयोक्तृभिः' का. ११. 'समगौ' का. १२ 'अनुगौ वापि' का. १३. 'द्विजहस्तै' का. १४. 'निर्गमं ज्ञात्वा' का. १५. 'तत्रोपाङ्गानि' का. १६. 'पादचार्यो' क-ख. १७. 'हस्तश्च-°' क ख. १८. '°श्चार्या' का. १९. 'स्थानानि संप्रवक्ष्यामि' का. २०. 'वैशाखमण्डलं' क-ख. २१. '°थालीढ' का. २२. 'त्र्यस्र पक्ष°' का.

किंचिदञ्चितजङ्घं च सौष्ठवाङ्गपुरस्कृतम् ।
वैष्णवस्थानमेतद्धि विष्णुरेवाधिदेवतम् ॥ ५२ ॥
स्थानेनानेन कर्तव्यः संलापस्तु स्वभावजः ।
नानाकार्यान्तरोपेतैर्नृभिरुत्तममध्यमैः ॥ ५३ ॥
अन्येऽपि, चक्रस्य मोक्षणे चैव धारणे धनुषस्तथा ।
धैर्योदात्ताङ्गलीलासु तथा क्रोधे प्रयोजयेत् ॥ ५४ ॥
इदमेव विपर्यस्तं प्रणयक्रोध इष्यते ।
उपालम्भकृते चैव मेकर्षाधिबलस्तथा ॥ ५५ ॥
शङ्कासूयोग्रताचिन्तामतिस्मृतिषु चैव हि ।
दैन्ये चपलतायां च मद्गौधिक्येषु शक्तिषु ॥ ५६ ॥
शृङ्गाराद्भुतबीभत्सवीरप्राधान्ययोजितम् ।
समपादे समौ पादौ तालमात्रान्तरस्थितौ ॥ ५७ ॥
स्वभावसौष्ठवोपेतौ ब्रह्मा चात्राधिदेवतम् ।
अनेन कार्यं स्थानेन विप्रमङ्गलधारणम् ॥ ५८ ॥
रूपणं पक्षिणां चैव परं कौतुकमेव च ।
स्व(ख?)स्थानां स्यन्दनस्थानां विमानस्थायिनामपि ॥ ५९ ॥
लिङ्गस्थानां व्रतस्थानां स्थानमेतत्तु कारयेत् ।
[ तालास्त्रयोऽर्धतालश्च पादयोरन्तरं भवेत् ।
तालांस्त्रीनर्धतालांश्च निषण्णोरु प्रकल्पयेत् ॥ ६० ॥
त्र्यस्रौ वक्षःस्थितौ चैव तत्र पादौ प्रयोजयेत् ।
वैशाखस्थानमेतद्धि स्कन्दश्चात्राधिदैवतम् ॥ ६१ ॥

---

१. 'जङ्घोऽसौ' का. २. 'समन्वितः' का. ३. '°रत्न°' का. ४. '°न्तरपेतो' का. ५. '°मध्यमे' क-ग. ६. 'अन्येऽपि' इति का-पुस्तके नास्ति. ७. 'मोक्षणं' का. ८. 'धारणा धनुषि स्थिते' क-ग. ९. 'धैर्यदानाङ्गलीलासु' का. १०. 'तयोद्वाग्र' क-ग. ११. 'प्रणयं कोप इच्छति' क-ग. १२. 'हर्षयो(?)द्वेगमोक्षया' क-ख. १३. 'तयोक्तता' क-ख. १४. 'चपलतायोगे' का. १५. 'गर्वामीष्टेषु' का. १६. 'योषितम्' का. १७. 'समस्तत्र' क-ग. १८. '°कारणम्' का. १९. 'वरं' क-ग. २०. 'व्रतस्थानां' क-ख. २१. पद्यमिदं का-पुस्तकेऽधिकम्. २२. 'पक्षस्थितौ' क-ग. २३. 'पदे' क-ख.

स्थानेनानेन कर्तव्यमश्वानां वाहनं बुधैः।
व्यायामो निर्गमश्चैव स्थूलपेक्षनिरूपणम् ॥ ६२ ॥

केचिदन्येऽपि[3], शरासनसमुत्कर्षे व्यायामकृत एव च।
रेचकेषु च कर्तव्यमिदमेव प्रयोक्तृभिः ॥ ६३ ॥
ऐन्द्रे[6] तु मण्डले पादौ चतुस्तालान्तरस्थितौ।
न्यस्तौ वक्षःस्थितौ चैव कटी जानू समौ तथा ॥ ६४ ॥
धनुर्वज्राणि शस्त्राणि मण्डलेन प्रयोजयेत्।
वाहनं कुञ्जरादीनां स्थूलपक्षिनिरूपणम् ॥ ६५ ॥
अस्यैव दक्षिणं पादं पञ्चतालान्प्रसार्य तु।
आलीढं स्थानकं कुर्याद्रुद्रश्चात्राधिदैवतम् ॥ ६६ ॥
अनेन कार्यं स्थानेन वीररौद्रकृतं तु यत्।
उत्तरोत्तरसंजल्पो रोषामर्षकृतश्च यः ॥ ६७ ॥
मल्लानां चैव सर्फेटः[14] शत्रूणां च निरूपणम्।
तथाभिद्रवणं चैव शस्त्राणां चैव मोक्षणम् ॥ ६८ ॥
कुञ्चितं दक्षिणं कृत्वा वामं पादं प्रसार्य च।
आलीढपरिवर्तस्तु प्रत्यालीढमिति स्मृतम् ॥ ६९ ॥
आलीढसंहितं[16] शस्त्रं प्रत्यालीढेन मोक्षयेत्।
नानाशस्त्रविमोक्षो हि कार्योऽनेन प्रयोक्तृभिः ॥ ७० ॥
न्यायाश्चैव प्रयोक्तव्याश्चत्वारः शस्त्रमोक्षणे।
भारतः सात्वतश्चैव वार्षगण्योऽथ कैशिकः ॥ ७१ ॥

---

१. 'अश्वता'(?) क-ख. २. '°पक्षि°' का. ३. 'केचिदन्येऽपि' इति का पुस्तके नास्ति. ४. 'शराणा च समुत्कर्षे' का. ५. '°कृतमेव च' का. ६. 'ऐन्द्रं तु मण्डलं' का. ७. 'पक्षकृतौ' क-ख. ८. 'कटिजानुसमा' क-ख. ९. 'धनुर्वज्रादिशास्त्राणां' का. १०. 'वदन' क-ख., 'वाहनं कुञ्जराणां तु' का. ११. 'आलीढस्थानक' का. १२. 'सजल्पा' क-ख. १३. 'तु' क-ख. १४. 'सस्फोट.' क-ख. १५. 'वामपादं' क-ख. १६. '°सहित' का. १७ 'हि विज्ञेया.' का.

भा[1]रते तु कटिच्छेदं पादच्छेदं तु सात्त्वते ।
व[2]क्षसो वार्पगण्ये तु शिरश्छेद्यं तु कैशिके ॥ ७२ ॥
एभिः प्रयोक्तृभिर्न्यायैर्नानाचारी[3]समुत्थितैः ।
प्रविचा[4]राः प्रयोक्तव्या नानाशस्त्रविमोक्षणे ॥ ७३ ॥
[5]न्यायाश्रितैरङ्गहारैर्न्यायाच्चैव समुत्थितैः ।
यस्मा[6]द्युद्धानि नीयन्ते तस्मान्न्यायाः प्रवर्तिताः ॥ ७४ ॥
[7]वामहस्तेन निक्षिप्य खेटकं दक्षिणेन च ।
शस्त्रमादाय हस्तेन प्रविचार[8]मथाचरेत् ॥ ७५ ॥
प्रसार्य च करौ सम्यक्[9]पुनरावर्त्य चैव हि ।
खेटकं भ्रामयेत्पश्चात्[10]पार्श्वोत्पार्श्वमथापि च ॥ ७६ ॥
शिरःपरिगमश्चापि कार्यः शस्त्रेण योक्तृभिः ।
[11]कपोलांसान्तरे [12]चापि शस्त्रस्यो[13]द्घट्टनं तथा ॥ ७७ ॥
पुनश्च खड्गहस्तेन [14]ललितोद्वर्तितेन च ।
खेटकेन च कर्तव्यः शिरःपरिगमो बुधैः ॥ ७८ ॥
एवं विचारः कर्तव्यो भारते शस्त्रमोक्षणे ।
सात्त्वते [15]च प्रवक्ष्यामि प्रविचारं यथाविधि ॥ ७९ ॥
स एवं प्रविचारस्तु खड्गखेटकयोः स्मृतः ।
केवलं पृष्ठतः [16]शस्त्रं कर्तव्यं खलु सात्त्वते ॥ ८० ॥
गतिश्च वार्पगण्येऽपि सात्त्वतेन क्रमेण तु ।
[17]खड्गखेटकयोश्चापि भ्रमणं संनिधीयते ॥ ८१ ॥
शिरःपरिगमादसिस्त[18]त्र शस्त्रं च केवलम् ।
उरस्युद्वे[19]ष्टनं कार्यं [20]शस्त्रस्यांशेऽथवा पुनः ॥ ८२ ॥

---

१. 'भारती कटिश्छेद्य पादश्छेद्ये तु सात्वत' (?) क-ख. २. 'वक्षसौ वर्पगणैस्तु' (?) क ख. ३. '°मुपस्थितैः' क-ख. ४. 'प्रविचार्य प्रयोक्तव्यो' का. ५. 'न्यायं श्रितैः' का. ६. 'युद्धाभिवर्तन्ते' क-ख. ७. 'वामहस्ते विनिक्षिप्याशटाकं' क; 'प्रक्षरकं' ख. ८. '°मथारमेत्' क-ख. ९. 'पुनराक्षिप्य' का. १०. '°......त्पार्श्वे' क-ख. ११. 'कपोलस्यान्तरे' का. १२. 'वापि' क ख. १३. '°द्वेष्टनं' का. १४. 'ललितोद्वेष्टितेन च' का. १५. 'तु' का. १६. 'शक्तं' का. १७. 'शस्त्रखेटकयोः' का. १८. 'तस्य शस्त्रस्य केवलम्' का. १९. '°द्वेष्टनं' का. २०. 'शस्त्रस्याङ्गेन वा पुनः' का.

भारते प्रविचारो यः[1] कर्तव्यः स तु कैशिके[2]।
विभ्रमश्च[3] तथा शस्त्रं केवलं मूर्ध्नि पातयेत् ॥ ८३ ॥
प्रविचारा प्रयोक्तव्या[4] ह्येवमेतेऽङ्गलीलया।
धनुर्वज्रासिशस्त्राणां[5] प्रयोक्तव्या विमोक्षणे ॥ ८४ ॥
न भेद्यं नापि च[6] च्छेद्यं न चापि रुधिरस्रुतिः।
रङ्गे[7] प्रहरणं कार्यं न चापि व्यक्तघातनम् ॥ ८५ ॥
राज्ञा[8] मात्रेण कर्तव्यं शस्त्राणां मोक्षणं बुधैः।
अथवाभिनयोपेतं कुर्याच्छेद्यं विधानतः ॥ ८६ ॥
अङ्गसौष्ठवसंपन्नैरङ्गहारैर्विभूषितम्[9]।
व्यायामं कारयेत्सम्यग्लय[10]तालसमन्वितः ॥ ८७ ॥
सौष्ठवे[11] हि प्रयत्नस्तु कार्यो व्यायामवेदिभिः[12]।
सौष्ठवं[13] लक्षणं प्रोक्तवर्त्मना क्रमयोजितम् ॥ ८८ ॥
शोभा सर्वत्रनित्यं (?) हि सौष्ठवं समुपाश्रिता।
नहि सौष्ठवहीनाङ्गः शोभते नाट्यनृत्तयोः ॥ ८९ ॥
अचञ्चलमकुब्जं च[14] सन्नगात्रं तथैव च।
नौत्सुच्चं[15] चलपादं च सौष्ठवाङ्गं प्रयोजयेत् ॥ ९० ॥
कटी कर्णसमा यत्र कूर्परोऽससशिर[16]स्तथा।
समुन्नतमुरश्चैव सौष्ठवं नाम तद्भवेत् ॥ ९१ ॥
अत्र[17] नित्यं प्रपन्नो हि विधये मध्यमोत्तमैः।
नाट्यं नृत्तं च सर्वं हि सौष्ठवे संप्रतिष्ठितम् ॥ ९२ ॥

---

१. '°ऽयं' का. २. 'कैशिकैः' क-ख. ३. 'विभ्रमध्य' का. ४. '°श्च कर्तव्या' का. ५. 'वज्रादिशस्त्राणां' का. ६. 'तु' का. ७. 'रङ्गप्रहरणं' का. ८. 'संज्ञामात्रेण' का. 'राज्ञा मात्रेण' इत ऊर्ध्वमादशमाध्यायपरिसमाप्तेर्ग्रन्थः क-पुस्तके त्रुटितः. ९. 'अङ्गैः सौष्ठवसंयुक्तैः' का. १०. लयावा(?) लसमन्वितम्' क-ख. ११. 'सौष्ठवेन तु यत्नस्तु १२. '°वेदिभिः' का. १३. 'सौष्ठवं लक्षणं' इत्यारभ्य 'सौष्ठवं समुपाश्रिता' इत्यन्तं पद्यं का. पुस्तके श्लोकद्वयोत्तरं वर्तते. १५. 'चासन्नगात्रमथापि च' का. १४. 'नात्युन्नचलपादं च' क-ख. १६. '°ससिरस्तथा' का. १७. पद्यमिदं का-पुस्तके नास्ति.

कटी[1]नाभिचरौ हस्तौ वक्षश्चैव समुन्नतम् ।
वैष्णवं स्थानमित्यङ्ग[2]चतुरस्रमुदाहृतम् ॥ ९३ ॥
परिमार्जनमादानं संधानं मोक्षणं तथा ।
धनुषस्तु प्र[3]योक्तव्यं करणं तु चतुर्विधम् ॥ ९४ ॥
[सं[4]मार्जनं परामर्श आदानं ग्रहणं क्रिया ।
संधानं शरविन्यासो विक्षेपो मोक्षणं भवेत् ॥ ९५ ॥]
तैलाभ्यक्तेन गात्रेण [5]यवागूमृदितेन च ।
व्यायामं कारयेद्धीमान्भित्तावाका[6]र्शिके तथा ॥ ९६ ॥
योग्यायां मातृका भि[7]त्तिस्तस्मा[8]द्भित्तिं समाश्रयेत् ।
भि[9]त्तौ प्रसारितायां तु व्यायामं कारये[10]न्नरम् ॥ ९७ ॥
बलार्थं च निषेवेत नस्यं [11]वस्तिविधिं तथा ।
स्नि[12]ग्धान्यशनिताया····रसकं पानकानि च ॥ ९८ ॥
आहा[13]राधिष्ठिताः प्राणाः प्रा[14]णे योग्याः प्रतिष्ठिताः ।
तस्माद्यो[15]ग्यप्रसिद्ध्यर्थमाहारे यत्नवान्भवेत् ॥ ९९ ॥
अशुद्धकायं प्रक्षान्त[16]मधीरं क्षुत्पिपासितम् ।
अतिपीतं तथा भुक्तं व्यायामं नैव कारयेत् ॥ १०० ॥
अचलैर्मधुरैर्गात्रैश्चतुरस्रेण वक्षसा ।
व्यायामं कारयेद्धीमान्नरमङ्गक्रिया[17]र्थकम् ॥ १०१ ॥
एवं व्यायामसंयोगे कार्यश्चारीकृतो विधिः ।
अत ऊर्ध्वं प्रवक्ष्यामि मण्डलानां विकल्पनम् ॥ १०२ ॥

इति श्री[18]भारतीये नाट्यशास्त्रे चारीविधानो नाम द[19]शमोऽध्यायः ।

---

१. 'कटिनाभिचरौ' का. २. '॰मित्यङ्ग' का. ३. 'प्रकर्तव्यं' का. ४. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. ५. 'युवा श्वासोदितेन च' का. ६. '॰कारिके तथा' का. ७. '॰भीतिः' क-ख. ८. '॰द्धीतिं' क-ख. ९. 'भित्तौ' (?) क ख. १०. 'बुध.' का. ११. 'च त्रिविधं' क-ख. १२. पद्यार्धमिदं का. पुस्तके नास्ति । 'स्निग्धानशनजाताश्च' इत्युचितं प्रतिभाति. १३. 'आहारेऽधिष्ठिता.' का. १४. 'प्राणयोग्याः' क-ख. १५. 'योग्याप्रसिद्ध्यर्थं' क-ख. १६. '॰मतीव' का. १७. '॰र्थिनम्' क-ख. १८. 'श्री' इति का-पुस्तके नास्ति. १९. 'एकादशोऽध्यायः ।' का.

[1]एकादशोऽध्यायः।

एताश्चार्यो मया प्रोक्ता यथावच्छल्लमोक्षणे।
चारीसंयोगजानीह मण्डलानि निबोधत ॥ १ ॥
अतिक्रान्तं विचित्रं च तथा ललित[2]संचरम्।
सूचीविद्धं [3]दण्डपादविहृतालातके तथा ॥ २ ॥
[4]वामबन्धं सललितं क्रान्तं चाकाशगामि [5]च।
भ्रमरास्कन्दिते [6]स्यातामावर्तं च ततः परम् ॥ ३ ॥
[8]समाक्रन्दितमप्याहुरे[9]डकाक्रीडितं तथा।
अड्डितं [10]शकटास्यं च तथाध्यर्धकमेव च ॥ ४ ॥
पिष्टकुट्टं च विज्ञेयं तथा चापगतं पुनः।
[11]आद्यं पादं च जनितं कृत्वोद्वाहितमाचरेत् ॥ ५ ॥
अलातं वामकं चैव पार्श्वक्रान्तं च दक्षिणम्।
[12]सूचीपादं पुनश्चैव त्रिकं च परिवर्तयेत्।
तथा दक्षिणमुद्धृत्य अलातं चैव वामकम् ॥ ६ ॥
परिच्छिन्नं तु कर्तव्यं बाह्यभ्रमरकेण हि।
अतिक्रान्तं पुनर्वामं दण्डपादं च दक्षिणम् ॥ ७ ॥

---

१. 'अथ द्वादशोऽध्याय' का. २. 'सचरम्' क-ख. ३. तथा 'दण्डं विवृत्तालातके' क. 'दण्डं परिवृत्तालातके' ख. ४. 'वामविद्धं' क-ख. ५. 'चाकाशका (गा) मि' क-ख. ६. 'तु' क-ख. ७. '°ते..............ततः परम्' क-ख. त्रुटिचिह्नं पुस्तकद्वयेऽपि नास्ति. ८. क. पुस्तके 'समात्सरितं इति केनचिच्छोधितः पाठ उपलभ्यते 'समोसरितं' का. ९. '°एलका°' क-ख. १०. 'अण्डितं च शकास्यं च तथाध्यर्धमिति स्मृतम्।' क-ख. ११. 'आद्यपादं तु तं कृत्वा उद्वाहितमथाचरेत्।' का. १२. क-ख-पुस्तकयोस्तु—

'विज्ञेयमेतद्व्यायामेष्वतिक्रान्तं तु मण्डलम्।
सूचीद(पु?)स्मपदं दवादपक्रान्तं च दक्षिणम् ॥
साद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम्।
आस्यन्दितं तु वामेन पार्श्वक्रान्तं च दक्षिणम्।
भुजगत्रासितं सव्यमतिक्रान्तं च दक्षिणम् ॥'

उद्धृतं दक्षिणं चैव ह्यलातं चैव वामकम् ।
पार्श्वक्रान्तं पुनः सव्यं सूचीवामकमं तथा ॥ ८ ॥
विक्षेपो दक्षिणस्य स्यादपक्रान्तं च वामकम् ।
विज्ञेयमेतद्व्यायामे विचित्रं नाम मण्डलम् ॥ ९ ॥
कृत्वोर्ध्वंवामचरणमाद्यं सूचीं प्रयोजयेत् ।
अपक्रान्तः पुनर्वाम आद्यः पार्श्वगतो भवेत् ॥ १० ॥
वामसूचीं पुनर्दद्यात् त्रिकं च परिवर्तयेत् ।
पार्श्वक्रान्तं पुनश्चाद्यमतिक्रान्तं च वामकम् ॥ ११ ॥
सूचीवामकमं कृत्वा ह्यपक्रान्तं च वामकम् ।
[पार्श्वक्रान्तं पुनश्चान्यो वामोऽतिक्रान्त एव च ॥ १२ ॥
सूचीमाद्यं पुनर्दद्यादतिक्रान्तं च वामकम् ।
परिच्छिन्नं च कर्तव्यं बाह्यभ्रमणकेन हि ॥ १३ ॥
एष चारीप्रयोगस्तु कार्यो ललितसंचरैः ।
सूचीवामपदं दद्यात् त्रिकं च परिवर्तयेत् ॥ १४ ॥
पार्श्वक्रान्तः पुनश्चान्यो वामोऽतिक्रान्त एव च ।]
पार्श्वक्रान्तं पुनश्चाद्यं सूचीविद्धे तु मण्डले ॥ १५ ॥
आद्यस्तु उद्वृत्तो भूत्वा स च दण्डक्रमो भवेत् ।
वामं सूची(चीं ?) पुनर्दद्यात्त्रिकं च परिवर्तयेत् ॥ १६ ॥
तेद्वृत्तो दक्षिणश्च स्यादलातश्चैव वामकः ।
पार्श्वक्रान्तः पुनश्चाद्यो भुजंगत्रासितस्तथा ॥ १७ ॥
अतिक्रान्तः पुनर्वामो दण्डपादश्च दक्षिणः ।
वामः सूची त्रिकावर्तो दण्डपादे तु मण्डले ॥ १८ ॥

१. 'उद्वृत्तं' क-ख. २. 'अलातं' क-ग. ३. 'दक्षिणस्य' क-ग. ४. '°तिक्रान्तश्च वामकः' क-ग. ५. 'आद्यपार्श्वगतो' क-ग. ६. 'वामसूची पुनः कृत्वा' क-ख. ७. इतःप्रभृति श्लोकपदा श्लोकत्रयी का-पुस्तकेऽधिका. ८. 'जनितो' का. ९. 'वामसूची' का. १०. 'उद्वृत्तो' का. ११. 'पुनश्चान्यो' का. १२. 'वामसूची' का. १३. 'त्रिकावर्तो' क-ग. १४. 'तु' का.

आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
आस्कन्दितं च वामेन उत्तम्भं[1] दक्षिणेन च ॥ १९ ॥
अलातं वामकं पादं सूचीं दद्यात्तु दक्षिणम्[2] ।
पार्श्वक्रान्तं पुनर्वाममाक्षिप्तो[3] दक्षिणस्तथा ॥ २० ॥
समावर्त्य[4] त्रिकं चैव दण्डपादं प्रसारयेत् ।
सूचीं वामपदं[5] पश्चात्त्रिकं तु परिवर्तयेत् ॥ २१ ॥
भुजंगत्रासितश्चाद्यो वामोऽतिक्रान्त एव च ।
एष चारीप्रयोगस्तु विवृते[6] मण्डले भवेत् ॥ २२ ॥
सूचीमाद्यं क्रमं[7] दद्यादपक्रान्तं[8] च वामकम् ।
पार्श्वक्रान्तं पुनश्चाद्यो ह्यलातश्चैव वामकः[9] ॥ २३ ॥
भ्रान्त्वा[10] चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
तत्संख्यं सप्तसंख्यं वा ललितैः पादविक्रमैः ॥ २४ ॥
अतिक्रान्तः पुनश्चाद्यो वामोऽतिक्रान्त एव च ।
पादभ्रमकर(रक?)श्च स्यादलाते खलु मण्डले ॥ २५ ॥
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
आद्यो दण्डक्रमश्चैव सूचीपादस्तु वामकः ॥ २६ ॥
कौर्यस्तिकविवर्तश्च[11] पार्श्वक्रान्तश्च दक्षिणः ।
आक्षिप्तं वामकं कुर्यात् (द्?) दण्डपादं तु दक्षिणम् ॥ २७ ॥
ऊरूद्वृत्तं[12] च तेनैव कर्तव्यं दक्षिणेन तु ।
सूचीवामक्रमश्चैव[13] त्रिकं तु[14] परिवर्तयेत् ॥ २८ ॥
अलातश्च भवेद्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामैः[15] कार्यो ललितसंचरः ॥ २९ ॥

---

१. 'उद्वृत्तं' का. २. 'दक्षिणाम्' क-ख. ३. 'वामं आक्षिप्तो' क-ख. ४. 'परिवृत्य' का. ५. 'सूचीवामपदं' का. ६. 'विद्रुते' का. ७. '°माद्यक्रमं' का. ८. 'कृत्वा चापक्रान्तं' का. ९. 'पार्श्वक्रान्तस्ततश्चान्तोऽप्यलातश्चैव वामकः' का. १०. इत प्रभृति सार्धं पद्यद्वयं का-पुस्तके नास्ति. ११. 'सूचीकार्यस्तु' क-ख. १२. एतत्पद्यं क-ख-पुस्तकयोर्नास्ति. १३. 'सूची वामकरं चैव' का. १४. 'च' का. १५. '°वामो भ्रामवन्धे तु मण्डले' का.

एष पादप्रचारस्तु ललिते मण्डले भवेत् ।
[सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ॥ ३० ॥
पार्श्वक्रान्तः पुनश्चान्यो भुजङ्गत्रासितं तथा ।
अतिक्रान्तः पुनर्वाम ऊरूद्वृत्तं तथैव च ॥ ३१ ॥
अलातश्च पुनर्वामः पार्श्वक्रान्तश्च दक्षिणः ।
अतिक्रान्तः पुनर्वामः कार्यो ललितसंज्ञकः ॥ ३२ ॥
एष पादप्रसारस्तु ललिते मण्डले भवेत् ।]
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ॥ ३३ ॥
पार्श्वक्रान्तं पुनश्चाद्यं वामं पार्श्वक्रमं तथा ।
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ॥ ३४ ॥
वामं सूचीं ततो दद्यादपक्रान्तं च दक्षिणम् ।
स्वभावगमने ह्येतन्मण्डलं सविधीयते ॥ ३५ ॥
क्रान्तमेतत्तु विज्ञेयं नामतो नाट्ययोक्तृभिः ।
एतान्याकाशगामीनि ज्ञेयान्येवं दशैव तु ॥ ३६ ॥
अतःपरं प्रवक्ष्यामि भौमानामपि लक्षणम् ।
आवर्तस्तु जनितः कार्यो वामश्चास्कन्दितो भवेत् ॥ ३७ ॥
शकटास्य. पुनश्चाद्यो वामश्चापि प्रसारितः ।
आद्यो भ्रमरकः कार्यस्त्रिकं तु परिवर्तयेत् ॥ ३८ ॥
आस्कन्दितः पुनर्वामः शकटास्यश्च दक्षिणः ।
वामः पृष्ठापसर्पी च दद्याद्भ्रमरकं तथा ॥ ३९ ॥
स एवास्कन्दितः कार्य एतद्भ्रमरमण्डलम् ।

१. पद्यार्धमिदं का पुस्तके नास्ति. २. श्लोकोऽयं कोष्ठकयद्धा पद्यत्रयी फा-पुस्तकेऽधिका. ३. '°श्चान्यं वामपार्श्वक्रम तथा' का. ४. 'वामसूची' का. ५. 'भौमनाविह' का. ६. 'आवर्त्तु' का. ७. 'पुनश्चान्यो' का. ८. 'च' का. ९. 'दक्षिणे' फ-स. १०. '°कार्यस्त्वेतद्' का. फ-स पुस्तकयोरत्र 'आद्यो भ्रमरमण्डलम्' इति श्लोकचतुर्थांशोऽधिकश्च.

आद्यो भ्रमरकः कार्यो वामश्चैवाङ्कितो भवेत्।
कार्यस्त्रिकविवर्तश्च शकटास्यश्च दक्षिणः॥ ४०॥
ऊरूद्वृत्तः स एव स्याद्वामश्चैवापसर्पतः।
कार्यस्त्रिकविवर्तश्च दक्षिणः स्कन्दितो भवेत्॥ ४१॥
शकटास्यो भवेद्वामस्तथैवास्फोटनं भवेत्।
एतदास्कन्दितं नाम व्यायामे युद्धमण्डले॥ ४२॥
आद्यं तु जनितं कृत्वा वामेन तु निकुट्टनम्।
शकटास्यः पुनश्चाद्य ऊरूद्वृत्तः स एव तु॥ ४३॥
पृष्ठावसर्पी वामश्च स च चापगतिर्भवेत्।
आस्कन्दितः पुनः सद्यः शकटास्यश्च वामकः॥ ४४॥
आद्यो भ्रमरकश्चैव त्रिकं तु परिवर्तयेत्।
पृष्ठावसर्पी वामश्चेत्यावर्ते मण्डले भवेत्॥ ४५॥
समपादं बुधः कृत्वा स्थानं हस्तौ प्रसारयेत्।
निरन्तरावूर्ध्वतलावावेष्टयोद्वेष्ट्य चैव हि॥ ४६॥
कटीतटे विनिक्षिप्य आद्यमावर्तयेत्क्रमम्।
यथोक्रमं पुनर्वाममावर्तेन प्रसारयेत्॥ ४७॥
अनयो···चेया (चार्या च अनया) भ्रान्त्वा पर्यायेणाथ मण्डलम्।
समोसरितमेतच्च[13] ज्ञेयं व्यायाममण्डलम्॥ ४८॥
पादैस्तु भूमिसंयुक्तैः सूचीविद्धैस्तथैव च।
एलकाक्रीडितश्चैव तूर्णैस्त्रिकविवर्तनम्॥ ४९॥
सूचीविद्धापविद्धैश्च क्रमेणावृत्य मण्डलम्।
एलकाक्रीडितं विद्यात् खण्डमण्डलसंज्ञितम्॥ ५०॥

१. 'श्चेवाङ्कितो' क-ख. २. 'कार्यस्त्रिकविवर्तश्च' इत्यादिपद्यद्वयी का पुस्तके नास्ति. ३. 'युद्धमण्डलम्' का. ४. 'वामं चैव निकुट्टकम्' का. ५. '°श्चान्य' का. ६. 'च' का. ७. 'आस्कन्दितं पुन. सौख्यं' का. ८. 'च' का. ९. 'न च' क-ग. १०. 'निरन्तराद्वा··· गतावा°' क-ग. ११. 'तयाक्रमं' का. १२. 'अनया · चेया' क-ग.; 'चानया चानया' का. १३. 'तु कार्यं' का. १४. '°क्रीडितैश्चैव' क-ख. १५. 'तूर्णे त्रिकविवर्तिते.' का. १६. '°पविद्धश्च' का. १७. '···खण्डलसंज्ञितम्' क-ग.; 'कण्डमण्डलसंज्ञितम्' क.

सव्यमुद्धट्टितं कृत्वा तेनैवावर्तमाचरेत् ।
तेनैवास्कन्दितः कार्यः शकटास्यश्च वामकः ॥ ५१ ॥
आद्यपृष्ठापसर्पी च स च चोपगतिर्भवेत् ।
अड्डितश्च पुनर्वाम आद्यश्चैवापसर्पितः ॥ ५२ ॥
वामो भ्रमरकः कार्य आद्यश्चास्कन्दितो भवेत् ।
तेनैवास्फोटनं कुर्यादेतदड्डितमण्डलम् ॥ ५३ ॥
आद्यं तु जनितं कृत्वा तेनैव च निकुट्टनम् ।
स एव शकटास्यश्च वामश्चास्कन्दितो भवेत् ॥ ५४ ॥
पादैश्च शकटास्यैः पर्यायेणाथ मण्डलम् ।
विज्ञेयं शकटास्यं तु व्यायामे युद्धमण्डलम् ॥ ५५ ॥
आद्यस्तु जनितो भूत्वा स एवास्कन्दितो भवेत् ।
अपसर्पी पुनर्वामः शकटास्यश्च दक्षिणः ॥ ५६ ॥
भ्रान्त्वा चारीभिरेताभिः पर्यायेणाथ मण्डलम् ।
अध्यर्धमेतद्विज्ञेयं नियुद्धे चापि मण्डलम् ॥ ५७ ॥
सूचीमाद्यक्रमं कृत्वा ह्यपक्रान्तं च वामकम् ।
भुजंगत्रासितश्चाद्य एवमेव च वामकः ॥ ५८ ॥
भुजंगत्रासितैर्भ्रान्त्वा पादैरपि तु मण्डलम् ।
पिष्टकुट्टं तु विज्ञेयं चारीभिर्मण्डलं बुधैः ॥ ५९ ॥
सर्वैश्चापगतैः पादैः परिक्रम्य च मण्डलम् ।
एतच्चापगतं विद्यान्नियुद्धे चापि मण्डलम् ॥ ६० ॥
नानाचारीसमुत्थानि मण्डलानि समासतः ।
उक्तान्यतः परं चैव समचारीं नियोजयेत् ॥ ६१ ॥

---

१. 'उद्धटितं' का. २. '°पावर्तं°' क. ३. '°स्कन्दितं कार्यं' का. ४. 'आद्य पृष्ठावसर्पी च' क-ख. ५. 'वामे गति.' क-ख. ६. इत प्रभृति सार्धश्लोकद्वयी का-पुस्तके नास्ति. ७. पद्यार्धमिदं का पुस्तके नास्त्येव. ८. 'आर्धं तु' का. ९. 'चारिमण्डलम्' का. १०. 'त्रासितं चान्य' का. ११. 'एष एव तु' का. १२. 'चारैरपि' का. १३. 'तु' का. १४. 'नियुद्धे चारिमण्डलं' का. १५. 'चापगते.' का. १६. 'परिभ्राम्य' का. १७. 'नियुद्धे चारिमण्डलम्' का. १८. 'समचारीणि°' का.

समचारीप्रयोगो यस्तत्समं नगमण्डलम् ।
आचार्यबुद्ध्या तानीह कर्तव्यानि प्रयोक्तृभिः ॥ ६२ ॥
एतानि खण्डानि समण्डलानि युद्धे नियुद्धे परिचङ्क्रमे च ।
लीलाङ्गमाधुर्यपुरस्कृतानि कार्याणि वाद्यानुगतानि तज्ज्ञैः ॥ ६३ ॥

इति श्रीभारतीये नाट्यशास्त्रे मण्डलकल्पनं नामैकादशोऽध्यायः ।

---

द्वादशोऽध्यायः ।

[ एवं व्यायामसंयोगे कार्यं मण्डलकल्पनम् ।
अतः परं प्रवक्ष्यामि गतीस्तु प्रकृतिस्थिताः ।
तत्रोपवाहनं कृत्वा भाण्डवाद्यपुरस्कृतम् ॥ १ ॥
यथामार्गरसोपेतं प्रकृतीनां प्रवेशने ।
ध्रुवायां सम्प्रवृत्तायां पटे चैवापकर्षिते ॥ २ ॥
कार्यः प्रवेशः पात्राणां नानार्थरससम्भवः ।
स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा ॥ ३ ॥
समुन्नतं समं चैव चतुरस्रमुरस्तथा ।
बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ॥ ४ ॥
ग्रीवाप्रवेशैः कर्तव्यो मयूराङ्कितमस्तकः ।
कर्णाद्दष्टाङ्गुलस्थे च बाहुशीर्षे प्रयोजयेत् ॥ ५ ॥
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ।
हस्तौ तथैव कर्तव्यौ कटिनाभितटस्थितौ ॥ ६ ॥
दक्षिणो नाभिसंस्थस्तु वामः कटितके(टे) स्थितः ।
पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ॥ ७ ॥

---

१. 'यत्तमनाम ···' क-ख. २. 'च परिक्रमे च' का. ३ 'इति भारतीयनाट्यशास्त्रे मण्डलविधान नाम द्वादशोऽध्याय समाप्त' का. ४. 'अथ त्रयोदशोऽध्याय' का. ५. श्लोकार्धमिदं क-ख पुस्तकयोर्नास्ति. ६ 'तत्रोपवहन' का. ७. 'प्रवेशनं' का. ८. 'सम्प्रयुक्ताया' का. ९ 'चैवावकर्पिते' का. १०. '°मुरस्तथा' का. ११. 'नात्युत्क्षिप्ते' क-ख. १२. 'ग्रीवाप्रदेश' का. १३ 'मयूराधितमस्तक' का. १४. 'कर्णादष्टाङ्गुलिस्थे च' का. १५. 'कटी°' का. १६. 'कटितटस्थित' का.

पादक्षेपैस्तु कर्तव्यः स्वप्रमाणविनिर्मितः ।
चतुस्तालो द्वितालश्चाप्येकतालस्तथैव च ॥ ८ ॥
चतुस्तालस्तु देवानां पार्थिवानां तथैव च ।
द्वितालश्चैव मध्यानां तालः स्त्रीनीचसङ्गिनाम् ॥ ९ ॥
[चैतुष्कलोऽथ द्विकलस्तथा ह्येककलस्तथा ।]
चतुष्कलो ह्युत्तमानां मध्यानां द्विकलो भवेत् ।
तथा चैककलः पादो नीचानां संप्रकीर्तितः ॥ १० ॥
स्थितं मध्यं द्रुतं चैव समवेक्ष्य लयं बुधः ।
यथाप्रकृतिनाट्यज्ञो गतिमेवं प्रयोजयेत् ॥ ११ ॥
धैर्योपपन्ना गतिरुत्तमानां मध्या गतिर्मध्यमसंमतानाम् ।
द्रुता गतिश्च प्रचुराधमानां लयत्रयं सत्त्ववशेन योज्यम् ॥ १२ ॥
एष एव भुवि ज्ञेयः कलातालल्ये विधिः ।
पुनर्गतिप्रचारस्य प्रयोगं शृणुतानघाः ॥ १३ ॥
स्वभावे तूत्तमगतौ कार्यं जानुकटीसमम् ।
युद्धचारीप्रयोगेषु पुनः स्तनसमं भवेत् ॥ १४ ॥
पार्श्वक्रान्तैः सललितैः पादैर्वाप्यन्वितैरथ ।
रङ्गकोणोन्मुखं गच्छेत्सम्यक्पञ्च पदानि तु ॥ १५ ॥
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणेन च ।
परिवृत्य द्वितीयं तु गच्छेत्कोणं ततः परम् ॥ १६ ॥
तत्रापि वामवेधस्तु विक्षेपो दक्षिणेन च ।
ततो भाण्डोन्मुखो गच्छेत्तान्येव त्रिपदानि च ॥ १७ ॥
एवं गतागतैः कृत्वा पदानामेकविंशतिम् ।
वामवेधं ततः कुर्याद्विक्षेपं दक्षिणस्य च ॥ १८ ॥

१. 'पादोत्क्षेपस्तु' का. २. 'अपि' इति क-पुस्तके नास्ति. ३. 'द्विताने ध्येथैव मध्यानां तालश्री च लिङ्गिनाम्' क-ख. ४. पद्यार्धमिदं क-ग-पुस्तकयोर्नास्ति. ५. 'चैष कलः पातो' क-ग. ६. 'लयत्रयम्' क-ग. ७. 'गतिं' का. ८. 'स्वभावेदुत्तमगतौ' का. ९. 'जानुस्तन-समं' का. १०. '°न्मुखो' का. ११. 'तु' का. १२. 'कला' का. १३. 'दक्षिणेन च' ग.

रङ्गे विकृष्टे भरतेन कार्यो गतागतैः पादगतिप्रचारः।
त्र्यस्रस्त्रिकोणे चतुरस्ररङ्गे गतिप्रचारश्चतुरस्र एव॥ १९॥

यः समैः सहितो गच्छेत्तत्र कार्यो लयाश्रयः।
चतुष्कलोऽथ द्विकलस्तथैवैककलः पुनः॥ २०॥

अथ मध्यमनीचैस्तु गच्छेद्यः परिवारितः।
चतुष्कलमथोर्ध्वं च तथा चैककलं पुनः॥ २१॥

दैत्यदानवयक्षाणां नृपपन्नगरक्षसाम्।
चतुस्तालप्रमाणेन कर्तव्याथ गतिर्बुधैः॥ २२॥

दिवौकसां तु सर्वेषां मध्यमा गतिरिष्यते।
तत्रापि योर्ध्ववो(गाः) ये तु तेषां देवैः समा गतिः॥ २३॥

ऋषय ऊचुः—

यदा मनुष्या राजानस्तेषां देवगतिः कथम्।
अत्रोच्यते कथं नैषा गती राज्ञां भविष्यति॥ २४॥

[इह प्रकृतयो दिव्या तथा च दिव्यमानुषी।
मानुषी चेति विज्ञेया नाट्यनृत्तक्रियां प्रति॥ २५॥

देवा हि प्रकृतिर्दिव्या राजानो दिव्यमानुषी।
या त्वन्या लोकविदिता मानुषी सा प्रकीर्तिता॥ २६॥]

देवान्वाजा(न्वया)स्तु राजानो वेदा(ध्या)त्मा[नः]स्तु कीर्तिताः॥२७॥

एवं देवानुकरणे दोषो ह्यत्र न विद्यते।
अयं विधिस्तु कर्तव्यः स्वच्छन्दगमनं प्रति॥ २८॥

संभ्रमोत्पातरोषेषु प्रमाणं न विधीयते।
[सर्वासां प्रकृतीना तु अवस्थान्तरसंश्रया।

---

१. 'त्र्यस्रे' का. २. 'द्विकलो मवेदेककल' का. ३. '°मयार्ध च' का. ४. 'सर्वेषा' इत ऊर्ध्वं 'देवगति' इत प्राक् ख-पुस्तके पाठस्त्रुटित. ५. 'यो द्रुता'(?) क ख. ६. 'अनाह' का. ७. 'अत्र' का पुस्तके श्लोकद्वयी समधिका. क-ख-पुस्तकयोस्तु 'अथ दिव्या प्रकृतयो मानुषी या प्रकीर्तिता।' एतच्छ्लोकार्धमेव. ८. 'देवान्वाजास्तु' का. ९. 'वेदाध्यात्मप्रकीर्तिता' का. १०. '°रणे दोषो' का. ११. 'स्वयं द'(?) क-ख. १२. पद्यमिदं क ख-पुस्तकयोर्नास्ति.

उत्तमाधममध्यानां गतिः कार्या प्रयोक्तृभिः ॥]
चतुरर्धकलं [च] स्याच्चदर्धकलमेव च ॥ २९ ॥
अवस्थान्तरमासाद्य कुर्याद्गतिविचेष्टितम् ।
[ज्येष्ठे चतुष्कलं यत्र मध्यमे द्विकलं भवेत् ।
त्रिकलं चोत्तमा यत्र नीचेष्वर्धकलं भवेत् ॥ ३० ॥
एवमर्घार्धहानिं तु कलानां संप्रयोजयेत् ।
उत्तमानां गतिर्या तु न तां मध्येषु योजयेत् ॥ ३१ ॥
मध्यमानां गतिर्या तु न तां नीचेषु योजयेत् ।]
ज्वरार्ते च क्षुधार्ते च तपःश्रान्ते भयान्विते ॥ ३२ ॥
विस्मये चावहित्थे च तथौत्सुक्यसमन्विते ।
शृङ्गारे चैव शोके च स्वच्छन्दगमने तथा ॥ ३३ ॥
गतिः स्थितलया कार्या विकलान्तरपातिना ।
असत्ये कामिते चैव भये वित्रासिते तथा ॥ ३४ ॥
आवेगे चैव हर्षे च कार्ये यद्ध त्वरान्वितम् ।
अनिष्टश्रवणे चैव क्षेपे चाद्भुतदर्शने ॥ ३५ ॥
अपि चात्ययिके कार्ये तथा चैवारिमार्गणे ।
अपराध्यानुमरणे श्वापदानुगते तथा ॥ ३६ ॥
एतेष्वेवं गतिं प्राज्ञो द्विकलां संप्रयोजयेत् ।
गतिः शृङ्गारिणी कार्या स्वच्छकामितसंगया ॥ ३७ ॥
दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम् ।
सूचयन्नाभिनयनं कुर्यादर्थसमाश्रयम् ॥ ३८ ॥
हृद्यवेषेणया गन्धैर्धूपैर्धूपैश्च भूषितः ।
नानापुष्पसुगन्धाभिर्मालाभिः समलंकृतः ॥ ३९ ॥

गच्छेत्सललितैः पादैरतिक्रान्तैः स्थितैस्तथा ।
तथा सौष्ठवसंयुक्तैर्लयतालवशानुगैः ॥ ४० ॥
पादयोरनुगौ [3]वापि हस्तौ कार्यौ प्रयोक्तृभिः ।
प्रच्छन्नकामिते चैव गतिं भूयो निबोधत ॥ ४१ ॥
विसर्जितजनः सस्तस्तथा दूतीसहायवान् ।
निर्वाणदीपो नात्यर्थं भूषणैश्च विभूषितः ॥ ४२ ॥
वेलासदृशवस्त्रश्च सह दूत्या शनैस्तथा ।
व्रजेत्प्रच्छन्नका[4]मैस्तु पादैर्निःशब्दमन्दगैः ॥ ४३ ॥
[5]शब्दैशत्तसुत्सुकश्च स्यादवलोकनतत्परः ।
वेपमानशरीरश्च शङ्कितः प्रस्खलन्मुहुः ॥ ४४ ॥
रसे रौद्रे तु वक्ष्यामि दैत्यरक्षोग[6]णान् प्रति ।
एक एव रसस्तेषां स्थायी रौद्रो द्विजोत्तमाः ॥ ४५ ॥
नै[7]पथ्यरौद्रो विज्ञेयस्त्वङ्गरौद्रस्तथैव च ।
तथा स्वभावजश्चैव त्रिधा रौद्रः प्रकीर्तितः ॥ ४६ ॥
रुधिरक्लिन्नदेहो यो रुधिरार्द्रमुखस्तथा ।
तथापि सहितंस्तच रौद्रो नेपथ्यजस्तु सः ॥ ४७ ॥
बहुबाहुर्बहुमुखो नानाप्रहरणाकुलः ।
स्थूलकायस्तथा प्रांशुरङ्गरौद्रः प्रकीर्तितः ॥ ४८ ॥
र[10]क्ताक्ष पिङ्गकेशश्च असितो विकृतस्वरः ।
रू[11]क्षो निर्भत्सनपरो रौ[12]द्रैः सोयं स्व[13]भावजः ॥ ४९ ॥
चतुस्तालान्तरोत्क्षिप्तैः पदैर्[14]यैन्तरपातितैः ।
गतिरेवं प्रकर्तव्या तेषां ये चापि तद्विधाः ॥ ५० ॥

---

१. '°तिक्रान्तोस्थितस्तथा' का. २. '°तालसमन्विते' का. ३. 'हस्तौ नित्यं कार्यौ' का. ४. '°कामैस्तु' का. ५. 'शब्द···साध्युत्सुकस्याद्' क-ख. ६. '°गणान्प्रति' क ख. ७. 'नैपथ्य' का. ८. 'प्रकीर्तित' का. ९. 'विरहस्त्वश्च' (?) का. १०. 'रक्ताक्ष' क ख. ११. 'रूक्षे' का. १२ 'रौद्रे' क ख. १३. 'सोऽप्यस्वभावज' क-ख. १४. 'पादैस्त्वन्तरपातिते' क ख.

अहृया तु मही यत्र श्मशानरणकश्मला ।
गतिं तत्र प्रयुञ्जीत बीभत्साभिनयं प्रति ॥ ५१ ॥
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ।
एडकाक्रीडितैः पादैरुपर्युपरिपातितैः ॥ ५२ ॥
तेषामेवानुगैर्हस्तैर्बीभत्सगतिरुच्यते ।
तथा वीरे प्रकर्तव्या पदविक्षेपसंयुता ॥ ५३ ॥
द्रुतप्रचाराधिष्ठाना नानाचारीसमाकुला ।
पार्श्वकान्तैर्लताविद्धैः सूचीविद्धैस्तथैव च ॥ ५४ ॥
कालाकालागतैः पादैरावेगे योजयेद्गतिम् ।
उत्तमानामयं प्रायः प्रोक्तो गतिपरिक्रमः ॥ ५५ ॥
[मध्यानामधमानां च गतिं वक्ष्याम्यहं पुनः ।
विस्मये चैव हर्षे च विक्षिप्य पदविक्रमान् ॥]
आसाद्य तु रसं हास्यमेतांश्चान्यांश्च योजयेत् ।
पुनश्च करुणे कार्या गतिः स्थिरपदैरथ ॥ ५६ ॥
बाष्पाम्बुरुद्धनयनः स्रस्तगात्रस्तथैव च ।
उत्क्षिप्तपातितकरस्तथा सस्वनरोदनः ॥ ५७ ॥
गच्छेत्तथा विद्धकायः प्रत्यग्रगतिसंश्रये ।
एषा स्त्रीणां प्रयोक्तव्या नीचसत्त्वे तथैव ॥ ५८ ॥
उत्तमानां तु कर्तव्या सधैर्या बाष्पसंगता ।
निःश्वासैरायतोत्सृष्टैस्तथैवोर्ध्वनिरीक्षितैः ॥ ५९ ॥

१. 'आद्या' क-ख. २. 'अत्र किंचित्' क-ख. ३. 'बीभत्सानुनयं' का. ४. 'एलका·········उप°' क-ख. ५. 'बीभत्सा गतिरिष्यते' का. ६. 'तथा·········विक्षेपसंयुक्ता' क-ख. ७. 'द्रुता प्रद्रणाविद्धा' का. ८. 'तथाविद्धे.' का. ९. 'परं' क-ख. १०. '°मेतथान्यच्च' क-ख. ११. 'करणे' क-ख. १२. 'गच्छेत्तथा···धित्या प्रस्तप्रदणसंश्रये' क-ख. १३. 'नीचसत्त्वेषु च' क-ख. १४. 'सधैर्ये' का. १५. '°तोत्कृष्टै°' का.

न तत्रं सौष्ठवं कार्यं न प्रमाणं तथाविधम् ।
उरःपादगतोत्साहः शोकव्यामूढचेतनः ।
नात्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने ॥ ६० ॥
गाढप्रहारे कार्या च शिथिलाङ्गभुजाश्रया ।
विघूर्णितशरीरा च गतिस्तूर्णपदैरथ ॥ ६१ ॥
शीतेन चाभिभूतस्य वर्षेणाभिहतस्य च ।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ ॥ ६२ ॥
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम् ।
करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च ॥ ६३ ॥
दन्तोष्ठस्फुरणं चैव चिबुकस्य प्रकम्पनम् ।
कार्यं शनैश्च गन्तव्यं शीताभिनयने गतौ ॥ ६४ ॥
तथा भयानके चैव गतिः कार्या विचक्षणैः ।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः ॥ ६५ ॥
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा ।
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकितैः ॥ ६६ ॥
द्रुतैः पूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम् ।
प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत् ॥ ६७ ॥
एषानुकरणे कार्या तर्जने त्रासने तथा ।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं रवम् ॥ ६८ ॥
एषा स्त्रीणां प्रयोक्तव्या नृणां चोक्षिप्तविक्रमा ।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित् ॥ ६९ ॥

१. 'नता' क-ख. २. क-ख पुस्तकयो रत्राधिकम्-'मध्यानामपि तत्त्वज्ञागति··· विधानत'. ३. 'उर पातहतोत्साह.' क ख. ४. 'व्याकुल' का. ५. '॰क्षूर्ण॰' का. ६. 'भिद्रुतस्य' क-ख. ७. 'दन्तो स्फुरणं' क-ख. ८. 'तु कम्पनं' का. ९. 'कर्तव्यं' क-ख. १०. 'चले' क ख. ११. 'विलोकने' क ख. १२. '॰क्षूर्णपदैः' का. १३. '॰नुसरणे' क ख. १४. 'विकृतस्वरम्' का. १५. 'एषां' क ख. १६. 'आक्षिप्त-विक्रमः' क ख.

एडकाक्रीडितैः पादैरुपर्युपरि पातितैः ।
एषामेवानुगैर्हस्तैर्गतिं मीतेषु योजयेत् ॥ ७० ॥
वणिजां सचिवानां च गतिः कार्या स्वभावजा ।
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ॥ ७१ ॥
[कृत्वा नाभितटे हस्तं मुक्ताङ्क(ख?)टकामुखम् ।
आर्यं चारालमुक्तानां कुर्यात्पार्श्वे तदन्तरे ॥
न निषण्णं वच[:]स्तव्यं न चापि परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु ॥]
यतीनां चैव सर्वेषां ये चान्ये तपसि स्थिताः ।
तेषां कार्या गतिर्ये तु नैष्ठिकं व्रतमास्थिताः ॥ ७२ ॥
अलोलचक्षुश्च भवेद्युगमात्रनिरीक्षणः ।
उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च ॥ ७३ ॥
अचञ्चलमनाश्चैव यथावल्लिङ्गमाश्रितः ।
विनीतवेषश्च भवेत्काषायवसनस्तथा ॥ ७४ ॥
प्रथमे समपादेन स्थित्वा स्थानेन वै बुधः ।
हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत् ॥ ७५ ॥
प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगैः ।
अनिषण्णेन गात्रेण गतिं गच्छेद्व्यतिक्रमात् ॥ ७६ ॥
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ॥ ७७ ॥
तथा व्रतानुगा वै स्यादन्येषां लिङ्गिनां गतिः ।
विभ्रान्ता वाप्युदात्ता या विभ्रान्तैर्निभृतापि वा ॥ ७८ ॥

---

१. 'एलक्रा' क-ख. २. 'यतीनां श्रमणानां च' का. ३. 'गतिर्विप्रा' का. ४. 'माश्रिता' का. ५. 'मत्र' का. ६. '°मतिश्चैव' क ख. ७. 'तथालिङ्गं समाश्रितः' का. ८. समपादेन' क-ख. ९. 'कृत्ला' का. १०. 'प्रयोजनम्' का. ११. 'प्रसन्नवदनं' क-ख. १२. 'वशानुगम्' क ख. १३. 'व्यतिक्रमात्' का. १४. 'लिङ्गिनो' क-ख. १५. 'व्रतानुगा' क-ख. १६. 'या' क-ख. १७. 'लिङ्गिनां गतिः' क. १८. 'चाप्युद्भ्रान्ता' (!) क-ख. १९. 'विभ्रान्ता निभृतापि च' क-ख.

न तत्र सौष्ठवं कार्यं न प्रमाणं तथाविधम्।
उरःपादगतोत्साहः शोकव्याप्तमूढचेतनः।
नात्युत्क्षिप्तैः पदैर्गच्छेदिष्टबन्धुनिपातने॥ ६०॥
गाढप्रहारे कार्या च शिथिलाङ्गभुजाश्रया।
विघूर्णितशरीरा च गतिस्तूर्णपदैरथ॥ ६१॥
शीतेन चाभिभूतस्य वर्षेणाभिहतस्य च।
गतिः प्रयोक्तृभिः कार्या स्त्रीनीचप्रकृतावथ॥ ६२॥
पिण्डीकृत्य तु गात्राणि तेषां चैव प्रकम्पनम्।
करौ वक्षसि निक्षिप्य कुब्जीभूतस्तथैव च॥ ६३॥
दन्तोष्ठस्फुरणं चैव चिबुकस्य प्रकम्पनम्।
कार्यं शनैश्च गन्तव्यं शीताभिनयने गतौ॥ ६४॥
तथा भयानके चैव गतिः कार्या विचक्षणैः।
स्त्रीणां कापुरुषाणां च ये चान्ये सत्त्ववर्जिताः॥ ६५॥
विस्फारिते चले नेत्रे विधुतं च शिरस्तथा।
भयसंयुक्तया दृष्ट्या पार्श्वयोश्च विलोकितैः॥ ६६॥
द्रुतैः पूर्णपदैश्चैव बद्ध्वा हस्तं कपोतकम्।
प्रवेपितशरीरश्च शुष्कोष्ठस्खलितं व्रजेत्॥ ६७॥
एषानुकरणे कार्या तर्जने त्रासने तथा।
सत्त्वं च विकृतं दृष्ट्वा श्रुत्वा च विकृतं रवम्॥ ६८॥
एषा स्त्रीणां प्रयोक्तव्या नृणां चाक्षिप्तविक्रमा।
क्वचिदासन्नपतितैर्विकृष्टपतितैः क्वचित्॥ ६९॥

१. 'नता' क-ख. २. क-ख पुस्तकयो रत्राधिकम्–'मध्यानामपि तत्त्वज्ञागति··· विधानतः'. ३. 'उर पातहतोत्साह' क ख. ४. 'व्याकुल' का. ५. '°क्षूर्णे°' का. ६. 'भिहृतस्य' क-ख. ७. 'दन्तो स्फुरणं' क ख. ८. 'तु कम्पनं' का. ९. 'कर्तव्यं' क-ख. १०. 'बले' क ख. ११. 'विलोकनै' क ख. १२. '°क्षूर्णपदैः' का. १३. '°नुधरणे' क ख. १४. 'विकृतस्वरम्' का. १५. 'एषां' क ख. १६. 'आक्षित-विक्रमः' क-ख.

एडकाक्रीडितैः पादैरुपर्युपरि पातितैः ।
एषामेवानुगैर्हस्तैर्गतिं मीतेषु योजयेत् ॥ ७० ॥
वणिजां सचिवानां च गतिः कार्या स्वभावजा ।
अतिक्रान्तैः पदैर्विप्रा द्वितालान्तरगामिभिः ॥ ७१ ॥
[कृत्वा नाभितटे हस्तं मुक्ताङ्कक(ख ?)टकामुखम् ।
आद्यं चारालमुक्तानां कुर्यात्पार्श्वं तदन्तरे ॥
न निषण्णं वच[:]स्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं तथा गच्छेत्तेन चैव क्रमेण तु ॥]
यतीनां चैव सर्वेषां ये चान्ये तपसि स्थिताः ।
तेषां कार्या गतिर्या तु नैष्ठिकं व्रतमास्थितैः ॥ ७२ ॥
अलोलचक्षुश्च भवेद्युगमात्रनिरीक्षणः ।
उपस्थितस्मृतिश्चैव गात्रं सर्वं विधाय च ॥ ७३ ॥
अचञ्चलमनाश्चैव यथावल्लिङ्गमाश्रितः ।
विनीतवेषश्च भवेत्काषायवसनस्तथा ॥ ७४ ॥
प्रथमे समपादेन स्थित्वा स्थानेन वै बुधः ।
हस्तं च चतुरं कृत्वा तथा चैकं प्रसारयेत् ॥ ७५ ॥
प्रसन्नं वदनं कृत्वा प्रयोगस्य वशानुगैः ।
अनिषण्णेन गात्रेण गतिं गच्छेद्व्यतिक्रमात् ॥ ७६ ॥
उत्तमानां भवेदेषा लिङ्गिनां ये महाव्रताः ।
एभिरेव विपर्यस्तैर्गुणैरन्येषु योजयेत् ॥ ७७ ॥
तथा व्रतानुगा च स्यादन्येषां लिङ्गिनां गतिः ।
विभ्रान्ता वाप्युदात्ता वा विभ्रान्तेनिभृतापि वा ॥ ७८ ॥

---

१. 'एलका' क ख. २. 'यतीना श्रमणाना च' फा. ३. 'गतिर्विप्रा' फा. ४. 'माश्रिता' फा. ५. 'मन' फा. ६. '°गतिश्चैव' क ख. ७. 'तथालिङ्गं समाश्रितः' फा. ८. समपदेन' क-ख. ९. 'कृत्वा' फा. १०. 'प्रयोजनम्' फा. ११. 'प्रसन्नवदनं' क-ख. १२. 'वशानुगम्' क ख. १३. 'दतिक्रमात्' फा. १४. 'लिङ्गेनो' क-ख. १५. 'प्रतानुगा' क-ख. १६. 'सा' क-ख. १७. 'लिङ्गिना गति.' क. १८. 'चाप्युद्भ्रान्ता' (?) क-ख. १९. 'विभ्रान्ता निभृतापि च' क-ख.

अश्वयाने गतिः कार्या वैशाखस्थानकेन तु।
तथा तूर्णपदैश्चित्रैरुपर्युपरि पातितैः॥ ९९॥
पन्नगानां गतिः कार्या पादैः स्वस्तिकसंज्ञितैः।
विटस्यापि तु कर्तव्या गतिर्ललितविक्रमा॥ १००॥
पादैराकुञ्चितैः किंचित्तालाभ्यन्तरपातितैः।
स्वसौष्ठवसमायुक्तौ तथा हस्तौ पदानुगौ॥ १०१॥
'क(ख)टकौ वर्धमानौ तु' कृत्वा विटगतिं व्रजेत्।
कञ्चुकीव प्रकर्तव्या वयोऽवस्थाविशेषतः॥ १०२॥
अवृद्धस्य प्रयोगज्ञो गतिमेवं प्रयोजयेत्।
अर्धतालोत्थितैः पादैर्विष्कम्भैर्ऋजुभिस्तथा॥ १०३॥
समुद्वहंस्तथाङ्गानि पङ्कलग्न इव व्रजेत्।
अथ वृद्धस्य कर्तव्या गतिः कम्पितदेहिका॥ १०४॥
विष्कम्भेन कृतप्राणा मन्दोत्क्षिप्तपदक्रमात्।
कृशस्याप्यभिनेया वै गतिर्मन्दपरिक्रमात्॥ १०५॥
व्याधिग्रस्ते ज्वरार्ते च तपःश्रान्ते क्षुधान्विते।
विष्कम्भनकृतप्राणः कृशः क्षामोदरस्तथा॥ १०६॥
क्षामस्वरकपोलश्च दीननेत्रस्तथैवच।
[शनैरुत्क्षेपणं चैव कर्तव्यं हस्तपादयोः।
कम्पनं चैव गात्राणां क्लेशनं च तथैव च॥ १०७॥
दूराध्वानं गतस्यापि गतिर्मन्दपरिक्रमा।
विकूणनं च गात्रस्य जानुनोश्च विमर्दनम्॥ १०८॥

---

१. 'यथा चूर्णपदैश्चित्रै.' का. २. 'वनगानां' क-ख. ३. 'पादे स्वस्तिकयोजयेत्' (?) क.ख. ४. '°विभ्रमा' क-ख. ५. '°यानभैः' क.ख. ६. 'ससौष्ठव' का. ७. '°समायुक्तस्तथा'. ८. 'स्वटकावर्द्धमानौ' क-ख. ९. 'काञ्चुकी यस्य' का. 'पद्यलग्न' क-ख. १०. 'गतिरम्पित.°' क-ख. ११. 'विष्कम्भन' क-ख. १२. 'पदक्रमा' का. १३. 'पदक्रमा' का. १४. 'व्याधिग्रस्तस्य च तथा एषा श्रान्तस्य चैव हि।' क-ख. १५. क-पुस्तके तु 'क्षामस्वरश्चैव मवेक्षि श्वासबहुलस्तथा'। १६. इतःप्रभृति श्लोकत्रयं क.ख-पुस्तकयोर्नास्ति.

स्थूलस्यापि तु कर्तव्या गतिर्देहानुकर्षिणी ।
समुद्वहनभूयिष्ठा मन्दोत्क्षिप्तपदक्रमा ॥ १०९ ॥
विष्कम्भगामी च भवेन्नि श्वासबहुलस्तथा ।
श्रमखेदाभिभूतश्च व्रजेत्तूर्णपदैस्तथा ॥ ११० ॥
मत्ताना तु गति कार्या मदे तरुणमध्यमे ।
वामदक्षिणपादाभ्या घूर्णमानोऽपसर्पणै ॥ १११ ॥
अवकृष्टे पदे चैव ह्यनवस्थितपादिका ।
विघूर्णितशरीरा च पदै प्रस्खलितैरथ ॥ ११२ ॥
उन्मत्तस्यापि कर्तव्या गतिस्त्वभिनयक्रमात् ।
बहुचारीसमायुक्ता लोकानुकरणाश्रया ॥ ११३ ॥
रूक्षस्फुटितकेशश्च रजोध्वस्ततनुस्तथा ।
अनिमित्तप्रकथनो बहुभाषी विकारवान् ॥ ११४ ॥
आलीढस्थानक कृत्वा गात्र तस्यैव चानुगम् ।
जानूपरि कर चैकमपर वक्षसि स्थितम् ॥ ११५ ॥
अवलोक्य दिश सर्वाश्चिबुक बाहुमस्तके ।
गन्तव्य विक्रमैर्विप्रा पञ्चतालान्तरोत्थितै ॥ ११६ ॥
[नियुद्धसमये चैव रङ्गावतरणे तथा ।
सिंहादीना प्रयोक्तव्या गतिरेषा प्रयोक्तृभि ॥ ११७ ॥]
शेषाणामर्थयोगेन गति स्थाने च योजयेत् ।
वाहनार्थप्रयोगेषु रङ्गावतरणेषु च ॥ ११८ ॥
एवमेता प्रयोक्तव्या नराणा गतयो बुधै ।
नौकी या या म[या] ह्यत्र आम्नातास्त्वपि लोकत ॥ ११९ ॥

---

१ '°घूर्णपदै' का २ 'अवकृष्टे' का ३ 'करै प्रचलितैस्तथा' ब. ४ 'गतिश्च नियतक्रमा' का. ५ 'आलीढ स्थानक' ब-ख ६ 'कर चैकम्' का. ७ 'चैव व्यवस्थितम्' ब-ग ८ 'कृत्वा' का. ९ पद्यमेतदधिक का पुस्तके १०. 'प्रयोक्त ' ब-ग ११ 'स्थान प्रयोजयेत्' ब ख. १२ 'नौकाद्य या मया ह्यत्र माम्नाता अपि लोकत' का.

अतःपरं प्रवक्ष्यामि स्त्रीणां गतिविचेष्टितम् ।
स्त्रीणां स्थानानि कार्याणि गतिष्वाभरणेषु च ॥ १२० ॥
आयतं चावहित्थं च अश्वक्रान्तमथापि वा ।
[दक्षिणस्तु समः पश्चात् त्र्यस्रः पक्षस्थितोऽपरः ।
वामः समुन्नतकटिश्चायते स्थानके भवेत् ॥ १२१ ॥
आवाहने विसर्गे च तथा निर्वर्णनेषु च ।
चिन्तायां चावहित्थे च स्थानमेतत् प्रयोजयेत् ॥ १२२ ॥]
रङ्गावतरणारम्भैः पुष्पाञ्जलिविसर्जनम् ।
मन्मथेर्ष्योद्भवं कोपं तर्जन्यङ्गुलिमोटनम् ॥ १२३ ॥
निषेधगर्वगाम्भीर्यं मौनमानावलम्बनम् ।
स्थानेऽस्मिन्संविधातव्यं दिगन्तरनिरूपणम् ॥ १२४ ॥
[11][समो यत्र स्थितो वामस्त्र्यस्रः पक्षस्थितोऽपरः ।
समुन्नतकटिर्वामस्त्ववहित्थं तु तद्भवेत् ॥ १२५ ॥]
[12]पुरोऽपि चलितस्त्र्यस्रस्तदन्योऽपस्रुतः समः ।
पादस्तालान्तरन्यस्तस्त्रिकमीषत्समुन्नतम् ॥
पाणिर्लतारूयो यत्रैक[13]स्तदन्योऽपि नितम्बगः ॥ १२६ ॥
[स्त्रीणामेतत् स्मृतं स्थानं सलापे तु स्वभावजे ।

---

१ 'गतिस्था भाषणेषु च' क-ख. २ 'च' का. ३. 'एतत् पद्यद्वय क-ख पुस्तकयो॰र्नास्ति । किं त्वस्य स्थाने—

'वाम स्वभावतो यत्र पादो विरचित सम. ।
तालत्रयान्तरे न्यस्तविद्य पक्षस्थितोऽपर ॥
प्रसन्नमानसपुरा (?) सम यत्र समुन्नतम् ।
स्तानितम्बगौ हस्तौ स्थान ज्ञेय तदा जगुम् ॥'

एतत् पद्यद्वय वर्तते. ४. "॰रम्भपुष्पा॰" क-ख. ५ 'मन्मथस्योद्भव' क ख. ६ 'तर्जनाङ्गुलिमोटन' क-ख. ७. 'निषेव (?)' क ख. ८. 'गाम्भीर्यमौन' का. ९ 'सविधानीय' क ख. १०. 'दिगम्बर' क-ख. ११. पद्यमेतदधिक का-पुस्तके १२ 'पुरा विरचितस्त्रिस' क ख. १३. "॰लताख्ये" क-ख. १४. पद्यमेतदधिक का पुस्तके.

निश्चये परितोषे च वितर्के चिन्तने तथा ॥]
अवहित्थं समाख्यातं स्थानमागमभूषणैः ॥ १२७ ॥
विलासलीलाविब्बोकश्रृङ्गारात्मनिरूपणैः ।
स्थानमेतत्प्रयोक्तव्यं भर्तुर्मार्गावलोकने ॥ १२८ ॥
पादः समुत्थितश्चैक एकश्चाग्रतलाञ्चितः ।
सूचीविद्धमविद्धं वा तदश्वक्रान्तमुच्यते ॥ १२९ ॥
'शाखावलम्बने कार्यं स्तवकग्रहणे तथा ।
विश्रामेष्वथ देवानां दाराणां चात्र योगतः ॥ १३० ॥
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ।
पुनश्च संप्रवक्ष्यामि गतिं प्रकृतिसंस्थिताम् ॥ १३१ ॥
एवं स्थानविधिः कार्यः स्त्रीणां नृणामथापि च ।
स्थानकं तावदेव स्याद्यावत्पेष्टा प्रवर्तते ॥ १३२ ॥
भ्रगावस्थानकं नृत्ये चारी च समुपस्थिता ।
कृत्वावहित्थं स्थानं तु वामं चाधोमुखं करम् ॥ १३३ ॥
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ।
ततः संश्लिष्टं पादं तलमात्रसमुत्थितम् ॥ १३४ ॥
दक्षिणं वामपादस्य पार्श्वपार्श्वे विनिक्षिपेत् ।
तेनैव समकालं च रेचयेत् वामकं भुजम् ॥ १३५ ॥

दक्षिणं विनं[1]सेत्पार्श्वं न्यसेन्नाभितटे ततः ।
नितम्बे दे[2]क्षिणं कृत्वा हस्तं चोद्वेक्ष्य वामकम् ॥ १३६ ॥
ततो वामपदं दद्याल्लताहस्तं च दे[3]क्षिणम् ।
लीलयोद्वाहितेनाथ शिरसोनुं[4]गतेन च ॥ १३७ ॥
षट्कलं तु न कर्तव्यं तथाष्टकलमेव च ।
पादस्य पतनं तज्ज्ञैः खेदनं तद्भवेत्स्त्रियोः[5] ॥ १३८ ॥
सयौवनानां नारीणामेवं कार्या गतिर्बुधैः ।
[6]स्थवीयसीनामेतासां संप्रवक्ष्याम्यहं गतिम् ॥ १३९ ॥
[7]कृत्लापविद्धं स्थानं तु वाम न्यस्य कटीतटे ।
आद्य चारालमुक्ता[8]नां कुर्यान्नाभिस्तनान्तरे ॥ १४० ॥
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ।
कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ॥ १४१ ॥
प्रेष्याणाम[9]पि कर्तव्या गतिरुद्भ्रान्तगामिनी ।
किंचिदु[10]न्नमितैर्गात्रैराविद्धगतिविक्र[11]मा ॥ १४२ ॥
स्थानं कृत्वावहित्थं तु[12] वामं चाधोमुखं भुजम् ।
नाभिप्रदेशे विन्यस्य सव्यं च खटं[13]कामुखम् ॥ १४३ ॥
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ।
उदात्तललितैर्गात्रैः पदैर्ली[14]लासमन्वितैः ॥ १४४ ॥
या पूर्वमेवाभिहिता ह्युत्तमाना गतिर्मया ।
स्त्रीणां कापुरुषाणां च ततोर्धा[15]र्धं तु योजयेत् ॥ १४५ ॥
मध्यमोत्तमनीचानां नॄं[16]णां यद् गतिचेष्टितम् ।
स्त्रीणां [17]तदे(दे?)व कर्तव्यं ललितैः प[18]दैर्विक्रमैः ॥ १४६ ॥

---

१. 'विनयेत्' क-ख. २ 'दक्षिणे' क ख. ३ 'सदक्षिणम्' क ख. ४. 'शिरसानुगतेन' क ख. ५. 'स्त्रिय' का. ६. 'स्थानीया या स्त्रियस्तासा' क-ख. ७. 'कृत्लापविद्ध' क-ख. ८. '°मुत्तान' क-ख. ९. 'वृद्धाणामपि' क-ख. १०. 'क्वचिदुन्न°' का. ११. '°भुजविक्रमा' क ख. १२. 'च' का. १३. 'कटका°' का. १४. '°ली...सम°' १५ '°र्धार्धा' क-ख. १६ 'नृपप्रति विचेष्टितम्' क ख. १७. 'तदर्धा कर्तव्या' क-ख. १८. 'पाद°' क-ख.

बालानामपि कर्तव्या स्वच्छन्दगतिविक्रमा ।
न तस्याः सौष्ठवं कार्यं न प्रमाणं प्रयोक्तृभिः ॥ १४७ ॥
[तृतीया प्रकृतिः कार्या नाम्ना चैव नपुंसकम् ।
नरस्वभावमुत्सृज्य स्त्रीगतिं तत्र योजयेत् ॥ १४८ ॥]
विपर्ययः प्रयोक्तव्यः पुरुषस्त्रीनपुंसके ।
स्वभावमात्मनस्त्यक्त्वा तद्भावगमनादिह ॥ १४९ ॥
व्याजेन क्रीडया वापि तथा भूयश्च वञ्चनात् ।
स्त्री पुंसः प्रकृतिं कुर्यात्स्त्रीभावं पुरुषोऽपि वा ॥ १५० ॥
धैर्यौदार्येण सत्त्वेन बुद्ध्या तद्वच्च कर्मणा ।
स्त्री पुमांसं स्वभिनयेद्वेषवाक्यविचेष्टितैः ॥ १५१ ॥
स्त्रीवेषभाषितैर्युक्तः प्रेक्षितप्रेक्षितैस्तथा ।
मृदुमन्दगतिश्चैव पुमान्स्त्रीभावमाचरेत् ॥ १५२ ॥
[विजातीयास्तु या नार्यः पुलिन्दशबराङ्गनाः ।
याश्चापि तासां कर्तव्या तज्जातिसदृशी गतिः ॥ १५३ ॥
व्रतस्थानां तपःस्थानां लिङ्गस्थानां तथैव च ।
स्वस्थानां चैव नारीणां समपादं प्रयोजयेत् ॥ १५४ ॥
उद्धता येऽङ्गहाराः स्युर्याश्चार्यो मण्डलानि च ।
तानि नाट्यप्रयोगज्ञैर्न कर्तव्यानि योषिता ॥ १५५ ॥]
तथासनविधिः कार्यो नृणां स्त्रीणां विशेषतः ।
नानाभावसमायुक्तस्तथैव शयनाश्रयः ॥ १५६ ॥
विष्कम्भेणाञ्चितौ पादौ त्रिकं किंचित्समुन्नतम् ।
हस्तौ कट्यूरुविन्यस्तौ बाहुशीर्षाश्रितं शिरः ॥ १५७ ॥

१. '°पदविक्रमा' क-ख. २. 'तस्या' क-ख. ३. 'प्रमाणं न' का. ४. पद्यमिद क-ख-पुस्तकयोर्नास्ति. ५. 'पुरुषस्त्रीनपुंसके.' क-ख. ६. 'दभाव(?)°' क-ख. ७. 'सेवया' का. ८. 'प्रेक्षिताप्रेक्षितै.' क-ख. ९. 'मृदुसन्नगति.' क-ख. १०. 'इत. प्रभृति पद्यत्रयं का-पुस्तकेऽधिकम्. ११. 'अथासन°' क-ख. १२. 'कार्यः स्त्रीणां नृणामथापि वा' क-ख. १३. 'तथा च' क. १४. 'विष्कम्भेना°' का. १५. 'हस्ताः कट्यूरुविन्यस्ताः' का. १६. 'स्वस्थे स्यादुपवेशने' का.

[पादः प्रसारितः किंचिदेकश्चैवासनाश्रयः।
शिरः पार्श्वगतं चैव सचिन्त उपवेशने॥
चिबुकोपाश्रितौ हस्तौ बाहुशीर्षाश्रित शिरः॥ १५८॥]
सप्रणष्टेन्द्रियमना भवेच्छोकोपवेशने।
प्रसार्य बाहू शिथिलौ तथा चोपाश्रयाश्रितः॥ १५९॥
मूर्च्छामदश्रमग्लानिविषादेषूपवेशयेत्।
सर्वपिण्डीकृताङ्गस्तु सपाते पादजानुभिः॥ १६०॥
व्याधिव्रीडितनिद्रासु ध्याने चोपविशेन्नरः।
तथा चोत्कटकं स्थानं स्फिक्पार्ष्णीना समागमम्॥ १६१॥
पित्र्ये निर्वापसलिले संध्यासाचमनेषु च।
विष्कम्भित पुनश्चैव जानु भूमौ निपातयेत्॥ १६२॥
प्रियप्रसादने कार्ये होमादिकरणेषु च।
महीगताभ्या जानुभ्यामधोमुखमवस्थितम्॥ १६३॥
देवाभिगमने चैव रुषिताना प्रसादने।
शोके चाक्रन्दने तीव्र मृताना चैव दर्शने॥ १६४॥
त्रासने च कुसत्त्वाना दीनाना चैव याचने।
होमयज्ञक्रियाया च प्रेष्याणा चैव योजयेत्॥ १६५॥
मुनीना नियमेष्वेष भवेदासनजो विधिः।
अथासनविधिः कार्यो विविधो नाटकाश्रयः॥ १६६॥
स्त्रीणा च पुरुषाणा च बाह्यश्चाभ्यन्तरस्तथा।
[आभ्यन्तरस्तु नृपतेर्बाह्यो बाह्यगतस्य च।]
देवानां नृपतीनां च दद्यात्सिंहासनं द्विजाः॥ १६७॥

---

१ सार्धपद्यमेकमिदमधिकं का पुस्तके. २ 'शोकोत्सुक्योपवेशने' का. ३. 'चापाश्रयाश्रित' क ख. ४. 'मोहमूर्च्छामन्दग्लानिविषादेषू' का. ५ 'सयुक्' का. ६. 'व्याधिपीडावहित्थेषु' क ख. ७. 'चोत्कटिकास्थान' का. ८. 'समागम' का. ९. 'निवापे जप्ये च' का. १०. '°चमनेऽपि च' का. ११. 'देवाभिगमने कार्यं रूपिकाणां च सान्त्वने' क-ख. १२. 'तीव्रमृताना' का. १३. 'नीचाना चैव' का. १४. 'कारयेत्' का. १५. 'पद्यार्धमिद' क-पुस्तकेऽधिकम्

पुरोधसाममात्यानां भवेद्वेत्रासनं तथा ।
मुण्डा(आ[1])सनं च दातव्यं सेनानीयुवराजयोः ॥ १६८ ॥
काष्ठासनं ब्राह्मणानां कुमा[2]रीणां कुथासनम् ।
एवं रा[3]जसभां प्राप्य कार्यस्त्वा[4]सनजो विधिः ॥ १६९ ॥
स्त्रीणां चैवा[5]सनविधिं संप्रवक्ष्याम्यहं पुनः ।
सिंहासनं तु राज्ञीनां देवीनां म[6]ण्डलासनम् ॥ १७० ॥
पुरोधोमात्य[7]पत्नीनां भवेद्[8]वेत्रासनं तथा ।
भोगिनीनां पुनश्चै[9]व वस्त्रं[10] चर्म कुथापि वा ॥ १७१ ॥
[ब्रा[11]ह्मणीनां यतीनां च पट्टासनमथापि च ।
वैश्यानां च प्रदातव्यमासनं च मयूरकम् ॥ १७२ ॥]
शेषाणां प्रमदाना तु भवेद्भू[12]म्यासनं द्विजाः ।
एवमाभ्यन्तरो ज्ञेयो बाह्यश्चासनजो विधिः ॥ १७३ ॥
तथा स्वगृह[13]वार्तासु च्छन्देनासनमिष्यते ।
नियम[14]स्थमुनीनां च भवेदासनजो विधिः ॥ १७४ ॥
लिङ्गिनां या[15]सनविधिः कार्यो व्रतसमाश्रयः ।
वृषी[16]मुण्डासनप्रायं वेत्रासनमथापि वा[17] ॥ १७५ ॥
[ हो[18]मे यज्ञक्रियाया च पित्र्यार्थे च प्रयोजयेत् । ]
स्थानीया ये च पुरुषाः कुलविद्यासमन्विताः ।
तेषामासनसत्कारः कर्तव्य इह[19] पार्थिवैः ॥ १७६ ॥
समे समासनं दद्यान्मध्य[20]मे मध्यमासनम् ।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं भवेत् ॥ १७७ ॥

---

१. 'कु(? मु)ड्डासन' का. २. 'कुमारीणां' का. ३. 'राजासनं' क-ख. ४. 'तु' इति क ख पुस्तकयोर्नास्ति ५. 'चाप्यासन' का ६. 'मुण्डमासनम्' का. ७. 'पतीनां' क ख. ८. 'दद्यात्' का. ९. 'तथा चैव' का. १०. 'कुथा चर्मउथापि वा' का. ११. 'पद्यमेतदधिकं' का-पुस्तके. १२. 'दिव्यासन' का. १३. 'स्वगृहवा...' क-ख. १४. 'नियमस्थो' क-ख. १५. 'या' इति का पुस्तके नास्ति. १६. 'दण्डमुण्डवृषीप्रायं'. १७. 'च' का. १८. पद्यार्धमिदं क-ख-पुस्तकयोर्नास्ति. १९. 'इति' क-ख. २०. 'मध्यमध्यममासनम्' का.

उपाध्यायस्य नृपतेर्गुरूणां चाग्रतो बुधैः।
भूम्यासनं सदा कार्यमथवा काष्ठमासनम् ॥ १७८ ॥
नौनागरथयानेषु भूमिकाष्ठासनेषु च।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः ॥ १७९ ॥
आकुञ्चितं समं चैव प्रसारितविवर्तने।
उद्वाहितं तथा चैव शयने कर्म कीर्त्यते ॥ १८० ॥
[ स्वैरमाकुञ्चितैरङ्गैः शय्याविद्धेषु जानुनी।
स्थानमाकुञ्चितं नाम शीतानां तु प्रयोजयेत् ॥ १८१ ॥
उत्तानितमुखं चैव स्रस्तमुत्करकं तथा।
समं नाम तु सुप्तस्य स्थानकं संविधीयते ॥ १८२ ॥
एकं भुजमुपाधाय संप्रसारितजानुकम्।
स्थानं प्रसारितं नाम खलु सुप्तस्य कारयेत् ॥ १८३ ॥
अधोमुखस्थितं चैव विकर्तनमिति स्मृतम्।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥ १८४ ॥
अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च।
उद्वाहितं तु विज्ञेयं लीलायां वेशने विभोः ॥ १८५ ॥
ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥ १८६ ॥ ]
गतिप्रचारस्तु मयोदितोऽयं नोक्तश्च यः सोऽर्थवशेन साध्यः।
अतः परं रङ्गविधिक्रमस्य वक्ष्यामि कक्षान्तरसंविधानम् ॥ १८७ ॥

इति श्रीभारतीये नाट्यशास्त्रे गतिप्रचारो नाम द्वादशोऽध्यायः।

---

१. 'च' इति का. पुस्तके नास्ति. २. 'तथा' का. ३. 'तथा काष्ठासनेषु' का. ४. 'समं चैव' का. ५. इत प्रभृति षट्श्लोकी क-ख पुस्तकयोर्नास्ति. ६. 'रङ्गपरिश्रमस्य' क-ख. ७ 'कक्षां प्रविभागयुक्ताम्' का. ८. 'श्री' इति का-पुस्तके नास्ति. ९. 'त्रयोदशोऽध्यायः' का.

त्रयोदशोऽध्यायः[1]।

ये तु पूर्वं मया प्रोक्तास्त्रयो वै नाट्यमण्डपाः ।
तेषां विभागं विज्ञाय ततः कक्षां[2] प्रयोजयेत् ॥ १ ॥
ये नेपथ्यगृहद्वारे मया पूर्वं प्रकीर्तिते ।
तयोर्भाण्डस्य विन्यासो मध्ये कार्यः प्रयोक्तृभिः ॥ २ ॥
कक्षाविभागो[3] निर्देश्यो रङ्गपीठपरिक्रमात् ।
परिक्रमेण रङ्गस्य ह्यन्या[4] कक्षा भवेदिह ॥ ३ ॥
कक्षाविभागे[5] ज्ञेयानि गृहाणि नगराणि च ।
उद्यानारामसरितस्त्वाश्रमा[6] अटवी तथा ॥ ४ ॥
पृथिवी सागराश्चैव त्रैलोक्यं सचराचरम् ।
वर्षाणि सप्त द्वीपाश्च पर्वता विविधास्तथा ॥ ५ ॥
आलोकश्चैव लोकश्च रसातलमथापि वा ।
दैत्यानामालयश्चैव गृहाणि[7] च वनानि च ॥ ६ ॥
[ तथा[8] सप्त समुद्राश्च वर्षा वै पर्वतास्तथा ।
यत्र वार्ता प्रवर्तेत तत्र कक्ष्यां प्रवर्तयेत् ॥ ७ ॥
बाह्यं वा मध्यमं वापि तथैवाभ्यन्तरं पुनः ।[9]]
दूरं वा संनिकृष्टं वा देशं[10] तु परिकल्पयेत् ॥ ८ ॥
पूर्वं प्रविष्टा ये रङ्गे ज्ञेयास्तेऽभ्यन्तरे बुधैः ।
पश्चात्प्रविष्टास्ते ज्ञेयाः[11] कक्ष्या(क्षा)भागे[12] तु बाह्यतः ॥ ९ ॥
तेषां तु दर्शनेच्छु[13] सन्प्रविशेद्रङ्गमण्डलम् ।
दक्षिणाभिमुखः[14] सोऽर्थं[15] कुर्यादात्मनिवेदनम्[16] ॥ १० ॥

---

१. 'अथ चतुर्दशोऽध्याय' का. २. 'कक्ष्यां' का. ३. 'कक्ष्याविभागो' का. ४. 'कक्ष्या ह्यन्या विधीयते' का. ५. 'कक्ष्या॰' का. ६. 'उद्यानारामसहितो देशो ग्रामोऽटवी तथा' का. ७. 'वर्णने' घ. ट. ८. क-ख-पुस्तकयो. 'नगरे च वने चापि वर्षे वै पर्वते तथा' इत्यधिकमत्र. ९. अयमधिकः श्लोकद्वयीयं कोष्ठकपदा १०. 'देशात्तु' का. ११. 'विज्ञेया' का. १२. 'कक्षाभावे तु मध्यत' क-ग. १३. 'च.' का. १४. 'दक्षिणाभिमुखं' का. १५. 'सोऽप' इति त्रुटितं क-ख-पुस्तकयो. १६. 'कुर्यादात्मनिवेदनम् (?)' का.

यतो मुखं भवेद्धाण्डद्वारं नेपथ्यकस्य च।
सा मन्तव्या तु दिक्पूर्वा नाट्ययोगेन नित्यशः॥ ११॥
निष्क्रामेच्चापि यस्तत्र नरः कार्येण केनचित्।
सनिष्क्रमेत्तु तेनैव कृतं येन निवेशनम्॥ १२॥
[निष्क्रान्तोऽर्थवशाच्चापि प्रविशेद् यदि तद्गृहम्।
यतः प्राप्तः स पुरुषस्तेन मार्गेण निष्क्रमेत्॥ १३॥
अथवार्थवशाच्चापि तेनैव सह गच्छति।
तथैव प्रविशेद् गृहमेकाकी सहितोऽपि वा॥ १४॥
तयोश्चापि प्रविशतोः काष्ठामन्यां विनिर्दिशेत्।
परिक्रमेण रङ्गस्य त्वन्या कक्ष्या विधीयते॥ १५॥
समैश्च सहितो गच्छेन्नीचैश्च परिवाहितः।
अथ प्रेक्षणिकाश्चापि विज्ञेया ह्यमतो गतौ॥ १६॥
सैव भूमिस्तु बहुभिर्विकृष्टा स्यात्परिक्रमैः।
मध्या वासन्निकृष्टा वा तेषामेवं विकल्पयेत्॥ १७॥
नगरे वा वने वापि पर्वते सागरेऽपि वा।
दिव्यानां गमनं कार्यं वर्षे द्वीपेऽपि वा पुनः॥ १८॥
आकाशेन विमानेन मायया(?)प्यथवा पुनः।
विविधाभिः क्रियाभिर्वा नानार्थाभिः प्रयोगतः॥ १९॥
नाटके छन्नवेषाणां दिव्यानां भूमिसंचरः।
मानुषैः कारणादेषां यथा भवति दर्शनम्॥ २०॥
भारते त्वथ हैमे वा हरिवर्षे इलावृते।
रम्ये किं पुरुषे वापि कुरुषूत्तरकेषु वा॥ २१॥

---

१. पद्यमिदं का-पुस्तके नास्ति. २. 'यं सूनर-' क-ख. ३. 'अविक्रामेत्तु' क-ख. ४. 'निवेदनम्' क-ख. ५. सेयं श्लोकचतुष्टयी क-ख-पुस्तकयोर्नास्ति. ६. '°सप्त-कृष्टा वा' का. ७. 'तेषामेव विकल्पनात्' क-ख. ८. 'पर्वते नगरेऽपि वा' क. 'सागरे पर्वतेऽपि वा' का. ९. 'द्वीपे वर्षेषु वा पुन' का. १०. 'मयेन' क-ख. ११. 'यदा' क-ख.

दिव्यानां[1] छन्दगमनं सर्ववर्षेषु[2] कीर्तितम् ।
भारते[3] मानुषाणां च गमनं संविधीयते ॥ २२ ॥
हिमवत्पृष्ठसंस्थे[4] तु कैलासे पर्वतोत्तमे[5] ।
यक्षाश्च गुह्यकाश्चैव धनदानुचराश्च ये ॥ २३ ॥
रक्षोभूतपिशाचाश्च[6] सर्वे हैमवताः स्मृताः ।
हेमकूटे च गन्धर्वा विज्ञेयाः साप्सरोगणाः ॥ २४ ॥
सर्वे नागा [च[7]] निषधे शेषवासुकितक्षकाः ।
महामेरौ त्रयस्त्रिंशज्ज्ञेया देवगणा बुधैः[8] ॥ २५ ॥
नीले तु वैडूर्यमये सिद्धा ब्रह्मर्षयस्तथा[9] ।
दैत्याना दानवानां च श्वेतपर्वत उच्यते[10] ॥ २६ ॥
पितरश्चापि विज्ञेया. शृङ्गवन्तं समाश्रिताः ।
इत्येते पर्वताः श्रेष्ठा दिव्यावासी[11] भवन्ति हि ॥ २७ ॥
तेषां कक्षाविभागस्तु[12] जम्बूद्वीपे भवेदयम् ।
तेषा तु[13] (चेष्टितं) कार्यं स्वैः स्वैः कर्मपराक्रमैः ॥ २८ ॥
परिच्छदविशेषस्तु तेषा मानुषलोकवत् ।
सर्वे भावास्तु[14] देवाना कार्या मानुषसश्रयाः ॥ २९ ॥
तेषामनिमिषं[15] यत्तु तन्न कार्यं प्रयोक्तृभि. ।
इह भावा रसाश्चैव दृष्ट्यासेव[16] प्रतिष्ठिताः ॥ ३० ॥
दृष्ट्या हि सूचितो भावः पश्चादङ्गैर्विभाव्यते[17] ।
[एवं कक्ष्याविभागस्तु मया प्रोक्ता द्विजोत्तमाः ।
पुनश्चैव प्रवक्ष्यामि प्रवृत्तीनां तु लक्षणम् ॥ ३१ ॥]

---

१. 'दिव्याना' क-ख. २. 'वर्षव्वेतेषु कारयेत' का. ३. एतद् कोष्ठबद्ध श्लोकपञ्चक क ख पुस्तकयोर्नास्ति ४. '°पार्श्वे' क ख. ५. 'पर्वते शुभे' (?) क-ख. ६. 'रक्ष - पिशाचभूताश्च' का. ७ 'च' इति त्रुटित क-ख पुस्तकयो ८. 'तथा' का. ९. 'सिद्ध-ब्रह्मर्षय.' का. १०. 'दृश्यते' का. ११. 'दिव्यवासा प्रकीर्तिता' का. १२. 'कक्ष्या-विभागश्च' का. १३. 'चावेष्टित' क-ख. १४. 'च' का. १५. 'ह्यनिमिषत्वं यत्तत्र' का. १६. 'दृष्टावेव' का. १७. 'पुनरङ्गै.' का.

चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः[1] ।
आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी ॥ ३२ ॥

अत्राह—प्रवृत्तिरिति कस्मात् । उच्यते—पृथिव्यां नाना[2]देशवेषभाषाचार[3]वार्ताः ख्यापयतीति प्रवृत्तिः, प्रवृत्तिश्च[4] निवेदने । अत्राह—यथा[5] पृथिव्यां नाना[6]देशाः सन्ति, कथमासां चतुर्विधत्वमुत्पन्नम्, समानलक्षणश्चासां प्रयोग उच्यते । सत्य[7]मेतत् समानलक्षणः प्रयोगः । किंतु नानादेशवेषभाषाचारो लोक इति कृत्वा लोकानुमतेऽनु[8]वृत्तिसंश्रितमस्य[9] मया चतुर्विधत्वमभिहितं भारत्या[10]रभटी सात्त्वती कैशिकी चेति । वृत्ति[11]संश्रितेष्वमीषु प्रयोगेष्वभिरता देशाः, यतः प्रवृत्तिचतुष्टयमभिनिवृत्तं प्रयोगश्चोत्पादितः । तत्र दाक्षिणात्यास्ता[12]वत्, बहुगीतनृत्य[13]वाद्या कैशिकीप्राया[14]श्चतुरमधुरललिताङ्गाभिनया[15]श्च ।

महेन्द्रो मलयः सह्यो मेखक[16] कालपञ्जरः ।
एतेषु ये श्रिता[17] देशाः स ज्ञेयो दक्षिणापथः ॥ ३३ ॥
कोशला[18]स्तोशलाश्चैव कलिङ्गा यवनाः[19] खसाः ।
द्रमिडा[20]न्ध्रमहाराष्ट्रा वेण्णा[21] वै वानवासिजाः[22] ॥ ३४ ॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशास्तेषु[23] युञ्जीत दाक्षिणात्यां तु नित्यशः ॥ ३५ ॥
आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा आनर्ताः[24] सार्बुदेयकाः[25] ॥ ३६ ॥

---

१. '°प्रयोगतः' का. २. '°नाट्य' क-ख. ३. '°भाषाचारो' क ख. ४. 'वृत्तिश्च निवेदने' का. ५. 'यदा' क ख. ६. 'बहवो देशाः' का. ७. 'एवमेष' क-ख. ८. 'अनु°' इति क-ख-पुस्तकयोर्नास्ति. ९. 'नाट्यस्य' का. १०. 'भारतीसात्वतीकैशिक्यारभटी' का. ११. 'वृत्तिसंश्रितैः प्रयोगैरभिहिता' क-ख. १२. 'भवेत्' क ख. १३. 'बहुनृत्तगीतवाद्या' का. १४. 'प्राया' क-ख. १५. '°भिनया यथा' क-ख. १६. 'मेलकपलपिञ्जरः' ख. १७. 'संश्रिता' ख. १८. 'कोसलाः' का. १९. 'एव मोशलः' क-ख. २०. 'द्रविडा' ख. २१. 'वैण्या' क ख. २२. 'वानवासजाः' क ख. २३. 'संश्रितास्तेषु दाक्षिणात्यास्तु' इति का. २४. 'आवर्ताः' का. २५. 'सार्बुदेशकाः' का.

दाशार्णास्त्रैपुराश्चैव तथा वैदर्तिकावताः ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥ ३७ ॥
सात्त्वती कैशिकी चैव वृत्तिमेषा समाश्रिता ।
भवेत्प्रयोगो नान्यत्र स च कार्यः प्रयोक्तृभिः ॥ ३८ ॥
अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवोड्रमागधाः ।
पौण्ड्रा नैपालिकाश्चैव अन्तर्गिरिर्बहिर्दुराः ॥ ३९ ॥
तथा प्लवङ्गमाहेन्द्रमलदा(या?)मलवर्तकाः ।
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा ॥ ४० ॥
प्राग्ज्योतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः ।
प्रांशुप्रवृत्तयश्चैव युज्यन्ती चौड्रमागधी ॥ ४१ ॥
अन्येऽपि देशाः प्राच्या ये पुराणे सम्प्रकीर्तिताः ।
तेषु प्रयुज्यते ह्येषा प्रवृत्तिस्त्वौड्रमागधी ॥ ४२ ॥
पाञ्चालमध्यमायां तु सात्त्वत्यारभटी स्मृता ।
प्रयोगस्त्वल्पगीतार्थ आविद्धगतिविभ्रमः ॥ ४३ ॥
पाञ्चालाः शौरसेनाश्च काश्मीरा हास्तिनापुराः ।
वाहीकाः शाकलाश्चैव मद्रकौशीनरास्तथा ॥ ४४ ॥
हिमवत्संश्रिता ये च गङ्गायाश्चोत्तरां दिशम् ।
ये श्रिता वै जनपदास्तेषु पाञ्चालमध्यमाः ॥ ४५ ॥
द्विधा क्रिया भवत्यासां रङ्गपीठपरिक्रमे ।

१. 'मार्तिका मता' क, 'मार्तिका मुता.' ख. २. 'समाश्रित' क-ख. ३. 'भवेष' क-ख. ४. 'सर्वैः' क-ख. ५. 'पौण्ड्रनैपालिका.' क-ख. 'पौण्ड्रा नैपालकाश्चैव' का. ६. 'बहिर्गिरा' क-ख. ७. 'तन वङ्गसमा ह्येया मलचा मलयवर्शका.' क-ख. ८. 'मार्गवस्तथा' का. ९. 'प्रापोतिषा' क-ख. १०. क-ख-पुस्तकयोस्तु—'प्रामाः प्राकृतयाश्चैव युञ्जन्ति ह्योढ्रमागधीम्' (!). ११. 'एभ्यो ये' क-ख. १२. 'चौड्र°' का. १३. 'पद्यमिदं' का-पुस्तकेऽत्र नास्ति किंतु श्लोकद्वयोत्तरं वर्तते । तत्र पाठश्च—'पाञ्चालमध्यमाया तु सात्त्वत्यारभटीश्रिता.' एवं वर्तते. १४. 'सौरसेनाश्च' का. १५. 'वाहिका' शस्यकाश्चैव' का. १६. '°कौशीनरास्तथा' क-ख. १७. 'तु' का.

प्रदक्षिणप्रदेशा[1] च तथा चाप्यप्रदक्षिणा[2] ॥ ४६ ॥
आवन्ती दाक्षिणात्या च प्रदक्षिणपरिक्रमे ।
अपसव्यप्रदेशास्तु[3] पाञ्चाली चौड्रमागधी ॥ ४७ ॥
आवन्त्यां दाक्षिणात्यायां योज्यं[4] द्वारमथोत्तरम् ।
पाञ्चाल्यामौड्रमागध्यां योज्यं[5] द्वारं तु दक्षिणम् ॥ ४८ ॥
एकमूलाः पुनश्चैताः प्रयोक्तव्याः प्रयोक्तृभिः ।
वर्यं[6] च देशं कालौ चाप्यर्थयुक्तिमवेक्ष्य[7] च ॥ ४९ ॥
येषु[8] देशेषु या पूर्वं प्रवृत्तिः परिकीर्तिता ।
तद्वृत्तिकानि रूपाणि तेषु तज्ज्ञः प्रयोजयेत् ॥ ५० ॥
[ [9]एकीभूताः पुनस्त्वेता गानकादौ भवन्ति हि ।
अवेक्ष्य वृत्तिबाहुल्यं तत्तत्कर्माचरेत्सदा ॥ ५१ ॥
सार्थे बाहुल्यमेकस्य शेषाणामथ बुद्धिमान् ।
येषामन्यस्य बाहुल्यं प्रवृत्तिं पूरयेत्तदा ॥ ५२ ॥ ]
प्रयोगो द्विविधश्चैव[10] विज्ञेयो नाटकाश्रयः[11] ।
सुकुमारस्तथाविद्धो नाट्ययुक्तिसमाश्रयः ॥ ५३ ॥
यस्त्वाविद्धाङ्गहारं[12] तु[13]च्छेद्यभेद्याहवात्मकम् ।
मायेन्द्र[14]जालबहुलं पुंसो[15] नेपथ्यसंयुतम् ॥ ५४ ॥
पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
सात्त्वत्यारभटीप्रायं नाट्यमाविद्धमेवं[16] तत् ॥ ५५ ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतान्याविद्धसञ्ज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥ ५६ ॥

---

१. '°प्रवेशाश्च' क. ख. २. 'प्रदक्षिणा.' क-ख. ३. '°प्रवेशा तु' क-ख. ४-५. 'पार्श्वद्वारं' क-ख. ६. 'पार्श्वं देशकालौ च' क-ख. ७. 'अपेक्ष्य च' क-ख. ८. 'ये देशेषु च या कार्या' क-ख. ९. श्लोकद्वयमेतत् क-ख. पुस्तकयोर्नास्ति. १०. 'विविधश्चैव' क-ख. ११. 'नाट्यकाश्रय' का. १२. 'तत्र' क-ख. १३. 'तु' क-ख. १४. 'महेन्द्र°' क-ख. १५. 'पुस्त' (?) क-ख. १६. '°आविद्धसंज्ञितम्' का.

एषां प्रयोगः कर्तव्यो दैत्यदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः ॥ ५७ ॥
नाटकं सप्रकरणं भाणो वीथ्यङ्कनाटिके ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि च ॥ ५८ ॥
[ यतोमुखं भवेद्भाण्डं द्वारनै(ने ?)पथ्यकस्य तु ।
सा मन्तव्या तु दिक् पूर्वा नाट्ययोगेषु नित्यशः ॥ ५९ ॥
अथ बाह्यप्रयोगेषु प्रेक्षागृहविवर्जिते ।
विदिक्ष्वपि भवेद्रङ्गः कदाचिद्भर्तुराज्ञया ॥ ६० ॥
पृष्ठे कृत्वास्य कुतपं नाट्यं युङ्क्ते यतोमुखं भरतः ।
सा पूर्वा मन्तव्या प्रयोगकाले तु नाट्यज्ञैः ॥ ६१ ॥
द्वाराणि षट् चैव भवन्ति चास्य रङ्गस्य दिग्भागविनिश्चितानि ।
नाट्यप्रयोगेन(ण) खलु प्रवेशे प्राच्यां प्रतीच्यां च दिशि प्रवेशः ॥६२॥
विधानमुत्क्रम्य यथात्र रङ्गे लीना (?) प्रमाणानि दिशः प्रयोगम् ।
द्वारं तु यस्मात् स मृदङ्गभाण्डं प्राचीदिशं ता मनसाध्यवस्येत् ॥६३॥
वयोनुरूपः प्रथमस्तु वेषो वेषानुरूपश्च गतिप्रचारः ।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः ॥६४॥]
धर्मी या द्विविधा प्रोक्ता मया पूर्वं द्विजोत्तमाः ।
लौकिकी नाट्यधर्मी च तयोर्वक्ष्यामि लक्षणम् ॥ ६५ ॥
स्वभावभावोपगतं शुद्धं त्वविकृतं तथा ।
लोकवार्ताक्रियोपेतमङ्गलीलाविवर्जितम् ॥ ६६ ॥
स्वभावाभिनयोपेतं नानास्त्रीपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं लोकधर्मी तु सा स्मृता ॥ ६७ ॥
अतिवाक्यक्रियोपेतमतिसत्त्वातिभावितम् ।

१. 'एषः' का. २. 'देवदानवराक्षसैः' क ख. ३. '°एव च' क-ख. ४. 'तु' का. ५. कोष्ठबद्धं श्लोकषट्कं का पुस्तकेधिकम्. ६. धारीशब्दवद्धर्मीशब्दोऽपि स्त्रीलिङ्गो वर्तते, अत एव सर्वत्र स्त्रीलिङ्गत्वेनैव व्यवहारो दृश्यते. ७. 'अतिसत्त्व°' का. ८. 'ष्ठि-भाविकम्' का.

लीलाङ्गहाराभिनयं नाट्यलक्षणलक्षितम् ॥ ६८ ॥
स्वरालंकारसंयुक्तम[1]स्वस्थपुरुषाश्रयम् ।
यदीदृशं भवेन्नाट्यं नाट्यधर्मी तु सा स्मृता ॥ ६९ ॥
[2]लोकप्रसिद्धं द्रव्यं तु यदा नाट्ये प्रयुज्यते ।
[3]मूर्तिमत्साभिलाषं च नाट्यधर्मी तु सा स्मृता ॥ ७० ॥
[4]आसन्नोक्तं च यद्वाक्यं न शृण्वन्ति परस्परम् ।
अनुक्तं श्रूयते [5]वाक्यं नाट्यधर्मी तु सा स्मृता ॥ ७१ ॥
शैलयानविमानानि चर्मवर्मायुधध्वजाः ।
मूर्तिमन्तः प्रयुज्यन्ते नाट्यधर्मी तु सा स्मृता ॥ ७२ ॥
ललितैरङ्गविन्यासैस्तथोत्क्षिप्तपदक्रमैः ।
नृत्यते गम्यते य[6]च्च नाट्यधर्मी तु सा स्मृता ॥ ७३ ॥
योऽयं स्वभावो लोकस्य सुखदुःखक्रियात्मकः ।
[7]सोऽङ्गाभिनयसंयुक्तो नाट्यधर्मी [8]प्रकीर्तिता ॥ ७४ ॥
यश्च कक्षाविभागोऽत्र नानाविधिसमाश्रितः ।
रङ्गपीठगतः प्रोक्तो नाट्यधर्मी तु सा भवेत् ॥ ७५ ॥
नाट्यधर्मीप्रवृत्तं हि सदा नाट्यं प्रयोजयेत् ।
न ह्यङ्गाभिनयात्[9]किंचिदृते नाट्यं प्रवर्तते ॥ ७६ ॥
सर्वस्य सहजो भावः सर्वो [10]ह्यभिनयोत्थितः ।
अङ्गालंकार[11]चेष्टा तु नाट्यधर्मी प्रकीर्तिता ॥ ७७ ॥
एवं [12]कक्षाविभागस्तु धर्मी[13]युक्तय एव च ।
विज्ञेया नाट्यतत्त्वज्ञैः प्रयोक्तव्याश्च [14]यत्नतः ॥ ७८ ॥

---

१. '°स्वस्थपुरुषाश्रयं' क-ख. २ 'लोके यदीभियोज्य तु मद्यमन्नोपयुज्यते ।' क-ख. ३. 'मूर्तिमत्' क-ख. ४. 'अन्नोक्तं चैव' क-ख. ५. 'यच्च' क-ख. ६. 'चापि' क-ख. ७. 'सोऽङ्गाभिनय°' क-ख. ८. 'तु सा स्मृता' क-ख. ९ 'कश्चिदन्ते राग प्रवर्तते' क-ख. १०. 'ह्यभिनयार्थज' का. ११ '°चेष्टाभि' का. १२. 'कक्ष्या°' का. १३. 'धर्मयुक्ता प्रकीर्तिता' का. १४. 'तत्त्वत' का.

व्यञ्जनानि यथा—क ख ग घ ङ च छ ज झ ञ ट ठ ड ढ ण त थ द ध न प फ ब भ म य र ल व श ष स ह् इति व्यञ्जनवर्गः ॥

एते घोषाघोषाः कण्ठ्योष्ठ (ष्ठ्य) दन्त (न्त्य) जिव्हानुनासिक्यः ।
ऊष्माणस्तालव्य (व्या) विसर्जनीयाश्च बोद्धव्याः ॥ १० ॥
ग घ ङ ज झ ञ ड ढ ण द ध न ब भ म तथैव य र ल व हा घोषाः ।
क ख च छ ट ठ त थ प फ इति वर्गेष्वघोषाः ॥ ११ ॥
कण्ठ (ण्ठ्या)स्तालुस्थाना मतास्तु च छ ज झ ञाः ।
ट ठ ड ढ णा मूर्धन्यास्त थ द ध नाश्चैव दन्तस्थाः ॥ १२ ॥
प फ ब भ मा–स्त्वोष्ठ्याः स्युर्दन्त्या ललसा अहौ च कण्ठस्थौ ।
तालव्या इयशा स्युर्ऋरषा मूर्धस्थिता ज्ञेयाः ॥ १३ ॥
ओ औ कण्ठोष्ठस्थानौ ए ऐकारौ च कण्ठतालव्यौ ।
कण्ठ्यो विसर्जनीयो जिह्वामूलोद्भवः कपयोः ॥ १४ ॥
पफयोरोष्ठं स्थानं भद्रेन्द्रकारस्वराविद्धः ।
स्पृष्टाः काद्या मान्ताः श ष स हकारास्तथा विवृताः ॥ १५ ॥
अन्तस्थाः संवृत्ताः ङ ञ ण न मा नासिकोद्भवा ज्ञेयाः ।
ऊष्माणश्च श ष स हा य र ल व वर्णास्तथैव चान्तस्थाः ॥१६
जिह्वामूलीयः कः प उपध्मानीयसंज्ञया ज्ञेयः ।
क च ट त पा [ः] स्युः ख छ ठ थ फा [ ] स्यु. सदा कण्ठ्याः ॥१७
कण्ठ्येन रसान् विद्यात् घ झ ढ ध मान् पाठ्ययोगे तु ।
वेद्यो विसर्जनीयो विद्यास्थानस्थितो वर्णः ॥ १८ ॥
एते व्यञ्जनवर्णाः समासतः सञ्ज्ञया मया कथिताः ।
शब्दविषयप्रयोगे स्वरांस्तु भूयः प्रवक्ष्यामि ॥ १९ ॥
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः ।
पूर्वो ह्रस्वस्तेषा परश्च दीर्घो विधातव्य. ॥ २० ॥
एभिर्व्यञ्जनयुक्तैर्नामाख्यातोपसर्गनिपातै. ।
तद्धितसधिविभक्तिभिरधिष्ठित. शब्द इत्युक्तः ॥ २१ ॥

पूर्वाचार्यैरुक्तं शब्दानां लक्षणं तु विस्तरशः ।
पुनरेव संहितार्थं लक्षणतः संप्रवक्ष्यामि ॥ २२ ॥
तत्राहुः सप्तविधं पदकारकसंयुतं प्रथितसाध्यम् ।
निर्देशसंप्रदानापादानप्रभृतिसंज्ञाभिः ॥ २३ ॥
संप्रत्यतीतकालप्रयोजितः क्रियादिसंयोगः प्रथितः ।
साध्ये वचनानां यतियुक्तं सदृशसंयोजनविभक्तम् ॥ २४ ॥
स्वाद्यत्यधिकारगुणैरर्थविशेषैर्विभूषितन्यासा ।
प्रातिपदिकार्थलिङ्गयुक्तं पञ्चविधमिदं ज्ञेयम् ॥ २५ ॥
आख्यातं पाठ्यकृतं ज्ञेयं नानार्थाश्रयविशेषम् ।
प्रातिपदिकार्थयुक्तान् धात्वर्थानुपस्त्रजन्ति ये स्वार्थैः ।
उपसर्गास्तुपदिष्टास्तस्मात् संस्कारशास्त्रेऽस्मिन् ॥ २६ ॥
प्रातिपदिकार्थयोगाद्धातुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मान्निपतन्ति पदे तस्मात् प्रोक्ता निपातास्तु ॥ २७ ॥
प्रत्ययविभागजनिता प्रकर्षसंयोगसत्त्ववचनैश्च ।
यस्मात् पूरयतेऽर्थान् प्रत्यय उक्तस्ततस्तस्मात् ॥ २८ ॥
लोपप्रकृतिप्रत्ययविभागसंयोगतत्त्ववचनैश्च ।
त(य)स्मात् पूरयतेऽर्थांस्ततो यतस्तद्धितस्तस्मात् ॥ २९ ॥
एकस्य बहूनां वा धातोर्लिङ्गस्या(स्य) पदानां वा ।
विभजन्त्यर्थं यस्मात् विभक्तयस्तेन ताः प्रोक्ताः ॥ ३० ॥
वर्णक्रमसंबन्धः पदैकयोगोऽन्यवर्णयोगाच्च ।
संधीयते च यस्मात्तस्मात् संधिः समुद्दिष्टः ॥ ३१ ॥
लुप्तविभक्तिर्नाम्ना एकार्थो [:] संहरन्ति संक्षेपात् ।
तत्पुरुषादिकसंज्ञैर्निर्दिष्टः षड्विधः सोऽपि ॥ ३२ ॥
एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः ।
पदबन्धाः कर्तव्या वृत्तनिबन्धास्तु चूर्णा वा ॥ ३३ ॥
विभजैक्यं पदं ज्ञेयं निबन्धं चूर्णमेव च ।

तत्र चूर्णपदस्येह यहिबोधत लक्षणम् ॥ ३४ ॥
अनिबद्धं पदच्छन्दं तथा चानियताक्षरम् ।
अर्थापेक्षाक्षरयुतं ज्ञेयं चूर्णपदं बुधैः ॥ ३५ ॥
निबद्धाक्षरसंयुक्तं पदच्छेदसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियताक्षरम् ॥ ३६ ॥
एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ।
चतुर्भिस्तु भवेद्वृत्तं छन्दोवृत्ताभिधानवत् ॥ ३७ ॥
षड्विंशतिः स्मृतानीह पादे छन्दांसि संख्यया ।
समं चार्धसमं चैव तथा विषममेव च ॥ ३८ ॥
छन्दोयुक्तं समासेन निबद्धं वृत्तमिष्यते ।
नानावृत्तविनिष्पन्ना शब्दस्यैषा तनुः स्मृता ॥ ३९ ॥
छन्दोहीनो न शब्दोऽस्ति न छन्दः शब्दवर्जितः ।
तस्मात्तूभयसंयुक्ते नाट्यस्योद्द्योतके स्मृते ॥ ४० ॥
एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ४१ ॥
सुप्रतिष्ठा भवेत् पञ्चगायत्री षड् भवेदिह ।
सप्ताक्षरा भवेदुष्णिग् अष्टौ चानुष्टुबुच्यते ॥ ४२ ॥
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
एकादशाक्षरा त्रिष्टुप् जगती द्वादशाक्षरा ॥ ४३ ॥
त्रयोदशातिजगती शक्वरी च चतुर्दश ।
अतिशक्वरी पञ्चदश षोडशाष्टिः प्रकीर्तिता ॥ ४४ ॥
अत्यष्टिः स्यात् सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशतिधृतिः कृतिर्विंशतिरेव च ॥ ४५ ॥
प्रकृतिश्चैकविंशत्या द्वाविंशत्याकृतिस्तथा ।
विकृतिश्च त्रयोविंशा चतुर्विंशा च संकृतिः ॥ ४६ ॥
पञ्चविंशत्यतिकृतिः षड्विंशत्युत्कृतिर्भवेत् ।

अतोऽधिकाक्षरं यत्तु मात्रावृत्तं तदिष्यते ॥ ४७ ॥
संपद्विरामपादश्च दैवतस्थानमक्षरम् ।
वर्णस्वरोऽधिकं वृत्तमिति छन्दोगतो विधिः ॥ ४८ ॥
नैवातिरिक्तं हीनं वा यत्र संपद्यते क्रमः ।
विधानाच्छन्दसामेषां संपदित्यभिसंज्ञिता ॥ ४९ ॥
यत्रार्थस्य समाप्तिः स्यात् स विराम इति स्मृतः ।
पादश्च पद्यते धातोश्चतुर्भाग इति स्मृतः ॥ ५० ॥
अग्न्यादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ।
शरीराश्रयसंभूतं जिह्वाश्रयमथापि च ॥ ५१ ॥
शारीरमग्रसंभूतं छन्दो गायत्रिसंज्ञितम् ।
कण्ठे (?) मध्यंदिनं प्रोक्तं त्रैष्टुभं परिकीर्त्यते ॥ ५२ ॥
तृतीयसवनं चापि शीर्षे च जागतं हि यत् ।
ह्रस्वदीर्घप्लुतैश्चैव त्रिविधं चाक्षरं स्मृतम् ॥ ५३ ॥
श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारणश्चैव मन्द्रश्च मध्यमस्त्रिविधः स्वरः ॥ ५४ ॥
ध्रुवाविधाने चैवास्य संप्रवक्ष्यामि लक्षणम् ।
विधिकालकृतश्चैव तथैवार्थकृतो भवेत् ॥ ५५ ॥
वृत्तमर्धवृत्तं चैव विषमं सममेव च ।
छन्दसि यस्य पादः स्याद्धीनो ह्यधिक एव वा ॥ ५६ ॥
वृत्तं निवृदिति प्रोक्तं गुरुं (रु?) केचिद् द्विजोत्तमाः ।
अक्षराभ्यां सदा द्वाभ्यामधिकं हीनमेव वा ॥ ५७ ॥
तच्छन्दो नामतो ज्ञेयं स्वराडिति विराडपि ।
छन्दसां तु भवेदेषां भेदोऽनेकविधः पृथक् ॥ ५८ ॥
असंख्यपरिमाणानि वृत्तान्याहुरथो बुधाः ।
गायत्रीप्रभृतिस्त्वेषां प्रमाणं संविधीयते ॥ ५९ ॥
प्रयोगजानि सर्वाणि प्रायशानि भवन्ति हि ।
वृत्तानां हि चतुःषष्टिर्गायत्री परिकीर्तिता ॥ ६० ॥

शतं विंशतिरष्टौ च वृत्तान्युष्णिगथोच्यते।
षट्पञ्चाशच्छतं चैव वृत्तानामप्यनुष्टुभः॥ ६१॥
शतानि पञ्च वृत्तानां बृहत्यां द्वादशैव च।
पङ्क्तेः सहस्रं वृत्तानां चतुर्विंशतिरेव च॥ ६२॥
त्रिष्टुभोत्रि(भस्त्रि)सहस्रे च चत्वारिंशत्तथाष्ट च।
सहस्राण्यपि चत्वारि नवती च षडुत्तरा॥ ६३॥
जगत्याः समपादाना वृत्तानामिह सर्वशः।
शतमष्टौ सहस्राणि द्व्यधिका नवतिः पुनः॥ ६४॥
जगत्यामतिपूर्वायां वृत्तानां परिमाणतः।
शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश॥ ६५॥
वृत्तानि चैव चत्वारि शक्वर्याः परिसंख्यया।
द्वात्रिंशच्च सहस्राणि सप्त चैव शतानि च॥ ६६॥
अष्टौ षष्टिश्च वृत्तानि ख्याश्रयन्त्यतिशक्वरीम्।
पञ्चषष्टिसहस्राणि सहस्रार्धं च संख्यया॥ ६७॥
षट्त्रिंशच्चैव वृत्तानामष्टौ निगदितानि च।
एकत्रिंशत्सहस्राणि वृत्ताना च द्विसप्ततिः॥ ६८॥
तथा शतसहस्रं च छन्दस्यत्यष्टिसंज्ञिते।
धृत्यामपि च पिण्डेन वृत्तमाकलितं मया॥ ६९॥
तथा शतसहस्रे द्वे शतमेकं तथैव च।
द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः॥ ७०॥
चत्वारि चैव वृत्तानि शतसख्यानि यानि तु।
अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च॥ ७१॥
तथा शतसहस्राणि पञ्चवृत्तशतद्वयम्।
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि च॥ ७२॥
कृतौ शतसहस्राणि दश प्रोक्तानि संख्यया।
चत्वारिंशत्तथा चाष्टौ सहस्राणि शतानि च॥ ७३॥
पञ्चपट् सप्ततिश्चैव वृत्तानां परिमाणतः।

तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ॥ ७४ ॥
सप्त वै गदितं ह्यत्र नवतिश्चैव संख्यया ।
सहस्राणि शतं चैव द्वौ पञ्चाशत्तदन्तरम् ॥ ७५ ॥
वृत्तानि परिमाणेन वृत्तज्ञैर्गदितानि तु ।
चत्वारिंशत्तथैकं च लक्षाणमथ संख्यया ॥ ७६ ॥
विज्ञेयाष्टसहस्राणां नवतिश्च षडुत्तरा ।
शतत्रयं समाख्यातं संकृत्या परिमाणतः ॥ ७७ ॥
कोटित्रयं चाभिकृत्यां पञ्चविंशद्भिरन्वितः ।
पञ्चाशद्भिः सहस्रैश्च चतुर्भिरधिकैस्तथा ॥ ७८ ॥
चतुष्टयं शतानां च द्वात्रिंशद्भिः समन्वितः ।
षट्कोटयस्तथोत्कृत्यां लक्षाणमेकसप्ततिः ॥ ७९ ॥
चतुःषष्टिशतान्यष्टौ सहस्राण्यष्ट चैव च ।
सर्वेषां छन्दसां पिण्डं कोटयोऽत्र त्रयोदश ॥ ८० ॥
शतानि सप्त सप्तैव सहस्राणि दशैव च ।
तथा शतसहस्राणां द्विचत्वारिंशदत्र हि ॥ ८१ ॥
षड्विंशतिश्च वृत्तानामित्थं चान्यत् समुच्यते ।
सर्वेषां छन्दसामेवं वृत्तांशं कथितं मया ॥ ८२ ॥
एतेषां तु पुनर्ज्ञेयं त्रिकैर्वृत्तप्रवर्तनम् ।
एकं वा विंशतिर्वापि सहस्रं कोटिमेव च ॥ ८३ ॥
सर्वेषां छन्दसामेषां वृत्तानां वा द्विजोत्तमाः ।
ज्ञेयाश्चाष्टौ त्रिकास्तत्र स्वसंज्ञाभिः पृथक् पृथक् ॥ ८४ ॥
त्रीण्यक्षराणि विज्ञेयस्त्रिकोशः परिकल्पितः ।
गुरुलघ्वक्षरकृतः सर्ववृत्तेषु नित्यशः ॥ ८५ ॥
गुरुपूर्वो भकारः स्यान्मकारस्तु गुरुत्रिकम् ।
जकारो गुरुमध्यस्थः सकारोऽन्त्यगुरुस्तथा ॥ ८६ ॥
लघुमध्यस्थितो रेफस्तकारोऽन्त्यलघुः परः ।
लघुपूर्वो यकारस्तु नकारस्तु लघुत्रयम् ॥ ८७ ॥

एते ह्यष्टौ त्रिकाः प्राज्ञैर्विज्ञेया ब्रह्मसंभवाः।
लाघवार्थं पुनरमी छन्दोमानमवेक्ष्य च ॥ ८८ ॥
अक्षराः सस्वराश्चैव प्रोच्यन्ते वृत्तलक्षणे।
गुर्वेकं गिति विज्ञेयं तथा लघु मि(लि?)ति स्मृतम् ॥ ८९ ॥
नियतः पदविच्छेदो यतिरित्यभिधीयते।
गुरुर्दीर्घं प्लुतश्चैव संयोगपरमेव च ॥ ९० ॥
सानुस्वारविसर्गश्च तथान्यच्च लघु क्वचित्।
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रयः ॥ ९१ ॥
दिव्यो दिव्यतरश्चैव दिव्यमानुष एव च।
गायत्र्युष्णिगनुष्टुब् च बृहती पङ्क्तिरेव च ॥ ९२ ॥
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः।
तथातिजगती चैव शक्करी चातिशक्करी ॥ ९३ ॥
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणा(?)।
कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ॥ ९४ ॥
संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषा।
गायत्री द्वौ त्रिकौ ज्ञेयौ उष्णिक् चैकाधिकाक्षरा ॥ ९५ ॥
अनुष्टुप् द्व्यधिका चैव बृहती च त्रिकास्त्रयः।
एकाक्षराधिका पङ्क्तिस्त्रिष्टुप् च द्व्यधिकाक्षरा ॥ ९६ ॥
चतुस्त्रिका तु जगती सैकातिजगती पुनः।
शक्करी द्व्यधिका चैव त्रिकाः पञ्चातिशक्करी ॥ ९७ ॥
एकाधिकाक्षराष्टिश्च द्व्यधिकात्यष्टिरुच्यते।
षट्त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा ॥ ९८ ॥
कृतिश्च द्व्यधिका प्रोक्ता प्रकृतिः सप्त वै त्रिकाः।
आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ॥ ९९ ॥
अष्ट त्रिकाः संकृतिः स्यात् सैका चाभिकृतिः पुनः।
उत्कृतिर्द्व्यधिका चैव विज्ञेया गणसारतः ॥ १०० ॥
अत ऊर्ध्वं तु पादानां शब्दावृत्ताश्रिता गणाः।

एवं तु छन्दसामेषां प्रस्तारविधिसंश्रयम् ॥ १०१ ॥
लक्षणं संप्रवक्ष्यामि नष्टोद्दिष्टं तथैव च ।
प्रस्ताराक्षरनिर्दिष्टसमावुक्तस्तथैव च ॥ १०२ ॥
द्विकौ ग्लाविति वर्णोक्तौ न्द्रोचेत्यपि (?) मातृका ।
गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् ॥ १०३ ॥
अग्रतस्तु समो देया (यो?) गुरवः पृष्ठतस्तथा ।
प्रथमं गुरुभिर्वर्णैर्लघुभिस्त्ववसानजम् ॥ १०४ ॥
वृत्तं तु सर्वछन्दःसु प्रस्तारविधिरेव तु ।
गुर्वधस्ताल्लघु न्यस्य तथा द्विद्विय(र्ये)थोदितम् ॥ १०५ ॥
न्यसेत् प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासख्याविनिर्दिष्टो गणैर्मात्राविकल्पितः ॥ १०६ ॥
शिष्टो ग्लाविति विज्ञेयः पृथक्कक्ष्याविभागतः ।
मात्रागणो गुरुश्चैव लघुनीलविलक्षितैः (?) ॥ १०७ ॥
आर्याणां च सकृन्मात्राप्रस्तारे परिकल्पितः ।
प्राकृतः प्रकृतीनां तु पञ्चमात्रो गणः स्मृतः ॥ १०८ ॥
[1]यं पुरस्कृत्य षण्मात्राः स्युस्तथैव च ऽयक्षराः ।
उक्ताद्यास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥ १०९ ॥
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः ।
अन्त्याद्विगुणिताद्रूपाद्विद्विरेवं[2] गुरोर्भवेत् ॥ ११० ॥
द्विगुणं च लघोः कृत्वा संख्यां पिण्डेन योजयेत् ।
आद्यं सर्वगुरु ज्ञेयं[3] वृत्तं तु समसंस्थितम्[4] ॥ १११ ॥
[5]कोशे तु सर्वलघ्वन्त्य[6]मिश्रैः शेषाणि सर्वतः ।

---

१. 'वैतालीयं पुरस्कृत्य षण्मात्रास्तथैव च ।
ऽयक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विता- ॥' इति क-पुस्तके.

२. 'द्विद्विरेकं गुरोर्हरेत्' क-ख. ३. 'ज्ञेयं' इति त्रुटितं क-ख-पुस्तकयोः. ४. 'समसंस्थितम्' क-ख. ५. 'कोशे' क-ख. ६. 'सर्वलघ्वन्तं' क-ख.

एते ह्यष्टौ त्रिकाः प्राज्ञैर्विज्ञेया ब्रह्मसंभवाः ।
लाघवार्थं पुनरमी छन्दोमानमवेक्ष्य च ॥ ८८ ॥
अक्षराः सस्वराश्चैव प्रोच्यन्ते वृत्तलक्षणे ।
गुर्वेकं गिति विज्ञेयं तथा लघु मि(लि?)ति स्मृतम् ॥ ८९ ॥
नियतः पदविच्छेदो यतिरित्यभिधीयते ।
गुरुर्दीर्घं प्लुतश्चैव संयोगपरमेव च ॥ ९० ॥
सानुस्वारविसर्गश्च तथान्यच्च लघु क्वचित् ।
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणास्त्रयः ॥ ९१ ॥
दिव्यो दिव्यतरश्चैव दिव्यमानुष एव च ।
गायत्र्युष्णिगनुष्टुब् च बृहती पङ्क्तिरेव च ॥ ९२ ॥
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ।
तथातिजगती चैव शक्करी चातिशक्करी ॥ ९३ ॥
अष्टिरत्यष्टिरपि च धृतिश्चातिधृतिर्गणा(?) ।
कृतिश्च प्रकृतिश्चैव व्याकृतिर्विकृतिस्तथा ॥ ९४ ॥
संकृत्यभिकृती चैव उत्कृतिर्दिव्यमानुषा ।
गायत्री द्वौ त्रिकौ ज्ञेयौ उष्णिक् चैकाधिकाक्षरा ॥ ९५ ॥
अनुष्टुप् द्व्यधिका चैव बृहती च त्रिकास्त्रयः ।
एकाक्षराधिका पङ्क्तिस्त्रिष्टुप् च द्व्यधिकाक्षरा ॥ ९६ ॥
चतुस्त्रिका तु जगती सैकातिजगती पुनः ।
शक्करी द्व्यधिका चैव त्रिकाः पञ्चातिशक्करी ॥ ९७ ॥
एकाधिकाक्षराष्टिश्च द्व्यधिकात्यष्टिरुच्यते ।
षट्त्रिकास्तु धृतिः प्रोक्ता सैका चातिधृतिस्तथा ॥ ९८ ॥
कृतिश्च द्व्यधिका प्रोक्ता प्रकृतिः सप्त वै त्रिकाः ।
आकृतिस्त्वधिकैकेन द्व्यधिका विकृतिस्तथा ॥ ९९ ॥
अष्ट त्रिकाः संकृतिः स्यात् सैका चाभिकृतिः पुनः ।
उत्कृतिर्द्व्यधिका चैव विज्ञेया गणसारतः ॥ १०० ॥
अत ऊर्ध्वं तु पादानां मात्रावृत्ताश्रिता गणाः ।

एवं तु छन्दसामेषां प्रस्तारविधिसंश्रयम् ॥ १०१ ॥
लक्षणं संप्रवक्ष्यामि नष्टोद्दिष्टं तथैव च ।
प्रस्ताराक्षरनिर्दिष्टसमावुक्तस्तथैव च ॥ १०२ ॥
द्विकौ ग्लाविति वर्णोक्तौ न्द्रोचेत्यपि (?) मातृका ।
गुरोरधस्तादाद्यस्य प्रस्तारे लघु विन्यसेत् ॥ १०३ ॥
अग्रतस्तु समो देया (यो?) गुरवः पृष्ठतस्तथा ।
प्रथमं गुरुभिर्वर्णैर्लघुभिस्त्ववसानजम् ॥ १०४ ॥
वृत्तं तु सर्वछन्दःसु प्रस्तारविधिरेव तु ।
गुर्वधस्ताल्लघु न्यस्य तथा द्विद्विय(र्य)थोदितम् ॥ १०५ ॥
न्यसेत् प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासंख्याविनिर्दिष्टो गणैर्मात्राविकल्पितः ॥ १०६ ॥
शिष्टो ग्लाविति विज्ञेयः पृथक्कक्ष्याविभागतः ।
मात्रागणो गुरुश्चैव लघुनीलविलक्षितैः (?) ॥ १०७ ॥
आर्याणां च सकृन्मात्राप्रस्तारे परिकल्पितः ।
प्राकृतः प्रकृतीनां तु पञ्चमात्रो गणः स्मृतः ॥ १०८ ॥
यं[1] पुरस्कृत्य षण्मात्राः स्युस्तथैव च त्र्यक्षराः ।
उक्ताद्यास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥ १०९ ॥
मात्रागणविभागस्तु गुरुलघ्वक्षराश्रयः ।
अन्त्याद्द्विगुणितादूर्ध्वाद्द्विद्विरेवं गुरोर्भवेत् ॥ ११० ॥
द्विगुणं च लघोः कृत्वा संख्यां पिण्डेन योजयेत् ।
आद्यं सर्वगुरु ज्ञेयं वृत्तं तु समसंश्रितम् ॥ १११ ॥
कोशे तु सर्वलघ्वन्त्यमिश्रैः शेषाणि सर्वतः ।

---

१. 'वैतालीयं पुरस्कृत्य षण्मात्रायास्तथैव च ।
त्र्यक्षरास्तु त्रिका ज्ञेया लघुगुर्वक्षरान्विताः ॥' इति क-पुस्तके.

२. 'द्विद्विरेकं गुरोर्हरेत्' क-ख. ३. 'ज्ञेयं' इति त्रुटितं क-ख-पुस्तकयोः. ४. 'समसंश्रितम्' क-ख. ५. 'कोशे' क-ख. ६. 'सर्वलघ्वन्तं' क-ख.

नैधनादक्षमेकैकं प्रातिलोम्यक्रियात्मकम् ॥ ११२ ॥
सर्वेषां छन्दसामेव लघ्वक्षरविनिश्चितम् ।
जानीत सर्ववृत्तानां संख्यां संक्षेपतस्तथा ॥ ११३ ॥
एकाधिकां तथा संख्यां सदृशां विनिवेशयेत् ।
यावच्चरणं तु पूर्वेण पूरयेदुत्तरं गणम् ॥ ११४ ॥
एवं कृत्वा तु सर्वेषां परेषां पूर्वपूरणम् ।
जानीत समवृत्तानां संख्यां संक्षेपतस्तथा ॥ ११५ ॥
वृत्तानां तु समानानां संख्यां संयोज्य तावतीम् ।
राश्यूनामर्धविषमां समानां दश निर्दिशेत् ॥ ११६ ॥
तदर्धविषमाणां द्विः संख्यां कृत्वा तु तावतीम् ।
राश्यूनामत्र जानीत विषमाणां समासतः ॥ ११७ ॥
वृत्तार्धपरिमाणं तु च्छित्त्वार्धेन यथाक्रमम् ।
न्यसेत्तथा सैकवृत्ते··········कं गुरु वाप्यथ ॥ ११८ ॥
एवं विन्यस्य वृत्तानां नष्टोद्दिष्टं विभागतः ।
गुरुलघ्वक्षराणीह सर्वं छन्दःसु दर्शयेत् ॥ ११९ ॥

---

१. का पुस्तकेऽनैतत्सार्धश्लोकस्थाने—

'वृत्तानां तु समानानां सख्या सयोज्य तावतीम् ।
राश्यूनामर्धविषमं समासादिति निर्दिशेत् ॥'

एतत्पद्यं वर्तते. २. का-पुस्तकेऽत्र—

'एकार्धा च तथा सख्या छन्दसो विनिवेश्य च ।
यावत् पूर्वं तु पूर्वेण पूरयेदुत्तरस्तथा ॥'

३. का-पुस्तकेऽत्र—

'एवं कुर्यात्तु सर्वेषां पूर्वं पूर्वस्य पूरणम् ।
क्रमान्निधनमेकैक प्रतिलोमं विसर्जयेत् ॥
सर्वेषा छन्दसां वक्ष्ये लघ्वक्षरविनिश्चयम् ।'

इत्यधिकः सार्धश्लोक. ४. इतोऽग्रे वर्तमाना श्लोकद्वयी का-पुस्तके नास्ति । ५. 'वृत्ताङ्ग-परिमाणं' का. ६. 'गुरु न्यसेत्' का. ७. 'न्यसेल्लघु तथा सेकं छित्त्वार्धेन गुरुं न्यसेत् ।' का. ८. 'नष्टोद्दिष्टविभागत.' का. ९. 'सर्वछन्दःसु' का.

तथैव[1] युद्धसंफेटौ प्रकृत्यां संप्रयोजितौ ।
करुणे शक्करी चैव तथा चातिधृतिः स्मृता ॥ ११४ ॥
यद्वीरे कीर्त्यते[2] छन्दस्तद्रौद्रे[3] संप्रयोजयेत् ।
शेषाणामर्थयोगेन छन्दः कार्यं तथा रसः ॥ ११५ ॥
त्रिविधं ह्यक्षरं काव्ये[5] विज्ञेयं नाटकाश्रयम् ।
ह्रस्वं दीर्घं प्लुतं चैव रसभावविभावकम् ॥ ११६ ॥
एकमात्रं भवेद्ध्रस्वं द्विमात्रं दीर्घमिष्यते ।
प्लुतं चैव त्रिमात्रं स्यादक्षरं वर्णसंश्रयम् ॥ ११७ ॥
स्मृते वासूचिते चैव तथा च परिदेविते ।
पठतां ब्राह्मणानां च प्लुतमक्षरमिष्यते ॥ ११८ ॥
ओंकारस्तु[8] स्मृते कार्यं हुंकारं वाप्यसूचिते ।
परिदेविते[10] च हुंकारमोंकारोऽध्ययने तथा ॥ ११९ ॥
ह्रस्वदीर्घप्लुतानीह यथाभावं यथारसम् ।
काव्ययोगेष्वक्षराणि[11] यथाशोभं निवेशयेत् ॥ १२० ॥
ये बन्धाः पूर्वमुद्दिष्टा विषमार्धसमासमाः ।
उदारमधुरैः[12] शब्दैः कार्यास्ते स्युः रसानुगाः ॥ १२१ ॥
शब्दानुदारमधुरान्प्रमदाभिनेयान्[14]
नाट्याश्रयान्[15] (नु?) कृतिषु प्रयतेत कर्तुम् ।

---

१. तथेत्यादिश्लोकद्वय क पुस्तके न दृश्यते, अथ का-पुस्तके—
'तथैव युद्धसंस्फेटा उत्कृत्यां संप्रकीर्तितौ ।
करुणे शक्करी ज्ञेया तथैवातिधृतिर्भवेत् ॥' इति पाठ .

२. 'कीर्तिनं' का. ३. 'रौद्रेऽपि प्रयोजयेत्' का. ४. 'प्रयोक्तृभि.' का. ५. 'कव्ये' का. ६. 'स्वरयोजनात्' का. ७. 'चाव्ययुते चैव' का. ८. 'अकारस्तु स्मृते कार्ये' का. ९. 'ऊकारश्चाप्यसूचिते' का. १०. 'परिदेविते च हाकार' का. ११. 'कव्ययोगेषु सर्वेषु ह्यक्षराणि कृतो जयेत् ।' का. १२. 'उदारशब्दैर्मधुरै.' का. १३. 'तेऽर्थवशानुगा.' का. १४. 'प्रमदाभिधेया' क ख. १५. 'नाट्याश्रया सुगनि ···प्रयते च' क-ख; 'नाट्याश्रयान् कृतिषु' का.

तैर्भूषिता बहु विभान्ति हि काव्यबन्धाः
पद्माकरा विकसिता इव राजहंसैः ॥ १२२ ॥
[1]चेक्रीडितप्रकृतिभिर्विकृतैश्च शब्दै-
र्युक्ता न भान्ति ललिता भरतप्रयोगाः ।
[2]यज्ञक्रियेव [3]शरवर्मधरैर्घृताक्तै-
र्वेश्याद्विजैरिव कमण्डलुदण्डहस्तैः ॥ १२३ ॥
मृदुललितपदा[4]ढ्यं गूढशब्दार्थहीनं
[5]जनपदसुखबोध्यं युक्तिमन्नृत्ययोज्यम् ।
बहुकृतरसमा[6]र्गं संधिसंधानयुक्तं
[7]भवति जगति योग्यं नाटकं प्रेक्षकाणाम् ॥ १२४ ॥
[8]इति श्रीभारतीये नाट्यशास्त्रेऽलंकारलक्षणो नाम षोडशोऽध्यायः ॥

---

[9]सप्तदशोऽध्यायः ।

एवं तु संस्कृतं पाठ्यं मया प्रोक्तं समासतः ।
[10]प्राकृतस्य तु पाठ्यस्य सप्रवक्ष्यामि लक्षणम् ॥ १ ॥
एतदेव विपर्यस्तं संस्कारगुणवर्जितम् ।
विज्ञेयं प्राकृतं पाठ्यं नानावस्थान्तरात्मकम् ॥ २ ॥
त्रिविधं तच्च विज्ञेयं नाट्ययोगे समासतः ।
समानश[11]ब्दै[12]र्विभ्रष्टं देशी[13]मतमथापि वा ॥ ३ ॥
कमलामलरेणुतरङ्गलोलसलिलादिवाक्यसंपन्नम् ।
प्राकृतचन्धेष्वेवं सस्कृत[14]मपि योगमुपयाति ॥ ४ ॥

---

१. 'चक्रीदितप्रभृतिभि' क-ख. २. 'तु' का. ३. 'कृष्णाजिनाक्षरचर्मधरैर्घृताक्तै-र्विध्याद्विजैरिव कमण्डलुदण्डहस्तैः ।' का. ४. '°पदान्य' का. ५. 'बुधजनसुखभोग्यं युक्तिमद्वृत्तयोग्यम्' का. ६. 'बहुरसकृतमार्गं' का. ७. 'स (?) भवति शुभकाव्यं नाटकप्रेक्षकाणाम् ।' क-ख. ८. 'इति भारतीये नाट्यशास्त्रे भाषाविधानो नाम सप्तदशोऽध्यायः' इति का. ९. 'अथ अष्टादशोऽध्यायप्रारम्भः ।' इति का. १०. 'द्विजोत्तमा-' का. ११. 'प्राकृतमपि' का. १२. 'समानशब्द विभ्रष्ट' का. १३. 'देशीगतमथापि च' का. १४. 'संस्कृतमिव प्रयोगमुपयाति' का.

ये वर्णाः संयुक्ताः स्वरवर्णाः·······स्त्वेनतां चापि ।
गच्छन्ति पदन्यस्तास्ते विभ्रष्टा इति ज्ञेयाः ॥ ५ ॥

यथा—

एँतु आरपराइंज अंकारपरंभयापायणच्छिव ।
सायारमज्झिमाइय कवचभवववसराणि हणाइं ॥ ६ ॥
चचंति कगत दयवा लोवं अत्थंवसि स्सहत्तिसरा ।
खयथभवभाउणहतंतुवेवि अत्थं अ मुंघना ॥ ७ ॥(?)

उधरफुतरसासाहे हाफुल्लवयापणच्छिमोत्तूणवंइदोद्दहपइजाइस्स ।
खयपयभाणहयानेमुहकहापहुसुरिच्छेसु कगतदजवाणविचांवोयंसिठि-
उसरोहोइच्छे ॥ ८–९ ॥ (?)

इति चँ पकारो नित्यं बोद्धव्यः पदप्रदादियोगे तु ।
किलॅशब्दो रेफान्तो भवति तथा षखुत्ति खलु शब्दः ॥ १० ॥
डँ इति भवति टकारो भटॅकुटकुटितराधेपु ।
सँत्वं च भवति शपयोः सॅर्वत्र तथाहि स स आदेशः ॥ ११ ॥

---

१. 'ये वर्णाः संयोगात् स्वरवर्णान्यन्त्यन्यूनता चापि ।' इति क. २. 'एतु–' इत्यारभ्य '–कार्यः प्रयोगेऽस्मिन्' इत्यन्तो ग्रन्थोऽतीवाशुद्धो वर्तते, तथा च द्विन्नस्थले लेखकादिदोषवशेन काश्चनार्या अपि गद्यतामापन्ना. 'एओ आर पराणिअक्कार परीववा अएणायिवसआरमझिमाइतवर्गतवर्गनिगणायंच्छतिकटत्तदवयवालोरसवभयचसेव इति सराखपतुधव्वाऊग द्दहत्थ उपवि अ असुचंताउघडरयरोहे । णहुंतोअवअएणं यिमोहूणभ्रभ्रवेभ्रवरुभ्रुद्दुगचन्द्रा रंभुकगविदवाणअणिचलो पजमपिओसरोहोलक्कपी ॥' इति क-पुस्तके ३. 'च' इति क-ख पुस्तकयोस्त्रुटितम्. ४. 'किलशब्दान्तो रेफो भवति तथा सुं निरिलशब्द.' इति क-ख-पुस्तकयोः 'किर' इति भवति. ५. 'ड इति च भवति डकारो' इति क-ख पुस्तकयो.. ६. 'नडकडुटी·······तडागेषु' इति क-ख-पुस्तकयोः । 'ट' इति स्यात्, तथा च 'टो ड.' इति सूत्रेण डत्वविधानं युज्यते, एवं सति 'नटभटकुटीतटागेषु' इति पठनीयम्. ७. 'शषोः स.' इति सूत्रानुसारेण 'षशयो.' इति पाठव्यत्यासे कृते 'विससद्दा' इति साधीयान्पाठो भवितुमर्हति. ८. 'सर्वत्र तथाहि विससद्दा' इति क-ख-पुस्तकयो..

अस्पष्टश्च दकारो भवत्यनादौ तकार इतरार्धे ।
वडवातडागतुल्यो भवति डकारोऽपि च लकारः ॥ १२ ॥
'पघमधुशब्दे च तथा धकारवर्णो हकारतां याति ।'
सर्वत्र च प्रयोगे भवति नकारोऽपि च णकारः ॥ १३ ॥
आपाणं आवाणं भवति पकारेण वत्वयुक्तेन ।
अयथातथादिकेषु तु थकारवर्णो व्रजति हत्वम् ॥ १४ ॥
परुसं फरुसं विद्यात्पकारवर्णोऽपि फत्वमुपयाति ।
यस्तु मृगः सोऽपि मओ यस्तु मृतः सोऽपि तथैव ॥ १५ ॥
ओकारत्वं गच्छत्यौकारश्चोपैधादिषु नियुक्तः ।
प्रचयाचिराचलादिषु चकारवर्णोऽपि च यकारः ॥ १६ ॥
अपरस्वरैरनिष्पन्ना ह्येवं प्राकृतसमाश्रया वर्णाः ।
संयुक्तानां तु पुनर्वक्ष्ये परिवृत्तिसंयोगम् ॥ १७ ॥
श्चैत्सप्सां च्छ इति ध्यह्ययोर्भवति तु ज्झकारः ।
ष्टः ट्ठः स्तः त्थः ण्णग्नक्ष्णां ण्हः क्षः खकाररूपो हि ॥ १८ ॥

---

१. 'इतराध.' क-ख. २. 'वनवमोनागतुल्ये (?)' इति क-ख-पुस्तकयोः. ३ 'हो ल.' इत्यनेन स्वरात्परस्यासंयुक्तस्यानादेर्डस्य प्रायो लो भवति, तेन 'वल-आमुहं गरलो तलाअं' इत्यादयः सिध्यन्ति. ४. 'च' इति का-पुस्तके नास्ति. ५. 'शठपाठपीठिआदिषु ढकारवर्णोऽपि ठत्वमायाति ।' इति क-ख पुस्तकयोः. 'ठकारवर्णः' इत्युचितम्, तथा च 'ठो ढः' इति सूत्रेण स्वरात्परस्यासंयुक्तस्यानादेष्ठस्य ढत्वे 'शठपाठपीठिकादिषु ठकारवर्णोऽपि ढत्वमायाति' इति पाठो युक्तः. ६. 'मकारोऽपि' इति क-ख. 'नो णः' इत्यनुसारेण नकारस्य णत्वे 'नकारः' इति पाठो ज्यायान्. ७. 'पो व.' इति रीत्या प्रायिके वो विधीयते तेनेदं संगच्छते. ८. 'धनम्' इति क. ९. 'पद-पणां' (?) इति क-ख. १०. 'यस्तु मृतः सोऽपि मओ ड्यिष्ठुमृगशोऽपि मओ यश्चमृगः सोऽपि तथैव' (?) इति क-ख. ११. 'औत् ओत्' इति सूत्रेण. १२. 'चोपधादिषु' (?) इति का. १३. 'प्रचलचिता चलादिषु भवति चकारोऽपि च यकार.' इति क-ख. १४. 'अपरस्वर' इति क-ख. १५. 'च' इति का.

१६. 'श्चाथाच्छ इति तथा रात्तेषु तकारयोग उत्पातः ।
तथो अक्षरयोग च संगमश्लक्ष्णयोर्हैमरक्षेऽपः शेषो स्फसमोक्षणः ॥

आश्चर्यं मात्सर्यं चेत्यनयोर्यस्य रियं च तथा ।
उत्साहश्चोच्छाहो पथ्यं पच्छं च विज्ञेयम् ॥ १९ ॥
तुम्यं तुज्झं मह्यं मज्झं विन्ध्यश्च भवति विंज्झ इति ।
हृष्टो दह्व (दृष्टो दट्ठ) इति स्यात् हस्तोऽपि च हत्थ इत्येवम् ॥ २० ॥
ग्रीष्मो गिम्हो च तथा श्लक्ष्णां (क्ष्णं?) ल्ण्हं सदा तु विज्ञेयम् ।
कृष्णः कण्हो च भवेत् यक्षो जक्खो च पल्लङ्क पर्यङ्के ॥ २१ ॥
विपरीतसयोगेन ब्रह्मादौ स्याद्धस्वतो फलम् ।
यज्ञैश्च भवति जह्नो भीष्मो भिंम्मोत्ति विज्ञेयः ॥ २२ ॥
उपरिगतोऽधस्ताद्वा भवेत्ककारादिकस्तु यो वर्णः ।
स हि संयोगविहीनः शुद्धः कार्यः प्रयोगेऽस्मिन् ॥ २३ ॥
एवमेतत्तु विज्ञेयं प्राकृतं संस्कृतं तथा ।
अत ऊर्ध्वं प्रवक्ष्यामि देशभाषाविकल्पनम् ॥ २४ ॥
भाषा चतुर्विधा ज्ञेया देशरूपप्रयोगतः ।
संस्कृतं प्राकृतं चैव यत्र पाठ्यं प्रयुज्यते ॥ २५ ॥
अतिभाषार्यभाषा च जातिभाषा तथैव च ।

---

आश्चर्यं अच्छरियं निश्चयमिच्छन्ति णिच्छयन्ति तथा ।
उत्सादो उत्साहो पथ्यं पथ्यं न विज्ञेयम् ॥
तुभ्यं तुज्झं मह्यं मज्झं विन्ध्यश्च भवति विञ्झेति ।
हृष्टो दत्थोऽस्ति तथा हस्तोऽपि च भवति हत्थेति ॥
ग्रीष्मो गीम्होति तथा श्लक्ष्णं सहं सदा तु विज्ञेयम् ।
कृष्णं उह्रं जक्षो जक्षोयॉश्च भवति पलंको ॥' इति क-ख-पुस्तकयोः ।

१. 'उत्यारो—उच्छाहो' इति स्यात् 'चोत्साहे थो ह्स्वरः' इति सूत्रेण तयाविधानात्. 'मज्झं' इत्युचितम्. 'विंज्झेति' इत्युचितम्. 'विञ्झ' इति विंध्यायाः प्राकृतम्. 'दिट्ठेति' इति साधुः. 'गिम्हो' इत्युचितम् 'पक्ष्मश्मष्मस्मह्मां म्हः' इति तद्विधायकं शास्त्रम्. 'सण्हं' इत्युचितम्. 'उह्रं इति युक्तम्. २. 'विपरीते ह्स्वयोगो' इति क-ख. ३. 'यज्ञो भवति च जन्नो' इति क-ख. ४. 'भिम्मोत्ति' इति क-ख. ५. 'उपरिगतो ह्स्वाद्वा भवेत्ककारादिकस्तु' इति क-ख; 'उपरिगतेतोधस्तात्वा' इति का. ६. 'शुद्धं कार्यं प्रयोगेऽस्मिन्' इति का. ७. 'एवमेव तु' इति का. ८. 'देशरूपे' इति क ख.

तथा जात्यन्तरी चैव भाषा नाट्ये प्रकीर्तिता ॥ २६ ॥
अतिभाषा तु देवानामार्यभाषा तु भूभुजाम् ।
संस्कारपाठ्यसंयुक्ता सम्यग्भूमिप्रतिष्ठिता ॥ २७ ॥
विविधा जातिभाषा च प्रयोगे समुदाहृता ।
म्लेच्छशब्दोपचारा च भारतं वर्षमाश्रिता ॥ २८ ॥
अथ या जात्यन्तरी भाषा ग्रामारण्यपशूद्भवा ।
नानाविहंगजा चैव नाट्यधर्मी प्रयोगतः ॥ २९ ॥
जातिभाषाश्रयं पाठ्यं द्विविधं समुदाहृतम् ।
प्राकृतं संस्कृतं चैव चातुर्वर्ण्यसमाश्रयम् ॥ ३० ॥
धीरोद्धते धीरललिते धीरोदात्ते तथैव च ।
धीरप्रशान्ते च तथा पाठ्यं योज्यं तु संस्कृतम् ॥ ३१ ॥
एषामेव तु सर्वेषां नायकानां प्रयोगतः ।
कारणव्यपदेशेन प्राकृतं तु प्रयोजयेत् ॥ ३२ ॥
ऐश्वर्ये[ण] प्रमत्तस्य ऐश्वर्येण हृतस्य च ।
दारिद्र्येण प्रमत्तस्य दारिद्र्येण हृतस्य च ॥ ३३ ॥
उत्तमस्यापि कुर्वतः प्राकृतं संप्रयोजयेत् ।
व्याजलिङ्गप्रतिष्ठानां श्रमणानां तपस्विनाम् ॥ ३४ ॥
भिक्षुचार्यचराणां च(?) प्राकृतं संप्रयोजयेत् ।
बाले ग्रहोपसृष्टे च स्त्रीणां च प्रकृतौ तथा ॥ ३५ ॥

---

१. 'नाट्यप्रकीर्तिता' इति का. २. 'अभिभाषा' इति का. ३. 'न्यायप्रतिष्ठिता' इति का. ४. 'द्विविधा' इति का. ५. 'आश्रितम्' इति क ख. ६. 'ग्राम्या°' इति का. ७. 'विहगजा°' इति का. ८. 'प्रयोगत.' इति क-ख. ९. '…वि°' इति क-ख. १०. 'धी…ललिते' इति क ख.' ११. 'नाट्यकाना' इति क-ख. इति का. १२. 'करत्व्यपदेशेन' इति क-ख. १३. 'सप्रयोजयेत्. १४. 'का-पुस्तके तु—
'ऐश्वर्येण प्रमत्तस्य दारिद्र्येण हृतस्य च ।' इत्येव श्लोकार्धम् ।
१५. 'पठत' इति का. १६. '…कृत' इति क-ख. १७. 'व्याजलिङ्ग' इति क ख. १८. 'भिक्षुचक्रचरणाना' इति क-ख. १९. 'क्षीणा स्त्रीप्रकृतौ तथा' इति का.

नीचे मत्ते सलिङ्गे च प्राकृतं पाठ्यमिष्यते ।
परिव्राण्मुनिशान्तेषु वा(शा?)क्येषु श्रोत्रियेषु च ॥ ३६ ॥
द्विजा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ।
राज्ञ्यश्च गणिकायाश्च शिल्पकार्यास्तथैव च ॥ ३७ ॥
कालावस्थान्तरकृतं योज्यं पाठ्यं तु संस्कृतम् ।
संधिविग्रहसंबद्धं तथा चाप्यशुभं शुभम् ॥ ३८ ॥
ग्रहनक्षत्रचरितं खगानां रुतमेव च ।
सर्वमेतद्धि विज्ञेयं कार्यबन्धे शुभाशुभम् ॥ ३९ ॥
नृपपत्न्या भवेत्पाठ्यं संस्कृतं द्विजसत्तमाः ।
क्रीडार्थं सर्वलोकस्य प्रयोगस्य सुखाश्रयम् ॥ ४० ॥
क्रीडालीलार्थकं चैव पाठ्यं वेश्यासु संस्कृतम् ।
लोकोपचारज्ञानार्थं क्रीडार्थं पार्थिवस्य तु ॥ ४१ ॥
निर्दिष्टं शिल्पकार्येषु नाटके संस्कृतं वचः ।
आम्नायसिद्धं सर्वासां शुभमप्सरसां वचः ॥ ४२ ॥
संसर्गाद्देवतानां वै तद्धि लोकोऽनुवर्तते ।
छन्दतः प्राकृतं पाठ्यं स्मृतमप्सरसां भुवि ॥ ४३ ॥
मानुषीणां च कर्तव्यं कारणार्थव्यपेक्षया ।
न बर्बरकिरातान्ध्रद्रविडाद्यासु जातिषु ॥ ४४ ॥
नाट्यप्रयोगे तु कर्तव्यं काव्यं भाषासमाश्रयम् ।
जातिष्वेतासु सर्वासु शुद्धासु च द्विजोत्तमाः ॥ ४५ ॥

---

१. 'परिभाट्'(?) इति क-ख; 'परिव्राड्मुनिशान्तेषु चैत्तषु(?) श्रोत्रियेषु चा' इति का. २. 'कार्यावस्थान्तरकृतं' इति का. ३. 'सपक्षम्' इति का. ४. 'अशुभाशुभम्' इति का. ५. 'यस्माद्राजा' इति क ख. ६. 'कलाभ्यासाश्रयं' इति क-ख. ७. 'कलोपचारज्ञानार्थं' इति क-ख. ८. 'शिल्पकार्यासु' इति क-ख. ९. 'शुभं चाप्सरसां वच.' इति का. १०. 'भव' इति क-ख. ११. 'छन्दत.' इति का. १२. 'वाक्यं' इति का. १३. 'मानुषाणां' इति का. १४. 'द्रमिलाद्यासु' इति का. १५. इत. प्रभृति श्लोकचतुष्टयी काशीस्थलिखितपुस्तके नास्तीति का पुस्तकटिप्पणी.

सौरसेनं समाश्रित्य भाषा कार्या तु नाटके ।
अथवा छन्दतः कार्या देशभाषा प्रयोक्तृभिः ॥ ४६ ॥
नानादेशसमुत्थं हि काव्यं भवति नाटके ।
.......................................॥ ४७ ॥

मागध्यवन्तिजा प्राच्या सूरसेन्यर्धमागधी ।
बाह्लीका दाक्षिणात्या च सप्त भाषाः प्रकीर्तिताः ॥ ४८ ॥
शबराभीरचण्डालसचरद्रविडोद्र(ड्र)जाः ।
हीना वनेचराणां च विभाषा नाटके स्मृता ॥ ४९ ॥
मागधी तु नरेन्द्राणामन्तःपुरनिवासिनाम् ।
चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी ॥ ५० ॥
प्राच्या विदूषकादीनां धूर्तानामप्यवन्तिजा ।
नायिकानां च सखीनां च सूरसेना[3]विरोधिनी ॥ ५१ ॥
यो[4]धनागरकादीनां दाक्षिणात्याथ दीव्यताम् ।
बाह्लीक[6]भाषोदीच्यानां खसानां च स्वदेशजा ॥ ५२ ॥
शबराणां शकादीनां तत्स्वभावश्च यो गणः ।
शकार[7]भाषा योक्तव्या पाञ्चाली[8] पुल्कसादिषु ॥ ५३ ॥
अङ्गारकारव्याधानां काष्ठ[9]यन्त्रोपजीविनाम् ।
योज्या शबरभाषा तु किंचिद्वानौकसी तथा ॥ ५४ ॥
गवाश्वाजाविकोष्ट्रादिघोषस्थाननिवासिनाम् ।
आभीरोक्तिः शाबरी वा[11] द्राविडी द्रविडादिषु ॥ ५५ ॥
सुरङ्गा[12]खनकादीनां (ना) मौष्टिका[13]नां च रक्षसाम् ।

१. 'नराणा चैवा०' इति का. २. 'योज्या भाषा अवन्तिजा' इति का. ३. 'सौरसेन्यविरोधिनी' इति का. ४. 'योधनागरिकादीनां' इति का. ५. 'च' इति का. ६. 'बह्लीक' इति का. ७. 'सकारभाषा' इति क-ख. ८. 'चाण्डाली पुक्कसादिषु च' इति क-ग. ९. 'काष्ठपत्रोपजीविनाम्' इति क-ख. १०. अत्र का-पुस्तके 'विन्ध्यसागरमध्ये तु' इत्याद्यूनपष्टितमोऽप्रेतनः श्लोकः. ११. 'स्याद्' इति का. १२. 'सुरङ्गवनकादीनाम्' इति का. १३. 'सौण्डीकाराश्च रक्षिणाम् (?)' इति का.

व्यसने नायकानां स्यादात्मरक्षासु मागधी ॥ ५६ ॥
गङ्गासागरमध्ये तु ये देशाः संप्रकीर्तिताः ।
एकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५७ ॥
विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः ।
नकारबहुलां तेषु भाषां तज्ज्ञः प्रयोजयेत् ॥ ५८ ॥
सुराष्ट्रावन्तिदेशेषु वेत्रवत्युत्तरेषु च ।
ये देशास्तेषु कुर्वीत चकारबहुलामिह ॥ ५९ ॥
हिमवत्सिन्धुसौवीरान्ये च देशाः समाश्रिताः ।
उकारबहुलां तज्ज्ञस्तेषु भाषां प्रयोजयेत् ॥ ६० ॥
चर्मण्वतीनदीपारे ये चार्बुदसमाश्रिताः ।
तकारबहुलां नित्यं तेषु भाषां प्रयोजयेत् ॥ ६१ ॥
एवं भाषाविधानं तु कर्तव्यं नाटकाश्रयम् ।
अत्र नोक्तं मया यच्च लोकाद्ग्राह्यं बुधैस्तु तत् ॥ ६२ ॥
एवं भाषाविधानं तु मया प्रोक्तं द्विजोत्तमाः ।
पुनर्वाक्यप्रचारं तु लौकिकं संनिबोधत ॥ ६३ ॥
उत्तमैर्मध्यमैर्हीनैर्ये संभाष्या यथा नराः ।
समानोत्कृष्टहीनास्तु नाटके तान्निबोधत ॥ ६४ ॥
देवानामपि ये देवा महात्मानो महर्षयः ।
भगवन्निति ते वाच्या यास्तेषां योषितस्तथा ॥ ६५ ॥

---

१. 'नायिकादीनां' इति का.

२. 'न बर्बरकिरातान्ध्रद्रविडाद्यासु जातिषु ।
नाट्यप्रयोगे कर्तव्यं काव्यं भाषासमाश्रयम् ॥'

पद्यमिदं का-पुस्तके नास्ति फ-स-पुस्तकयोरप्यागतपूर्वमेतत्पद्यमत्र पुनरपि वर्तते.

३. 'वेत्रवत्यन्तरेषु' इति का. ४. 'येऽन्यदेशान्' इति का. ५. 'तेषु नित्यं भाषां प्रयोजयेत्' इति का. ६. 'अथ' इति का. ७. 'अत्र का-पुस्तके—'इति भारतीये नाट्यशास्त्रे भाषाविधानं नाम सप्तदशोऽध्यायः । एकोनविंशाध्यायप्रारम्भः ।' इत्यधिकम्. ८. 'च' इति का.

देवाश्च लिङ्गिनश्चैव नानाश्रुतधराश्च ये ।
भगवन्निति ते वाच्याः पुरुषैः स्त्रीभिरेव च ॥ ६६ ॥
आर्येति ब्राह्मणं ब्रूयान्महाराजेति पार्थिवम् ।
उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि ॥ ६७ ॥
छन्दतो नामभिर्वाच्या ब्राह्मणैस्तु नराधिपाः ।
तत्क्षाम्यं तु महीपालैर्यस्मात्पूज्या द्विजोत्तमाः ॥ ६८ ॥
ब्राह्मणैः सचिवो वाच्यो ह्यमात्यः सचिवेति वा ।
शेषैरन्यैर्जनैर्वाच्यो हीनैरार्येति नित्यशः ॥ ६९ ॥
समैः संभाषणं कार्यं येन नाम्ना तु संज्ञितः ।
हीनैः सपरिहारं तु नाम्ना संभाष्य उत्तमः ॥ ७० ॥
नियोगाधिकृता ये तु पुरुषा योषितस्तथा ।
कारुकाः शिल्पिनश्चैव संभाष्यास्ते तथैव हि ॥ ७१ ॥
मान्यो भावेति वक्तव्यः किंचिदूनस्तु मारिषः ।
समानोऽर्थं वयस्येति हंहो हन्तेति चाधमैः ॥ ७२ ॥
आयुष्मन्निति वाच्यस्तु रथी सूतेन सर्वदा ।
तपस्वी च प्रशान्तश्च साधो इति हि शब्यते ॥ ७३ ॥
स्वामीति युवराजस्तु कुमारो भर्तृदारकः ।
सौम्य भद्रमुखेत्येवं हेपूर्वं चाधमं वदेत् ॥ ७४ ॥
यद्यस्य कर्म शिल्पं वा विद्या वा जातिरेव वा ।
स तेन नाम्ना संभाष्यो नाटकादौ प्रयोक्तृभिः ॥ ७५ ॥
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा पुनः ।
वाच्यः शिष्यः सुतो वापि पित्रा वा गुरुणापि वा ॥ ७६ ॥

१. 'श्रुतिधराश्च' इति का. २. 'ह्यमात्यसचिवेति' इति का. ३. 'समं' इति क-ख. ४. 'वारका.' इति का. ५. 'मर्पो भावेति' इति क-ख. ६. 'मर्पक.' इति क-ख. ७. 'हि' इति का. ८. 'ही हं वा इति चाधम.' इति का. ९. 'तपस्वीव प्रशान्तः सन्' इति क-ख. १०. 'तु' इति क-ख. ११. 'चाधमं' इति का. १२. '०ल्पं विद्या' इति क-ख. १३. 'वाच' इति का.

संभाष्याः शाक्यनिर्ग्रन्था[1] भदन्तेति प्रयोक्तृभिः।
आमन्त्रणेषु पाखण्डाः शेषास्तु[2] समयाश्रितैः॥ ७७॥
देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा।
भट्टेति[3] सार्वभौमस्तु नित्यं परिजनेन[4] हि॥ ७८॥
राजन्नित्यृषिभिर्वाच्यो ह्यपत्यप्रत्ययेन[5] वा।
वयस्य राजन्निति वा भवेद्वाच्यो महीपतिः॥ ७९॥
विदूषकेण[6] राज्ञी च चेट्यां[7] च भवतीत्यपि।
नाम्ना वयस्येत्यपि[8] वा राज्ञा वाच्यो विदूषकः॥ ८०॥
सर्वस्त्रीभिः पतिर्वाच्य[9] आर्यपुत्रेति यौवने।
आर्येति पूर्वजो भ्राता वाच्यः पुत्र इवानुजः॥ ८१॥
पुरुषाभाषणं ह्येवं नाट्ये कार्यं प्रयोक्तृभिः।
पुनः स्त्रीणां[10] प्रवक्ष्यामि संभाषां नाटकाश्रयाम्[11]॥ ८२॥
तपस्विन्यो[12] देवताश्च वाच्या[13] भगवतीति च।
गुरुभार्या[14] च वक्तव्या स्थानीया भवतीति च॥ ८३॥
गम्या भद्रेति वक्तव्या वृद्धाम्बेति[15] च नाटके।
राजपत्न्यस्तु[16] संभाष्याः सर्वाः परिजनेन तु॥ ८४॥
भट्टिनी स्वामिनी देवी इत्येवं नाटके बुधैः।
देवीति महिषी वाच्या राज्ञा परिजनेन तु॥ ८५॥
भोगिन्य इति शेषास्तु स्वामिन्य इति वा पुनः।
स्वसेति भगिनी वाच्या ज्येष्ठा वत्सेति चानुजा॥ ८६॥
ब्राह्मण्यार्येति वक्तव्या लिङ्गस्था भर्तिनी[17] च या।

---

१. 'निग्रन्था' इति क-ख. २. 'शेषा· स्वयमुपागतैः' इति क-ख. ३. 'भेदेति' इति क-ख. ४. 'प्रजनेन न हि' इति क-ख. ५. 'ह्यपत्यं प्रत्ययेन' इति क-ख. ६. 'विदूषकेन' इति क. ७. 'चेटी' इति क. ८. 'नाम्ना च वयस्येत्यपि' इति क-ख. ९. 'पतिः...... ... ..' इति क-ख. १०. 'स्त्रीणां च वक्ष्यामि. ११. 'संभाषं नाटकाश्रयम्' इति क-ख. १२. 'तपस्विभ्यो' इति क-ख. १३. 'वाच्यास्तु भगवन्निह' इति क-ख. १४. 'गुरुरार्येति' इति क-ख. १५. 'वृद्धा वाच्येति' इति क. १६. 'च' इति क. १७. 'भतिनी नरा' इति क-ख.

पत्नी चार्येति संभाष्या पितुर्नाम्ना सुतस्य सा ॥ ८७ ॥
समानाभिस्तथा सख्यो हला भाष्याः परस्परम् ।
प्रेष्या हञ्जेति वक्तव्या स्त्रियो या तूत्तमा भवेत् ॥ ८८ ॥
अज्जुकेति भवेद्वाच्या वेश्या परिजनेन तु ।
या त्वत्र वृद्धा सा त्वत्ता भाष्या नाट्यजनेन तु ॥ ८९ ॥
प्रियेति भार्या शृङ्गारे वाच्या राज्ञेतरेण वा ।
पुरोध[ः]सार्थवाहानां भार्या त्वार्येति सर्वदा ॥ ९० ॥
तल्लिङ्गार्थानि नामानि कार्याणि कविभिर्द्विजाः ।
औत्पत्तिकानि यानि स्युर्न प्रख्यातानि नाटके ॥ ९१ ॥
ब्रह्मक्षत्रस्य नामानि गोत्रकर्मानुरूपतः ।
काव्ये कार्याणि कविभिः शर्मवर्मकृतानि च ॥ ९२ ॥
दत्तप्रायाणि नामानि वणिजां तु प्रयोजयेत् ।
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत् ॥ ९३ ॥
विजयार्थानि नामानि राजस्त्रीणां च कारयेत् ।
दत्ता मित्रा च सेनेति वेश्यानामानि कारयेत् ॥ ९४ ॥
नानाकुसुमनामानः प्रेष्याः कार्यास्तु नाटके ।
मङ्गलार्थानि नामानि चेटानामपि कारयेत् ॥ ९५ ॥
गम्भीरार्थानि नामानि योजयेदुत्तमेषु च ।
यत्रैषां नामानुसदृशं कर्म तेषां भविष्यति ॥ ९६ ॥
जातिचेष्टानुरूपाणि शेषाणामपि कारयेत् ।
नामानि पुरुषाणां तु स्त्रीणां चोक्तानि तत्त्वतः ॥ ९७ ॥

---

१. 'त्वा' इति क-ख. २. 'वेश्या भाष्या' इति का. ३. 'प्रत्यत्तु' इति क-ख. ४. 'परिजनेन तु' इति क-ख. ५. 'पुरोधा.' इति क-ख. ६. 'नार्यस्त्वार्येति' इति का. ७. 'तल्लिङ्गस्थानि' इति का. ८. 'उत्पत्तिकानि' इति क-ख. ९. 'प्रख्याप्यानि (?)' इति का. १०. 'ब्राह्मणस्य' इति का. ११. 'राज्ञां स्त्रीणां च' इति का. १२. 'दासना च' इति क-ख. १३. 'वेश्याभिनामानि' इति क-ख. १४. 'स्त्रीणां पोषाणि योजयेत्' इति क-ख. १५. 'यत्नाख्यासमपदार्थं (?)' इति क-ख.

एवं नामविधानं तु कर्तव्यं कविभिः सदा ।
एवं भाषाविधानादि ज्ञात्वा सर्वमशेषतः ॥
ततः पाठ्यं प्रयुञ्जीत षडलंकारसंयुतम् ॥ ९८ ॥

पाठ्यगुणानिदानीं वक्ष्यामः । तद्यथा—सप्त स्वराः, त्रीणि स्थानानि, चत्वारो वर्णाः, द्विविधा काकुः, षडलंकाराः, षडङ्गानि, इति । तत्र सप्त स्वराः—षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादाः । ते एते रसेषूपपाद्याः । यथा—

हास्यशृङ्गारयोः कार्यौ स्वरौ मध्यमपञ्चमौ ।
षड्जर्षभौ तथा चैव वीररौद्राद्भुतेषु च ॥ ९९ ॥
गान्धारश्च निषादश्च कर्तव्यौ करुणे रसे ।
धैवतश्चैव कर्तव्यो बीभत्से सभयानके ॥ १०० ॥

त्रीणि स्थानान्युरःकण्ठशिरांसीति भवन्त्यपि ।
शारीर्यामथ वीणायां त्रिभ्यः स्थानेभ्य एव तु ।
उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते ॥ १०१ ॥

आभाषणं च दूरस्थे[10] शिरसा संप्रयोजयेत् ।
[11]नातिदूरे च कण्ठे च ह्युरसा च समीपतः ॥ १०२ ॥

उरसोदाहृतं वाक्यं शिरसोद्दीपयेद्[12]बुधः ।
कण्ठेन शमनं कुर्याद्वाच्यंयोगेषु सर्वदा ॥ १०३ ॥
उदात्तश्चानुदात्तश्च स्वरितः कम्पितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे तपोधनाः ॥ १०४ ॥

---

१. 'नामधानं' इति क-ख. २. का-पुस्तके 'इति' इति नास्ति, किंतु 'तेषामिदानीं लक्षणान्यभिव्याख्यास्याम.' इति वर्तते. ३. 'मध्य पञ्च', इति क-ख. ४. 'निषधाः' इति का. ५. 'ते' इति का-पुस्तके नास्ति. ६. 'कर्तव्यो (?)' इति क-ख. ७. 'त्रीणि स्थानानि—उरःकण्ठशिरः इति भवति । अपि च' इति क-ख. ८. 'च' इति का. ९. 'तु' इति का. १०. 'दूरस्थं' इति क-ख. ११. 'नातिदूरेऽपि कण्ठेनाप्युरसा चापि पार्श्वतः.' इति का. १२. 'शिरसा दीपयेत्' इति का. १३. 'पाठ्यं योगेषु' इति का. १४. 'उदात्तश्चानुदात्तश्च' इति का.

तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वीररौद्राद्भुतेषूदात्तकम्पितैः करुणवात्सल्यभयानकेष्वनुदात्तस्वरितकम्पितैर्वर्णैः पाठ्यमुपपादयेदिति । द्विविधा काकुः । साकाङ्क्षा निराकाङ्क्षेति[3] । वाक्यस्य साकाङ्क्षनिराकाङ्क्षत्वात् ।

अनियुक्तार्थकं वाक्यं साकाङ्क्षमिति संज्ञितम् ।
नियुक्तार्थं तु यद्वाक्यं निराकाङ्क्षं तदुच्यते ॥ १०५ ॥

अत्र साकाङ्क्षं मन्द्रादितारान्तम्, अनियुक्तार्थमनिर्यातितवर्णालंकारं कण्ठोरःस्थानगतम् । निराकाङ्क्षं नाम नियुक्तार्थं निर्यातितवर्णालंकारं शिरःस्थानगतम् मन्द्रादितारान्तमिति ।

[ अथ षडलंकाराः— ]

उच्चो दीप्तश्च मन्द्रश्च नीचो[13] द्रुतविलम्बितौ ।
पाठ्यस्यैते ह्यलंकारा लक्षणं च निबोधत ॥ १०६ ॥

उच्चो नाम शिरःस्थानगतस्तारः स्वरः, स च दूरस्थाभाषणविस्मयोत्तरोत्तरसंजल्पदूराह्वानत्रासनार्थं वाचेषु । दीप्तो नाम शिरस्थानगतस्तारतरः, स चाक्षेपकलहविवादामर्षोत्कृष्टाधर्षणाक्रोधशौर्यदर्पतीक्ष्णरूक्षाभिधाननिर्भर्त्सनाक्रन्दितादिषु । मन्द्रो नाम उरःस्थानगतो निर्वेदग्लानिशङ्काचिन्तौत्सुक्यदैन्यावेगव्याधिगाढशस्त्रक्षतमूर्च्छामदादिषु । नीचो नाम उरःस्थानगतो मन्द्रतरः स्वभावाभाषणव्याधितपथिश्रान्तत्रस्तपतितमूर्च्छितादिषु । द्रुतो नाम

---

१. '°द्रुतैरुदात्त°' इति क-ख. २. 'उपपादयति' इति क-ख. ३. 'निराकाङ्क्षा चेति' इति का. ४. क-ख-पुस्तकयोस्तु—'वाक्यस्य साकाङ्क्षेति अत्र साकाङ्क्षं मन्द्रादितारान्तम्, साकाङ्क्षत्वात्.' ५. 'साकाङ्क्षकमिति संज्ञितम्' इति का. ६. 'अत्र साकाङ्क्षं मन्द्रादितारान्तम्' इति का-पुस्तके नास्ति. ७. 'अयुक्तं नाम' इति का. ८. 'कण्ठोरःस्थानगतं' इति का. ९. 'नियुक्तार्थनिर्यातितवर्णालंकारं' इति का. १०. 'मन्द्रादितारागतमिति' इति का. ११. 'अथ षडलंकाराः' इति क-ख-पुस्तकयोर्नास्ति. १२. 'मन्द्रश्च' इति त्रुटितं क-ख-पुस्तकयोः. १३. 'नीचोदात्त' इति क-ख-पुस्तकयोः. १४. 'तारस्वरः' इति का. १५. '°मर्षविस्पष्टाधर्षणा' इति क-ख. १६. 'निर्भर्त्सनादिषु' इति का. १७. 'शङ्का' इति नास्ति क-ख-पुस्तकयोः. १८. 'वेग' इति नास्ति क-ख-पुस्तकयोः. १९. 'उरःस्थानस्थमन्द्रतरः स्वभावाभाषणव्याधितपथिश्रान्तत्रस्त—' क-ख. २०. 'द्रुतोनाम कण्ठगतस्खलितवेष्ठनमदनभयशीतज्वरत्रस्तायस्तागूढकार्यवेदनादिषु' इति का.

कण्ठगतस्त्वरितलज्जितमन्मथभयशीतज्वरार्तत्रस्ताकार्यवेदनादिषु। विलम्बितो नाम कण्ठस्थानस्थो मन्द्रः शृङ्गारवितर्कविचारामर्षासूयिताव्यक्तार्थप्रवादलज्जाचिन्ताविस्मिततर्जनदोषानुकीर्तनेन दीर्घरोगनिपीडनादिषु। अत्रानुवंश्याः श्लोका भवन्ति—

उत्तरोत्तरसंजल्पे परुषाक्षेपणे तथा।
तीक्ष्णरूक्षाभिनयन आवेगे क्रन्दिते तथा॥ १०७॥
परोक्षस्य समाह्वाने तर्जने त्रासने तथा।
दूरस्थाभाषणे चैव तथा निर्भर्त्सनेषु च॥ १०८॥
सर्वेष्वेतेषु नित्यं हि नानारससमाश्रयों।
उच्चा दीप्ता द्रुता चैव काकुः कार्या प्रयोक्तृभिः॥ १०९॥
मन्दे च मर्दने चैव भयार्ते शीतविह्वते।
मन्द्रा द्रुता च कर्तव्या काकुर्नाट्यप्रयोक्तृभिः॥ ११०॥
इष्टानिष्टानुसारेण इष्टानिष्टश्रुतौ तथा।
इष्टार्थख्यापने चैव चिन्तोत्प्रक्षे तथैव च॥ १११॥
उन्मादेऽसूयने चैव उपालम्भे तथैव च।
विस्मयामर्षयोश्चैव हर्षे च परिदेविते॥ ११२॥
अव्यक्तार्थे प्रदाते (ने?) च तथालोके तथैव च।
उत्तरोत्तरसंजल्पे कार्येऽतिशयसंयुते॥ ११३॥
विक्षते व्याधिते त्वङ्गे दुःखशोके तथैव च।
विलम्बिता च दीप्ता च काकुर्मन्द्रा च वै भवेत्।
यानि सौम्यार्थयुक्तानि सुखभावकृतानि च॥ ११४॥

---

१. 'कण्ठ स्थानगत.' का. २. 'चिन्तातर्जनविस्मयदोषानुकीर्तनदीर्घरोगनिपीडनादिषु' इति का. ३. 'भावेष्वेतेषु' का. ४. '°समाश्रयात्' का. ५. 'द्रुता' क-ख. ६. 'स्तोच मन्मने' क-ख. ७. 'चित्तविह्वते' का. ८. 'मन्दाद्रुता' इति क-ख ९. 'नाट्ये प्रयोक्तृभि.' इति क-ख. १०. 'इष्टानिष्टश्रुतौ' इति क-ख. ११. 'इष्टार्थख्यापने' इति क-ख. १२. 'चिन्तयाने' इति का पुस्तके १३. का पुस्तके श्लोकस्यास्य पूर्वार्धमुत्तरार्धस्थेनोत्तरार्धं च पूर्वार्धस्थेन वर्तते. १४. सार्धमिदं पद्यं क-ख-पुस्तकयोर्नास्ति. १५. 'काकुमन्द्रा' इति क-ख.

मन्द्रा विलम्बिता चैव तत्र काकुर्विधीयते ।
यानि स्युस्तीक्ष्णरूपाणि दीप्ता चोच्चा च तेष्वपि ॥ ११५ ॥
एवं नानाश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः ।
लघ्वक्षरप्रायकृते गुर्वक्षरकृते तथा ।
गूढार्थवचने चैव............... ॥ ११६ ॥
उच्चा दीप्ता च कर्तव्या काकुस्तत्र प्रयोक्तृभिः ।
हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता ॥ ११७ ॥
वीररौद्राद्भुतेषूच्चा दीप्ता चापि प्रशस्यते ।
भयानके सबीभत्से द्रुता नीचा च कीर्तिता ॥ ११८ ॥
एवं भावरसोपेता काकुर्योज्या प्रयोक्तृभिः ।

अथाङ्गानि—विच्छेदोऽर्पणं विसर्गोऽनुबन्धो दीपनं प्रशमनमिति षडङ्गानि । तत्र विच्छेदो नाम विरामकृतः । अर्पणं नाम लीलावर्णस्वरूपेणापूरयदिव रङ्गं यत्पठ्यते । विसर्गो नाम वाक्यन्यासः । अनुबन्धो नाम पदान्तरेऽर्थेऽपि विच्छेदोऽनुच्छूसनं वा । दीपनं नाम त्रिस्थानशोभि वर्धमानस्वरं च । प्रशमनं नाम तारंगतानां स्वराणामवैस्वर्येणावरोहणमिति । एषां च रसगतः प्रयोगः । तत्र हास्यशृङ्गारयोरर्पणविच्छेदनदीपनैप्रशमनयुक्तं पाठ्यं कार्यम् । करुणवीराद्भुतेषु समाकर्षविच्छेदप्रशमनार्पणदीपनानुबन्धबहुलं पाठ्यं प्रयोज्यम् । बीभत्सभयानकयोर्विच्छेदार्पणयुक्तमिति । सर्वेषां चैतेषां मन्द्र-

---

१. 'चोच्चा च' इति पा. २. 'चापि' इति क-ख. ३. 'द्रुता' इति क-ख. ४. 'कार्या' इति क ख. ५. 'विच्छेदोऽप्यर्पणे' इति क-ख. ६. 'अर्पणं नाम लीलायमानमधुरवर्णस्थानलयेन पूरयद्भिरिव रङ्गं यत्पठ्यते तदर्पणम्' इति क-ख. ७. 'अनुबन्धो नाम' इति नास्ति क-ख पुस्तकयोः. ८. 'पदान्तरेष्वविच्छेदानुच्छ्वासनं वा' इति पा. ९. '°शोभिः' (?) इति क-ख. १०. 'तारगतानां' इति क-ख. ११. 'स्वराणां नवैस्वर्येण' इति क-ख. १२. 'अवतरणमिति' इति पा. १३. 'च' इति नास्ति क-ख-पुस्तकयोः. १४. 'प्रयोगतः' इति क-ख. १५. 'विच्छेद' इति क-ख. १६. 'कार्यं' इति पा. १७. 'करुणवीररौद्राद्भुते' इति क-ख. १८. 'शुचाप्रकर्ष' इति क ख. १९. 'विसर्गविच्छेदाद्यन्वितप्रायमिति' इति क-ख.

मध्यतारै[1]व्यवस्थया [2]त्रिस्थानगतः प्रयोगः। [3]तत्र दूरस्थाभाषणे [4]तारं शिरसो नातिदूरे मध्यं [6]कण्ठेन पार्श्वतो मन्द्रमुरसा प्रयोजयेत्पाठ्यमिति। मन्द्राचा-[7]रैर्ङ्च्छेत्ताराद्वा मन्द्रमिति। एषां च द्रुतमध्यविलम्बितासु ये वर्णा रसेषूप-[9]पायाः तत्र हास्यशृङ्गारयोर्मध्यलयः करुणे विलम्बितो वीररौद्राद्भुतबीभत्स-भयानके[10]षु द्रुत इति।

अथ विरामः—अर्थसमाप्तौ कार्यवशा[11]च्छन्दोवशा[12]द्दृश्यन्ते हि एकद्वि-त्रिचतुरक्षरा विरामाः। यथा—

> किं गच्छ मा विश सुदुर्जन वारितोऽसि
>
> कार्यं त्वया न मम सर्वजनोप[13]युक्तः।
>
> [14]शोकं शुचं कुरु गते च तथोपचारे
>
> स्वल्पाक्षराणि हि पदानि भवन्ति कार्ये[15]॥ ११९॥

एवं वि[16]रामे प्रयत्नोऽनुष्ठेयः। कस्मात्। विरा[17]मैः इहार्थानुदर्शको भवति। [18]अपि च—

> विरामे[19]षु प्रयत्नस्तु नित्यं कार्यः प्रयोक्तृभिः।
>
> [20]कस्मादभिनयो ह्यर्थे अर्थापेक्षी यतः स्थितः॥ १२०॥
>
> यत्र [21]व्यग्रावुभौ हस्तौ तत्र दृष्टि[22]समन्वितः।
>
> वाचिकाभिनयः कार्यो विरामैरर्थदर्शकैः[23]॥ १२१॥
>
> प्रायो वीरे च रौद्रे च करौ प्रहरणाकुलौ।

---

१. 'व्यवस्थायां' इति का. २. 'त्रि' इति नास्ति का-पुस्तके. ३. 'प्रयोगत.' इति क-ख. ४. 'तार.' इति का. ५. 'शिरसा' इति क-ख. ६. 'मध्यकण्ठेन' इति क-ख. ७. 'मन्द्रतारङ्गच्छेत्ताराद्वा (?)' इति क-ख. 'मन्द्रतारं गच्छात्ताराद्वा' इति का. ८. 'एषां चन्द्रतनमध्य०' इति क-ख. ९. 'उपायाः' इति का. १०. 'भद्भुत इति' इति क-ख. ११. 'नच्छन्दोवशात्' इति नास्ति क ख-पुस्तकयोः. १२. 'दृश्यते' इति क-ख. १३. '०जनोपभुक्त.' इति क-ख. १४. 'शुचाशुचाङ्कुरगतेऽत्र तथोपचारे' इति का. १५. 'काव्ये' इति का. १६. 'विरामः प्रयत्नतोऽनुष्ठेय.' इति का. १७. 'विरामार्थोनुदर्शकः भवति' इति का. १८. 'अपि च श्लोक.' इति का. १९. 'रामे तु' इति का. २०. 'तस्मादभिनये लसात्' इति का. २१. 'व्यग्रावुभौ हस्तौ' इति क-ख. २२. 'दृष्टि.' इति क-ख. २३. '०दर्शिभिः' इति का.

बीभत्से कुटिलतरत्वाच भवतः कुञ्चितौ करौं ॥ १२२ ॥
हास्ये चोद्देशमात्रेण करुणे च प्रलम्बितौ ।
अद्भुते विस्मयाविष्टे स्तब्धौ कार्यौ भयानके ॥ १२३ ॥
एवमादिषु चान्येषु प्रविचारेषु हस्तयोः ।
अलंकारविरामाभ्यां साध्यते ह्यर्थनिश्चयः ॥ १२४ ॥
ये विरामाः स्मृता वृत्ते तेष्वलंकार इष्यते ।
समासेऽर्थे [ पदे[6] ] चापि तथा प्राणवशेन वा ॥ १२५ ॥
पदवर्णसमासे च द्रुते बह्वर्थसंकटे ।
कार्यो विरामः पादान्ते तथा प्राणवशेन वा ॥
शेषमर्थवशेनैव विरामं संप्रयोजयेत् ॥ १२६ ॥

अथ भावगतानि रसजातानि च कृप्याण्यक्षराणि चोद्धव्यानि । तद्यथा—

एकारैकारसंयुक्तमोकारौकारसंयुतम् ।
व्यञ्जनं यद्भवेद्दीर्घं कृप्यं तत्तु भवेदिह ॥ १२७ ॥
विषादे च वितर्के च प्रश्ने चामर्षणे तथा ।
कलाकालप्रमाणेन पाठ्यं कार्यं प्रयोक्तृभिः ॥ १२८ ॥
शेषाणामर्थयोगेन विरामे विरमेदिह ।
एकद्वित्रिचतुष्पञ्चषट्कलं च विलम्बितम् ॥ १२९ ॥
विरामे[13] च विलम्बे च यदा गुर्वक्षरं भवेत् ।
षण्णां कलानां परतो लम्बनं न विधीयते ॥ १३० ॥
अथवा कारणोपेतं प्रयोगं कार्यमेव च ।

---

१. 'विस्मयस्तब्धौ भयाचैव भयानकौ' इति का. २. 'सर्वेषु' इति का. ३. 'अधिकारेषु' इति का. ४. 'साध्यन्ते ह्यर्थनिश्चयाः' इति का. ५. 'एते' इति का. ६. 'पदे' इति नास्ति क-ख-पुस्तकयोः. ७. 'अनानुगतानि चलार्थक्षराणि रसभावानुगतानि निकृष्टान्यक्षराणि चोद्बोध्यानि' इति का. ८. 'अकारे करसंयुक्तमेकारे कारसंयुतम्' इति का. ९. 'विवर्ते च' इति का. १०. 'कालाकाल प्रमाणेन कार्यं पाठ्यं' इति क-ख. ११. 'शेषाणामर्थयोगेन' इति का. १२. 'विरामो' इति का. १३. 'विलम्बेते विरामेपि' इति क ख. १४. 'पदानाम्' इति का.

समीक्ष्य वृत्ते कर्तव्यो विरामो रसभावतः ॥ १३१ ॥
ये विरामाः स्मृताः काव्ये वृत्तपादसमुद्भवाः।
उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशाश्रयाः ॥ १३२ ॥
[ नापशब्दं पठेत् तज्ज्ञो भिन्नवृत्तेन चैव हि।
विश्रमेणाविरामेषु न काकुस्वरहीनकम् ॥ १३३ ॥
एवमेतत्स्वरकृतं कलातालल्यान्वितम्।
व्यपेतं वाक्यदोषैस्तु लक्षणाढ्यं गुणान्वितम् ॥ १३४ ॥
स्वरालंकारसंयुक्तं पठेत् काव्यं यथाविधि।
अलंकारविशेषा ये पाठ्यसंस्कृतसंश्रया[ः] ॥ १३५ ॥]
ते एव सर्वे कर्तव्याः स्त्रीणां पाठ्ये तु संस्कृतम्।
एवमेतत्स्वरकृतं कलातालल्यान्वितम् ॥ १३६ ॥
दशरूपविधाने तु पाठ्यं योज्यं प्रयोक्तृभिः।
यथा काकुविधानं तु यथावदनुपूर्वशः।
अत ऊर्ध्वं प्रवक्ष्यामि दशरूपविकल्पनम् ॥ १३७ ॥

इति श्रीभारतीये नाट्यशास्त्रे वागभिनये काकुस्वरविधानं नाम सप्तदशोऽध्यायः।

---

अष्टादशोऽध्यायः।

कथयिष्याम्यहं विप्रा दशरूपविकल्पनम्।
नामतः कर्मतश्चैव तथा चैव प्रयोगतः ॥ १ ॥
नाटकं समवकारणमङ्को व्यायोग एव च।
भाणः समवकारश्च वीथी प्रहसनं डिमः ॥ २ ॥

---

१. 'ते' इति का. २. 'दशपाद°' इति फ प. ३. 'तेऽर्थवशास्तदा' इति का. ४. श्लोकत्रयमेतत् श्लोकत्रयी क-प पुस्तकयोर्नास्ति. ५. 'ते सर्वे सम्प्रयोक्तव्याः स्त्रीणां पाठ्ये तु संस्कृते।' इति का. ६. 'स्वरयुतं' इति का. ७. 'कलाकाल°' इति फ प. ८. 'योज्यं पाठ्यं' इति का. ९. 'उक्त' इति का. १०. 'इति भारतीये नाट्यशास्त्रे वागङ्गाभिनये काकुस्वरव्यञ्जनो नाम एकोनविंशोऽध्यायः' इति का. ११. 'अथ विंशोऽध्यायः' इति का.

ईहामृगश्च विज्ञेयो दशमो नाट्यलक्षणे ।
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३ ॥
सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः ।
आभ्यो विनिःसृतं ह्येतद्दशरूपं प्रयोगतः ॥ ४ ॥
एतेषां जातिभिश्चैव स्वरा ग्रामत्वमागताः ।
यथा तथा वृत्तिभेदैः काव्यबन्धा भवन्ति हि ॥ ५ ॥
ग्रामौ पूर्णस्वरौ द्वौ तु यथा वै षड्जमध्यमौ ।
सर्ववृत्तिविनिष्पन्नौ काव्यबन्धौ तथा त्विमौ ॥ ६ ॥
ज्ञेयं प्रकरणं चैव तथा नाटकमेव च ।
पूर्ववृत्तविनिष्पन्नं नानाबन्धसमाश्रयम् ॥ ७ ॥
भाणः समवकारश्च तथेहामृग एव च ।
उत्सृष्टिकाङ्को व्यायोगो वीथी प्रहसनं डिमः ॥ ८ ॥
कैशिकीवृत्तिहीनानि रूपाण्येतानि कारयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि काव्यबन्धविकल्पनम् ॥ ९ ॥
प्रख्यातवस्तुविषये प्रख्यातोदात्तनायकं चैव ।
राजर्षिवंशचरितं तथैव दिव्याश्रयोपेतम् ॥ १० ॥
नानाविभूतिसंयुतमृद्धिविलासादिभिर्गुणैश्चैव ।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम ॥ ११ ॥
नृपतीनां यच्चरितं नानारसभावसंभृतं बहुधा ।

---

१. ईहामृगं च विज्ञेयं दशमं नाट्यलक्षणम्'. २. 'दशमे' डॉक्टर हॉल मुद्रितः पाठः. ३. 'काम्यानां' मुद्रितपाठः. ४. 'आभ्यो विनिःसृता ह्येतद्दशरूपे' इति का. ५. 'जातिभिः श्रुतिभिः' मु. का-पुस्तके च. ६. 'भेदाः' मु. ७. 'सर्ववृत्ति' मु. का-पुस्तके च. ८. 'नानावस्थान्तराश्रयम्' मु. 'नाट्यावस्थासमाश्रयम्' इति च का-पुस्तके. ९. 'वीथीचेहामृगस्तथा' इति का. १०. 'उत्सृष्टिकाङ्को' इति का. ११. 'डिमः प्रहसनं तथा' इति का. १२. 'मुद्रितपुस्तके आर्येयमनुष्टुभि परिणामिता, तथापि चतुर्थे पादे छन्दोभङ्गान्न मुच्यते. १३. 'प्रख्यातवस्तुविषयं' इति का. 'नायकम्' मु. १४. 'तथा च' इति का. 'तथा' मु. १५. 'युक्तं वृद्धिविलासादिभिश्चैव' मु. १६. 'तोटकम्' मु. १७. 'नानारसभावचेष्टितैर्बहुधा' इति का. १८. '°संभृतं' इति का.

सुखदुःखोत्पत्तिकृतं [1]भवति हि तन्नाटकं नाम ॥ १२ ॥
[2]अङ्कावस्थोपेतं कार्यं प्रसमीक्ष्य [4]बिन्दुविस्तारात् ।
[5]कर्तव्योऽङ्कस्तज्ज्ञैः स तु सम्यङ् नाटके विधिवत् ॥ १३ ॥
अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् ।
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥ १४ ॥
[ [3]अङ्कसमाप्तिः काव्यच्छेदो न बीजसंहारः ।
वस्तुव्यापी बिन्दुः काव्यसमुत्थोऽत्र नित्यं स्यात् ॥ १५ ॥]
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किंचिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ १६ ॥
ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः ।
नानावस्थान्तरितः कार्यस्त्वङ्को विकृष्टस्तु ॥ १७ ॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम् ।
[7]नैकरसान्तरविहितो [8]ह्यङ्क इति स [9]वेदितव्यस्तु ॥ १८ ॥
[ [10]पञ्चावरा दशपरा ह्यङ्का[:] स्युर्नाटके प्रकरणे च ।
निष्क्रामः सर्वेषां यस्मिन्नङ्कः स विज्ञेयः ॥ १९ ॥]
क्रोध[11]प्रमादशोकाः शापोत्सर्गो[12]ऽथ विद्रवोद्वाहौ ।
अद्भुतसंश्रयदर्शनमङ्के [13]प्रत्यक्षजानि स्युः ॥ २० ॥
युद्धं [14]राज्यभ्रंशो मरणं [15]नगरोपरोधनं चैव ।
[16]प्रत्यक्षाणि तु [17]नाङ्के प्रवेशकैः संविधेयानि ॥ २१ ॥

१. 'तज्ज्ञेयं नाटकं नाम' इति का. २. 'नानावस्थान्तरितो बिन्दोः संहारमान-मधिकृत्य । कर्तव्याङ्कोऽप्येवं सतु सम्यङ् नाटके तज्ज्ञैः ॥' इति का पुस्तके. ३. पद्यमिदं क-ख-पुस्तकयोर्नास्ति. ४. 'बिम्बप्रस्तारात्' मु. ५. 'कर्तव्योह.' मु. ६. 'यथार्थरस.' मु का-पुस्तके च. ७. 'नैकरसान्तर-' मु. ८. 'ह्यङ्क' मु., 'त्वङ्क' सतु वेदितव्यः स.' इति का. ९. 'विदितव्यस्तु' मु १०. पद्यमिदं क ख पुस्तकयोर्नास्ति. ११. 'प्रसाद' मु, का-पुस्तके च. १२. 'शापोत्सर्गोऽथ' इति का. १३. 'अद्भप्रत्यक्षजानि' इति का. १४. 'राज्यस्य' मु. १५ 'समरस्य रोधनम्' मु. 'नगररोधनं चैव' इति का. १६. 'प्रत्यक्षराणि' मु. 'अप्रत्यक्षकृतानि'. १७. 'नवाङ्के' मु.

अङ्के[1] प्रवेशकैर्वा[2] प्रकरणमाश्रित्य नाटके[3] वापि ।
न[4] वधः कर्तव्यः स्याद्यस्तत्र[5] स नायकः ख्यातः[6] ॥ २२ ॥

अवतरणमेव[7] कार्यं संधिर्वा ग्रहणमेव वा नित्यम् ।
बहुभिः[8] कार्यविशेषैः[9] प्रवेशकैः सूचयेद्वापि[10] ॥ २३ ॥

एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमाश्रित्य[11] ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ २४ ॥

एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान् ।
आवश्यकाविरोधेन[12] तत्र कान्यानि[13] कार्याणि ॥ २५ ॥

रङ्गं[14] तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तिमुक्तं कृत्वा कार्यं[15] यथार्थरसम् ॥ २६ ॥

ज्ञात्वा दिवसावस्थां[16] क्षणयाममुहूर्तलक्षणोपेताम्[17] ।
विभजेत्सर्वमशेषं पृथक्पृथक्कार्यमङ्केषु[18] ॥ २७ ॥

दिवसावसानकार्यं यद्यङ्के नोपपद्यते[19] सर्वम् ।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधेयं[20] हि ॥ २८ ॥

संनिहितनायकोऽङ्कः[21] कर्तव्यो नाटके प्रकरणे वा ।
परिजनकथानुबन्धः प्रवेशको[22] नाम विज्ञेयः ॥ २९ ॥

प्रकरणविषये[23] पञ्चाद्या.......दशपरास्तथा चैव ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ ३० ॥

---

१. 'अङ्कप्रवेशके वा' इति का. २. 'प्रवेशके' मु. ३. 'नाटकं' मु, का-पुस्तके च. ४. 'भवतः' मु. ५. 'तस्य स्यात्' इति का पुस्तके. ६. 'यत्र तु नायकः ख्यातः' इति का. ७. 'अवसरण' इति मु, 'अपसरणमेव' इति का. ८. 'सद्भिः' इति मु. ९. 'तैस्तैः कार्यविशेषैः' इति का. १०. 'स्तम्भैश्चापि' इति का. ११. 'अधिकृत्य' मु, का-पुस्तके च १२. 'आवश्यकाविरोधेन' इति क-ख. १३. 'कार्याणि इति क-ख. १४. 'रङ्गे' मु. १५. 'कार्ये' क-ख. १६. 'दिवसांस्थान्' इति का. १७. '°लक्षणोपेतम्' मु. 'लक्षणोपेतान्' इति का. १८. 'कार्यं' इति क-ख. १९. 'नोत्पद्यते' इति मु. २०. 'विधातव्यं' क-ख-का. २१. 'सविरहितनायकैकम्' इति मु. २२. 'प्रवेशके वापि कर्तव्यः' इति का. २३. एतदारभ्य तिस्र आर्या मुद्रितपुस्तके का-पुस्तके च न वर्तन्ते.

सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम ॥ १२ ॥
अङ्कावस्थोपेतं कार्यं प्रसमीक्ष्य बिन्दुविस्तारात्।
कर्तव्योऽङ्कस्तज्ज्ञैः स तु सम्यङ् नाटके विधिवत् ॥ १३ ॥
अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्।
नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः ॥ १४ ॥
[अङ्कसमाप्तिः काव्यच्छेदो न बीजसंहारः।
वस्तुव्यापी बिन्दुः काव्यसमुत्थोऽत्र नित्यं स्यात् ॥ १५ ॥]
यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः।
किंचिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ १६ ॥
ये नायका निगदितास्तेषां प्रत्यक्षचरितसंयोगः।
नानावस्थान्तरितः कार्यस्त्वङ्को विकृष्टस्तु ॥ १७ ॥
नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम्।
नैकरसान्तरविहितो ह्यङ्क इति स वेदितव्यस्तु ॥ १८ ॥
[पञ्चावरा दशपरा ह्यङ्का[:] स्युर्नाटके प्रकरणे च।
निष्कामः सर्वेषां यस्मिन्नङ्कः स विज्ञेयः ॥ १९ ॥]
क्रोधप्रसादशोकाः शापोत्सर्गोऽथ विद्रवोद्वाहौ।
अद्भुतसंश्रयदर्शनमङ्के प्रत्यक्षजानि स्युः ॥ २० ॥
युद्धं राज्यभ्रंशो मरणं नगरोपरोधनं चैव
प्रत्यक्षाणि तु नाङ्के प्रवेशके

---

१. 'तज्ज्ञेय नाटकं नाम' इति का. २ ... -मधिकृत्य। कर्तव्याङ्केऽप्येव सतु सम्य- ... क ख पुस्तकयोर्नास्ति ४ 'बिम्बप्रस्तारा-... मु का-पुस्तके च ७. 'नैकरसाम्बर–' मु ८. ... इति का. ९. 'विदितव्यस्तु' मु १०. पद्यमिद क ख ... मु, का पुस्तके च १२. 'शापोत्सर्गोऽथ' इति का. ... का. १४. 'राज्यस्य' मु १५ 'समरस्य रोधनम्' मु ... १६. 'प्रत्यक्षराणि' मु. 'अप्रत्यक्षकृतानि'. १७. 'नचाङ्के' मु.

[1]अङ्के [2]प्रवेशकैर्वा प्रकरणमाश्रित्य [3]नाटके चापि ।
[4]न वधः [5]कर्तव्यः [6]स्याद्यस्तत्र स नायकः ख्यातः ॥ २२ ॥

[7]अवतरणमेव कार्यं [8]संधिर्वा ग्रहणमेव वा नित्यम् ।
[9]बहुभिः कार्यविशेषैः प्रवेशकैः [10]सूचयेद्वापि ॥ २३ ॥

एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजम[11]आश्रित्य ।
आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ २४ ॥
एकाङ्केन कदाचिद्बहूनि कार्याणि योजयेद्धीमान् ।
आवश्यक[12]ाविरोधेन तत्र [13]काव्यानि कार्याणि ॥ २५ ॥
[14]रङ्गं तु ये प्रविष्टाः सर्वेषां भवति तत्र निष्क्रामः ।
बीजार्थयुक्तिमुक्तं कृत्वा [15]कार्यं यथार्थरसम् ॥ २६ ॥

ज्ञात्वा दिवसाव[16]स्थां क्षणयाममुहूर्तल[17]क्षणोपेताम् ।
विभजेत्सर्वमशेषं पृथक्पृथ[18]क्काव्यमङ्केषु ॥ २७ ॥
दिवसावसानकार्यं यद्यङ्के नोप[19]पद्यते सर्वम् ।
अङ्कच्छेदं कृत्वा प्र[20]वेशकैस्तद्विधेयं हि ॥ २८ ॥
[21]संनिहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे वा ।
परिजनकथानुबन्धः प्रवेशको[22] नाम विज्ञेयः ॥ २९ ॥
[23]प्रकरणविषये पञ्चाद्या........दशपरास्तथा चैव ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ ३० ॥

---

१. 'अङ्कप्रवेशके वा' इति का. २. 'प्रवेशके' मु ३. 'नाटक' मु, का पुस्तके च. ४. 'भवत' मु. ५ 'तस्य स्यात्' इति का पुस्तके. ६ 'यत्र तु नायकः स्यात' इति का. ७. 'अवसरण' इति मु, 'अपसरणमेव' इति का. ८. 'सद्भि' इति मु. ९. 'तैस्तैः कार्यविशेषै' इति का. १० 'सूचकैश्चापि' इति का. ११. 'अधिकृत्य' मु, का-पुस्तके च १२. 'आवश्यकावरोधेन' इति क ख. १३. 'कार्याणि' इति क ख. १४ 'रङ्गे' मु १५ 'कार्यं' क ख. १६. 'दिवसावस्थान्' इति का. १७ '°लक्षणोपेतम्' मु 'लक्षणोपेतान्' इति का. १८. 'कार्यं' इति क-ख. १९. 'नोत्पद्यते' इति मु २०. 'विधातव्य' क-ख-का. २१ 'सविरहितनायकेभ्य' इति मु २२ 'प्रवेशके चापि कर्तव्य' इति का. २३. एतदारभ्य तिस्र आर्या मुद्रितपुस्तके का पुस्तके च न वर्तन्ते.

अनयोरन्तरविहितः प्रवेशको यत्क्रियां समभिवीक्ष्य।
संक्षेपार्थः संधिस्त्वर्थानां संविधातव्यः॥ ३१॥
अनयोश्च बन्धयोगादन्यो भेदः प्रयोक्तृभिः कार्यः।
प्रख्यातस्त्वितरो वा नारीसंज्ञाश्रिते काव्ये॥ ३२॥
अङ्कच्छेदं कृत्वा मासकृतं वर्षसंचितं वापि।
तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित्॥ ३३॥
यः कश्चित्कार्यवशाद्गच्छति पुरुषः प्रकृष्टमध्वानम्।
तत्राप्यङ्कच्छेदः कर्तव्यः पूर्ववत्तज्ज्ञैः॥ ३४॥
अङ्कान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम्।
प्रकरणनाटकविषयप्रवेशकः संविधातव्यः॥ ३५॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः॥ ३६॥
कालोत्थानगतिरसौ व्यत्यासारम्भकार्यविषयाणाम्।
अर्थाभिधानपूर्वः प्रवेशकः स्यादनेकार्थः॥ ३७॥
टठडढणा मूर्धन्या अन्तःस्था यरलवाश्चेति।
विसर्जनीयः.............................॥ ३८॥
यस्मिन्स्थाने तु समो विज्ञेयः सवर्णसंज्ञोऽसौ।
शब्दप्रयोगविषये स्वरांस्तु भूयः प्रवक्ष्यामि॥ ३९॥
य इमे स्वराश्चतुर्दश निर्दिष्टास्तत्र वै दश समानाः।

---

१. 'अङ्कच्छेदम्' इत्यादि पद्यद्वयं का-पुस्तके 'संनिहितनायकोऽङ्कः' इत्यादि पद्यस्य पूर्वं वर्तते. २. 'कुर्यात्' का. ३. 'नामकृतं' मु. ४. 'च न तु क्वचित्' क-ख. ५. 'विहितोऽयम्' इति मु. ६. 'विषयोपदेशको नाम विज्ञेयः' मु. 'विषये प्रवेशको भवति काव्येषु' इति का-पुस्तके. ७. 'प्रयोगभाषाश्च कर्तव्यः' इति क-ख-पुस्तकयोः का-पुस्तके च. ८. '°रसवत्यासारसकाम–इति मु., 'कालार्थान्तरसङ्गव्यत्यासारम्भ' इति का-मुद्रिते. ९. 'व्याख्यासंरम्भ' इति क-ख. १०. 'आर्याभिधानयुत.' इति मु., 'अर्थाभिधानयुक्तः' इति क-ख. ११. 'टठड–' इत्यारभ्य 'प्रथमानः स इष्यते' इति पर्यन्तमष्टचत्वारिंशच्छ्लोका मुद्रितपुस्तके काशीमुद्रितपुस्तके च त्रुटिताः, अथैतेषामपि मध्ये क्वचित्क्वचित्त्रुटिर्वर्तत इति निपुणं विभावनीयम्.

पूर्वो ह्रस्वस्तेषां परश्च दीर्घो विधातव्यः ॥ ४० ॥
........................................................ ।
ए ऐ कण्ठतालव्यौ ओ औ तु कण्ठौष्ठ्याविति च ॥ ४१ ॥
इत्थं व्यञ्जनयोगैः स्वरैश्च साख्यातनामपदविहितैः ।
काव्यनिबन्धाश्च स्युर्धातुनिपातोपसर्गैस्तु ॥ ४२ ॥
उद्दिष्टं शब्दानां लक्षणमेतत्समासयोगेन ।
प्रकरणवशाद्धि तदहं विस्तरतः संप्रवक्ष्यामि ॥ ४३ ॥
तत्राहुः सप्तविधं षट्कारकसंयुतं प्रथितसाध्यम् ।
वचनं नामसमेतं पुरुषविभक्तं तथा स्यातम् ॥ ४४ ॥
प्रातिपदिकार्थयुक्ता धात्वर्थानुपसृजन्ति ये स्वार्थे ।
उपसर्गा ह्युद्दिष्टास्तस्मात्संस्कारतस्तस्मिन् ॥ ४५ ॥
प्रातिपदिकार्थयोगाद्धानुच्छन्दोनिरुक्तयुक्त्या च ।
यस्मिन्निपतति पादे तस्मात्प्रोक्ता निपातास्तु ॥ ४६ ॥
लोके प्रकृतिप्रत्ययविभागसंयोगतत्त्ववचनैस्तु ।
ते ते पूर्यन्तेऽर्थास्तेषु हि तच्चद्धितस्तस्मात् ॥ ४७ ॥
एकस्य बहूनां वा धातोर्लिङ्गस्य वा पदानां वा ।
यस्माद्विभजन्त्यर्थान्विभक्तयः कीर्तितास्तस्मात् ॥ ४८ ॥
विशिष्टास्तु स्वरा यत्र व्यञ्जनं वापि योगतः ।
संधीयते पदे यस्मात्तस्मात्संधिः प्रकीर्तितः ॥ ४९ ॥
एभिः शब्दविधानैर्विस्तारव्यञ्जनार्थसंयुक्तैः ।
पदबन्धाः कर्तव्या निबद्धबन्धास्तु चूर्णा वा ॥ ५० ॥
विभक्त्यन्तं पदं ज्ञेयं निबद्धं चूर्णमेव च ।
तत्र चूर्णपदस्येह संनिबोधत लक्षणम् ॥ ५१ ॥
अनिबद्धपदच्छन्दस्तथा चानियताक्षरम् ।
अर्थापेक्षाक्षरस्यूतं ज्ञेयं चूर्णपदं बुधैः ॥ ५२ ॥
निबद्धाक्षरसंयुक्तं यतिच्छेदसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं प्रमाणनियतात्मकम् ॥ ५३ ॥

एवं नानार्थसंयुक्तैः पदैर्वर्णविभूषितैः ।
चतुर्भिस्तु भवेद्युक्तं छन्दोवृत्ताभिधानवत् ॥ ५४ ॥
षड्विंशतिः शतान्येभिः पादैश्छन्दांसि संज्ञया ।
सममर्धसमं चैव तथा विषममेव च ॥ ५५ ॥
छन्दो ज्ञेयं समासेन त्रिविधं वृत्तमिष्यते ।
नानावृत्तविनिष्पन्ना शब्दस्यैषा तनुः स्मृता ॥ ५६ ॥
छन्दोहीनो न शब्दोऽस्ति न छन्दः शब्दवर्जितम् ।
एवं तूभयसंयोगो नाट्यस्याद्योनकस्मृतः(?) ॥ ५७ ॥
एकाक्षरं भवेदुक्तमत्युक्तं द्व्यक्षरं भवेत् ।
मध्यं त्र्यक्षरमित्याहुः प्रतिष्ठा चतुरक्षरा ॥ ५८ ॥
सुप्रतिष्ठा भवेत्पञ्च षड्गायत्री भवेदिह ।
सप्ताक्षरा भवेदुष्णिगष्टौ चानुष्टुबिष्यते ॥ ५९ ॥
नवाक्षरा तु बृहती पङ्क्तिश्चैव दशाक्षरा ।
[1]एकादशाक्षरा त्रिष्टुब्जगती द्वादशाक्षरा ॥ ६० ॥
त्रयोदशातिजगती शक्करीति चतुर्दश ।
अतिशक्करी पञ्चदश षोडशाष्टिः प्रकीर्त्यते ॥ ६१ ॥
अत्यष्टिः सप्तदश धृतिरष्टादशाक्षरा ।
एकोनविंशतिरति(धृतिः) कृतिर्विंशतिरेव च ॥ ६२ ॥
प्रकृतिरेकविंशत्या द्वाविंशत्याकृतिस्तथा ।
त्रयोविंशतिर्विकृतिरधिकैका तु संकृतिः ॥ ६३ ॥
एकाधिका चातिकृतिः षड्विंशत्यक्षरोत्कृतिः ।
अत ऊर्ध्वाक्षरं छन्दो मालावृत्तमिति स्मृतम् ॥ ६४ ॥
छन्दसां तु यथान्येषां भेदाः प्रस्तारयोगतः ।
असंख्येयपरीमाणा वृत्तसंख्या समाश्रिता ॥ ६५ ॥
गायत्री प्रकृतिश्चैषां प्रमाणं सम्प्रचक्षते ।
प्रयोगजानि पूर्वाणि प्रायशो न भवन्ति हि ॥ ६६ ॥

१. 'एकादश-' इत्यारभ्य '-अष्टादशाक्षरा' इति पर्यन्तं पाठ. क-पुस्तके नास्ति.

तिस्रः कोट्यो दश तथा सहस्राणां शतानि तु ।
चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु ॥ ६७ ॥
सप्तभिः सहितान्येव सप्त चैव शतानि च ।
षड्विंशतिर(रिहा)न्यानि व्याख्यातानि समासतः ॥ ६८ ॥
सर्वेषां छन्दसामेव त्रिकैर्वृत्तं प्रयोजयेत् ।
ज्ञेया अष्टौ त्रिकास्तत्र संज्ञाभिः स्थानमक्षरम् ॥ ६९ ॥
वर्णाक्षरो विधिर्वृत्तमिति च्छन्दोगतो विधिः ।
नैवातिरिक्तं हीनं वा यत्र संपद्यते सरम् ॥ ७० ॥
विधाने छन्दसामेषां संपदेताभिसंज्ञिता ।
यत्रार्थस्य समाप्तिः स्यात्स विराम इति स्मृतः ॥ ७१ ॥
पादस्य पचतेर्धातोश्चतुर्भागः प्रकीर्तितः ।
आयादिदैवतं प्रोक्तं स्थानं द्विविधमुच्यते ॥ ७२ ॥
शरीराश्रयसंभूतं दिगाश्रयमथापि च ।
ह्रस्वं दीर्घं प्लुतं चैव त्रिविधं चाक्षरं स्मृतम् ॥ ७३ ॥
श्वेतादयस्तथा वर्णा विज्ञेयाश्छन्दसामिह ।
तारश्चैव हि मन्द्रश्च मध्यश्च त्रिविधः स्वरः ॥ ७४ ॥
ध्रुवाभिधाने चैवास्य सम्प्रवक्ष्यामि लक्षणम् ।
विधिर्गणकृतश्चैव तथा पद्यकृतोऽपि च ॥ ७५ ॥
वृत्तमर्धसमं चैव विषमं सममेव च ।
सर्वेषामेव वृत्तानां तज्ज्ञैर्ज्ञेया गणात्मिकाः ॥ ७६ ॥
दिव्यो दिव्येतरश्चैव दिव्यमानुष एव च ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ॥ ७७ ॥
त्रिष्टुप् च जगती चैव दिव्योऽयं प्रथमो गणः ।
तथातिजगती चैव शक्वरी ह्यतिशक्वरी ॥ ७८ ॥
अष्टिरत्यष्टिरितरो धृतिश्चातिधृतिर्गणः ।
कृतिश्च प्रकृतिश्चैव ह्याकृतिर्विकृतिस्तथा ॥ ७९ ॥
संकृत्यतिकृती चैव [तुत्कृति,]र्दिव्यमानुषः ।

एतेषां छन्दसां भूयः प्रस्तारविधिसंश्रयम् ॥ ८० ॥
लक्षणं संप्रवक्ष्यामि नष्टमुद्दिष्टमेव च ।
प्रस्तारोऽक्षरमुद्दिष्टो मात्रोक्तश्च तथैव हि ॥ ८१ ॥
द्विकौ ग्लौ विनिपर्णोक्ता (?) मिश्रौ चेत्यपि मात्रिकौ ।
गुर्वधस्ताल्लघुं न्यस्य ततो द्विर्द्विर्यथोचितम् ॥ ८२ ॥
न्यसेत्प्रस्तारमार्गोऽयमक्षरोक्तस्तु नित्यशः ।
मात्रासंख्या विनिर्दिष्टा गणो मात्राविकल्पितः ॥ ८३ ॥
मिश्रौ ग्लाविति विज्ञेयौ पृथग्लक्ष्यविभागतः ।
मात्रागणो गुरूण्येव लघुनीयधुकैक च(?) ॥ ८४ ॥
आर्याणां स चतुर्मात्रा प्रस्तारः परिकीर्तितः ।
गीतकप्रभृतीनां च पञ्चमात्रः स इष्यते ॥ ८५ ॥
वेताली........................................ ।
................................................ ॥ ८६ ॥
बह्वाश्रयमपि कार्यं[1] प्रवेशकैः[2] सक्षिपेत्[3]तु संधिषु च ।
वहुपूर्णपद[4]वृत्तं जनयति खेद प्रयोगस्य ॥ ८७ ॥
यत्रार्थस्य समाप्तिर्न भवत्यङ्के[5] प्रयोगबाहुल्यात् ।
[6]वृत्तान्तः स्वल्पकथैः प्रवेशकैः सोऽभिधातव्यः ॥ ८८ ॥
[7]मध्यमपात्रैः कार्यो नित्यं विष्कम्भकस्तु विज्ञेयः ।
सस्कृतवचनानुगतः सक्षिप्तार्थः प्रवेशकवत् ॥ ८९ ॥
शुद्धः संकीर्णो वा द्विविध. खलु नाटके प्रयोगज्ञैः ।
मध्यमपात्रैः शुद्धः सकीर्णो नीचमध्यमकृतः ॥ ९० ॥
अङ्कान्तरे मुखे वा प्रकरणमाश्रित्य नाटके वापि ।
विष्कम्भकस्तु नियतः कर्तव्यो मध्यमैरथमैः ॥ ९१ ॥

---

१. '°मप्यर्थं' मु, का पुस्तके च. २. 'सक्षिप्तेऽर्थं तु' इति मु. ३. 'संक्षिपेच संधिषु च' इति का. ४. '°पदैर्युक्तं' इति मु, 'बहुचूर्णपादवृत्तं' इति क-ख. ५. 'भवेदङ्के' इति का. ६. 'विष्कम्भ खलकथ' इति मु., 'बहुवृत्तान्तोऽल्पकथैः प्रवेशकैः संविधातव्यः ।' इति का-पुस्तके. ७. इत प्रभृतिश्लोकत्रयी का-पुस्तकेऽधिका.

नै महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा ।
येनात्र कार्यपुरुषाश्चत्वारः पंञ्च वा ते स्युः ॥ ९२ ॥
कार्यं गोपुच्छाग्रं कर्तव्यं काव्यबन्धमासाद्य ।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः ॥ ९३ ॥
सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् ।
निर्वहणे कर्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥ ९४ ॥
नाटकलक्षणमेतन्मया समासेन कीर्तितं विधिवत् ।
प्रकरणमतःपरमहं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ९५ ॥
यत्र कविरात्मबुद्ध्या वस्तु शरीरं च नाटकं चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ॥ ९६ ॥
यदनर्थमपाहार्यं काव्यं कुरुते प्रभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ॥ ९७ ॥
यन्नाटके मयोक्तं वस्तु शरीरं चै वृत्तिभेदाश्च ।
तत्प्रकरणेऽपि कार्यं केवलमुत्पाद्यवस्तु स्यात् ॥ ९८ ॥
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ।
चरितं यत्रैकविधं ज्ञेयं तत्प्रकरणं नाम ॥ ९९ ॥
नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगैः ।

---

१. एतत्पूर्वम् 'शुद्ध सकीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेय' । मध्यमपात्र शुद्ध सकीर्णो नीचमध्यकृतः ॥' इत्यार्या मुद्रितपुस्तकेऽधिका. २. 'यत्तत्र' मु, 'ये तत्र कार्या ' इति का-पुस्तके. ३. 'पञ्चधा' मु. ४. एतत्पूर्वम् 'व्यायोगेहामृगसमवकार-डिमसचितानि कार्याणि । दशभिर्द्वादशभिर्वा षोडशभिर्वापि पुरुषै स्यु' ॥' इत्यार्या मुद्रितपुस्तकेऽधिका. 'गोपुच्छाग्र काव्यं' मु. ५. 'कर्तव्यं चन्धमासाद्य' इति क ख. ६. 'निर्वहणं कर्तव्यं' मु. ७. 'प्रकीर्तितम्' मु. 'विविधं' मु. ८. 'नायरं' क ख. ९. 'तज्ज्ञेयं प्रकरणं नाम' मु. 'प्रकरणमेतद् बुधैर्ज्ञेयम्' का. १०. 'यदनायकहार्य-कार्यं प्रकरोत्सद्भुतगुणयुक्तम् । प्रकरणमिति तद्विद्याद्बीजं बीजाश्रययुक्तम् ॥' मु 'यदनाय-कहार्यकार्यं काव्यं प्रकरोत्सद्भुतगुणयुक्तम् ।' का. ११. 'रसाश्रयोपेतम्' का., 'समा-श्रयोपेतम्' मु. १२. 'योज्य तल्लक्षण सर्वसंधिषु तु' क-ख. 'योज्यं' का. १३. 'यत्नै-कविधं' मु. 'यदनेकविधं तज्ज्ञेयं प्रकरणं नाम' का. १४. 'राजसभोगम् (?)' का.

वाह्यजनसंप्रयुक्तं ज्ञेयं त[1]त्प्रकरणं नाम ॥ १०० ॥
दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकरणोपेतम् ।
मन्दकुलस्त्रीचरितं का[2]व्यं कार्यं प्रयोगे तु ॥ १०१ ॥
सचिवश्रेष्ठिब्राह्मणपुरोहितामा[3]त्यसार्थवाहानाम् ।
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ॥ १०२ ॥
यदि वेशयुवतियुक्तं न कु[4]लस्त्रीसङ्गमर्हति तेतः ।
अत्र कुलजनप्रयुक्तं न वेशयुवतिर्भवेत्तत्र ॥ १०३ ॥
यदि [6]वा प्रकरणयुक्त्या वेशकुलस्त्रीकृतोपचारं(रः[7]) स्यात् ।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥ १०४ ॥
प्रकरणनाटकविषये [8]पञ्चाद्या दश परास्तथा चैव ।
अङ्काः कर्तव्याः स्युर्नानारसभावसंयुक्ताः ॥ १०५ ॥
[9]मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽपि तत्त्वज्ञैः ।
संस्कृतवचनानुगतः संक्षिप्तार्थः प्रवेशकवत् ॥ १०६ ॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकोऽपि वि[10]ज्ञेयः ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यकृतः ॥ १०७ ॥
अङ्कान्तरालविहितः [11]प्रवेशकार्थक्रिया समभिवीक्ष्य ।
[12]संक्षेपात्संधीनामर्थानां चैव कर्तव्यः ॥ १०८ ॥
अनयोश्च बन्धयोगादन्यो [13]भेदः प्रयोक्तृभिः कार्यः ।[14]
[15]प्रख्यातस्त्वितरो वा [16]नाटीसंज्ञाश्रिते काव्ये ॥ १०९ ॥

---

१. 'तज्ज्ञेय प्रकरण तज्ज्ञै' क-ख. 'विज्ञेय प्रकरण तज्ज्ञै' का. २. 'कार्यं काव्यं प्रकरणे तु' का. ३ 'सर्ववाहानाम्' क-ख. ४. 'कुलस्त्रीसगमो भवेत्तत्र' का. ५ 'तत्राप्यकुल' मु. ६. 'प्राकरण' मु 'कारणयुक्त्या' का. ७. 'वेशकुलस्त्रीसंगमो न स्यात्' का. ८. 'कर्विभि पद्याद्या दशपरार्थ' का. ९ 'इत प्रभृत्यार्याद्वयी' का-पुस्तके नास्ति १०. 'कर्तव्य.' मु ११ 'प्रवेशकोऽर्थक्रियामभिवीक्ष्य' मु 'प्रवेशिकार्थक्रियामभिवीक्ष्य' का. १२. 'संक्षेपार्थं संधिष्वर्थाना संविधातव्य' का. १३. 'एको' का. १४. 'ज्ञेय' का. १५ 'प्रत्याख्यातस्त्वितरो वा नाटकयोगे प्रकरणे च,' का. १६. 'नाटकयोगे प्रकरणे च' का.

स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी ।[2]
बहुगीतनृत्यवाद्यरतिसंभोगात्मिका चैव ॥ ११० ॥
राजोपचारयुक्ता प्रसादनक्रोधदम्भसंयुक्ता ।
[नायकदूती चापि देवीसंबन्धी नाटिका ज्ञेया ॥ १११ ॥
अन्तर्भावगता ह्येषा भावयोरुभयोरपि ।
अथ दशैतानि रूपाणि इत्युदितानि तु ॥ ११२ ॥]
प्रकरणनाटकनाटीलक्षणमुक्तं मया समासेन ॥ ११३ ॥
वक्ष्याम्यतःपरमहं लक्षणयुक्त्या समवकारम् ।
देवासुरबीजकृतः प्रख्यातोदात्तनायकश्चैव ॥ ११४ ॥
त्र्यङ्कस्तथा त्रिकपटः त्रिविद्रवः स्यात्त्रिशृङ्गारः ।
द्वादशनायकबहुलो ह्यष्टादशनाडिकाप्रमाणश्च ॥ ११५ ॥
वक्ष्याम्यस्याङ्कविधिं यावत्यो नाडिका यत्र ।
[अङ्कस्तु सप्रहसनः कालस्य यन्मुहूर्तमिति ।
तन्नाडिकाप्रमाणं यथोत्तमाङ्केषु संयोज्यम् ॥ ११६ ॥
या नाडिकेति संज्ञा कालविभागे क्रियाभिसंपन्ना ।
कार्या च सा प्रयत्नाद् यथाक्रमेणैव शास्त्रोक्ता ॥]
अङ्कस्तु सप्रसहनः सविद्रवः सकपटः सवीथीकः ॥ ११७ ॥
द्वादशनाडीविहितः प्रथमः कार्यः क्रियोपेतः ।
कार्यस्तथा द्वितीयः समाश्रितो नाडिकाश्चतस्रश्च ॥ ११८ ॥

---

१. प्रयोग' मु. २. 'विहितार्था' का. ३. 'प्रवृत्तगीतपाठ्या.' का. ४. 'कामोपचारयुक्ता' का. 'युक्त्या शृङ्गाराभिनयभावनाटिका ज्ञेया' मु. ५. 'प्रसाधनरोषसंयुतापि' का. ६. इतोऽग्रे पद्यद्वयी क-ख-पुस्तकयोर्नास्ति ७. 'परे लक्षण' मु. ८. 'लक्षणयुक्तं' का. ९. 'देवासुरबीजकृतं प्रख्यातोदात्तनायकं चैव' का. १०. 'अङ्कः' क-ख. ११. '-नायिकासमाप्यश्च' मु. '°प्रमाणं च' का. १२. 'अङ्क' इति त्रुटितं का-पुस्तके. १३. 'यत्रान्या नाडिका कार्या' का. १४. 'नाटिका' मु. १५. इतोऽग्रे पद्यद्वयी क-ख-पुस्तकयोर्नास्ति' १६. 'सवीथ्यङ्ग-' का. १७. 'द्वादशनाडिकयुक्तं प्रथमः कार्यो यथाशस्तु' का. १८. 'कार्यकृतोपेतः' मु., 'तु' का. २०. 'कार्यकृतोपेतः मु.

वस्तु[1]समापनविहितो द्विनाडिकः स्यात्तृतीयस्तु ।
[2]नाडीसंज्ञा ज्ञेया मानं कालस्य यन्मुहूर्तार्धम् ॥ ११९ ॥
[3]तन्नाडिकाप्रमाणं यथोक्तमङ्केषु संयोज्यम् ।
[4]अङ्कोऽङ्कस्त्वन्यार्थः कर्तव्यः काव्यबन्धमासाद्य ॥ १२० ॥
अर्थं[?] हि समवकारे [5]ह्यप्रतिसंधानमिच्छन्ति ॥ १२१ ॥
युद्धजलसंभवो वा वाय्वग्निजले[6]न्द्रसंभवो वापि ।
नगरोपरोधजो वा विज्ञेयो विद्रवस्त्रिविधः ॥ १२२ ॥
यस्तु गतिक्रमविहितो दैववशाद्वा परप्रयुक्तो वा ।
सुखदुःखोत्पत्तिकृतस्त्रिविधः कपटाश्रयो ज्ञेयः ॥ १२३ ॥
त्रिविधश्चात्र विधिज्ञैः पृथक्पृथक्कार्ययोगविहितार्थः ।
शृङ्गारः कर्तव्यो धर्मे चार्थे च कामे च ॥ १२४ ॥
[9]यत्र तु धर्मसमीपकमात्महितं भवति साधनं बहुधा ।
[10]व्रतनियमतपोयुक्तो ज्ञेयोऽसौ धर्मशृङ्गारः ॥ १२५ ॥
अर्थस्येच्छायोगाद्बहुधा चैवार्थतोऽर्थशृङ्गारः ।
[11]स्त्रीसंप्रयोगविषयेष्वयथार्थमपीष्यते [12]हि रतिः ॥ १२६ ॥
कन्याविलोभन[13]कृतं प्राप्तौ स्त्रीपुंसयोस्तु [14]रम्यं वा ।
[15]निभृतं सावेगं वा यस्य [16]भवेद्वा कामशृङ्गारः ॥ १२७ ॥
[17]उष्णिग्गायत्री वा वृत्तानि च यानि बन्धकुटिलानि ।

---

१. 'प्रमाणविहितो' का. २. 'ज्ञेयं तु नाडिकाख्यं' का. 'नाडी-' इत्यादिः 'संयोज्यम्' इत्यन्तः पाठः क-ख-पुस्तकयोर्नास्ति. ३. एतत् पद्यार्धं क-पुस्तके नास्ति. ४. 'अङ्कान्ते संबन्धः कर्तव्ये काव्य-' मु. ५. 'ह्यप्रतिसंबन्धम्' क ख., 'ह्यप्रतिबन्ध' मु. ६. 'ह्यग्निगजेन्द्रसंभ्रमकृतो' क-ख. ७. 'काव्य-' मु. ८. 'त्रिविधाकृतिशृङ्गारो ज्ञेयो धर्मार्थकामकृतः ।' इति का., 'त्रिविधकृतशृङ्गारो ज्ञेयो धर्मार्थकामेषु' मु. ९. 'यत्र तु धर्मे प्रार्थिनमात्रं हितं भवति साधितं बहुधा' । का. १०. 'प्रतिनियमतपोयुक्तं ज्ञेयोऽसौ धर्मशृङ्गारः' का. ११. 'सम्यक्प्रयोगविषयेष्वर्थोर्थिकान्यानि च चारयति यत्र' मु. १२. 'पौष्यतेऽभिरतिः' का. १३. 'विलोभनं वै प्राप्य' मु; 'विलोभनं वा प्राप्तं' का. १४. 'रहः' मु. १५. 'रम्यं वा निभृतं वा' मु. 'निभृतं वा सावेगं आनीयात् कामशृङ्गारम्' का. १६. 'विज्ञेय-' मु. १७. 'उष्णिग्गायत्र्या वा छन्द-सु' । क-ख. 'उष्णिगनुष्टुब् वा वृत्तानि च यानि बन्धकुटिलानि' इति च 'उष्णिग्गायत्री वा यानि तथान्यानि बन्धकुटिलानि' का.

तान्य[1]त्र समवकारे कविभिः[2] सम्यक्प्रयोज्यानि ॥ १२८ ॥
ए[3]वं कार्यस्तज्ज्ञैः सुखदुःखसमाश्रयः स[4]मवकारः ।
व[5]क्ष्याम्यतः परमहं लक्षणमीहामृगस्यापि ॥ १२९ ॥
दिव्यपुरुषाश्रय[कृ[6]तो दिव्यस्त्रीकारणोपगतयु[7]द्धः ।
सुविहितवस्तुनिबन्धो विप्रात्ययकारक]श्चैव ॥ १३० ॥
उद्धतपुरुषप्रायः स्त्रीरोषग्रथितकाव्यबन्धश्च ।
संक्षोभविद्रवकृतः संफेटकृतस्तथा चैव ॥ १३१ ॥
स्त्रीभेदनापह[10]रणा[प्र]मर्दनप्राप्तवस्तुशृङ्गारः ।
[य[11]त्र तु वधेप्सितानां वधोऽप्युदश्रयो भवेत्तु पुरुषाणाम् ।]
•ईहामृगस्तु का[12]र्यश्चतुरङ्कविभूषितश्चैव ॥ १३२ ॥
य[13]द्व्यायोगे कार्ये ये पुरुषा वृत्तयो रसाश्चैव ।
ईहा[14]मृगेऽपि तत्स्यात्केवलमत्र स्त्रिया योगः ॥ १३३ ॥
किंचिद्व्याजं कृत्वा तेषां युद्धं शमयितव्यम् ॥ १३४ ॥
ईहामृगस्य ल[15]क्षणमुक्तं विप्राः समासयोगेन ।
अ[16]थ वै डिमस्य लक्षणमतः परं प्रवक्ष्यामि ॥ १३५ ॥

---

१. 'वृत्तानि' मु.' का. २. 'कविभिर्नैव प्रयोज्यानि' का; 'कविभिस्तानि प्रयोज्यानि' मु. ३. 'एवं कार्यं तज्ज्ञैर्नानारसाश्रयं समवकारम्' इति पाठान्तरं क-ख पुस्तकयोः, 'कार्यस्तज्ज्ञै.' क-ख-मु. ४. 'समवकारे' मु. ५. 'अत ऊर्ध्वं व्याख्यास्ये' मु. ६. त्रुटितथायं पाठः क-ख-पुस्तकयोः. ७. '°कारणोपगतयुक्तः' मु. ८. 'वस्तुप्रहितो' मु. ८. 'विप्रलयकारकश्चैव' मु. ९. 'तथैव' मु. १०. 'हरणे प्रमर्देनाप्राप्तस्तु' मु. '°प्रमर्दसंप्राप्त' का. ११. 'पद्यार्धमिदमधिकं का पुस्तके एतत्परिवर्ते 'यत्र तु बन्धे नानावधो हि उदयो भवेद्धि पुरुषाणाम्' एतत्पद्यार्धं क-ख-पुस्तकयोः 'ईहामृगेऽपि तत्स्यात्' अस्योत्तरं वर्तते । 'वधेप्सितानां बन्धो' मु. १२. 'कार्यं सुसमाहितः काव्यबन्धश्च' क-ख. 'सुसमाहितकाव्यबन्धश्च' इति का. १३. 'यद्वा योगे कार्ये ये पुरुषा ये रसाश्च निर्दिष्टाः' इति का. १४. 'ईहामृगेऽपि ते स्युः केवलनेतृप्रयोगः' मु. 'ईहामृगेऽपि ते स्युः केवलमपरस्त्रियो यस्मिन्' का. १५. 'लक्षणमित्युक्तं चतुरङ्कमिदं समासयोगेन' मु. 'ईहामृगस्य लक्षणमिदमित्युक्तं मया समासेन ।' इति का. १६. 'डिमलक्षणं तु भूयो लक्षणयुक्त्या प्रवक्ष्यामि' मु. 'डिमलक्षणं च भूयोलक्षणयुक्त्या प्रवक्ष्यामि' का.

प्रख्यातवस्तुविषयः [1]प्रख्यातोदात्तनायकश्चैव ।
[2]षट्त्रिंशल्लक्षण[3]युक्तश्चतुरङ्को वै डिमः कार्यः ॥ १३६ ॥
शृङ्गारहास्य[4]वर्जं शेषैरन्यै रसैः समायुक्तः ।
दीप्तरसकाव्ययोनिर्[5]नानाभावोपसंपन्नः ॥ १३७ ॥
निर्घातोल्कापातैर्[6]उपरागेणेन्दुसूर्ययोर्युक्तः ।
[7]युद्धनियुद्धप्रहरणसंफेटककृतश्च कर्तव्यः ॥ १३८ ॥
[8]मायेन्द्रजालबहुलो बहुपुरुषो[9]त्थानयुक्तश्च ।
[10]देवभुजगेन्द्रराक्षसयक्षपिशाचावकीर्णश्च १३९ ॥
षोडशनायकबहुलः सात्त्वत्यारभटि[11]वृत्तिसंपन्नः ।
कार्यो डिमः प्रयत्नान्[12]नानाश्रयभावसंपन्नः ॥ १४० ॥
[[13]डिमलक्षणमित्युक्तं मया समासेन लक्षणानुगतम् ।
व्यायोगस्य तु लक्षणमतः परं संप्रवक्ष्यामि ॥ १४१ ॥]
[14]व्यायोगस्तु विधिज्ञैः [15]कार्यः प्रख्यातनायकशरीरः ।
[16]अल्पस्त्रीजनयुक्तस्त्वे[17]काहकृतस्तथा चैव ॥ १४२ ॥
[18]बहवस्तत्र च पुरुषाः कविभिः कार्या यथा समवकारे ।
न च [19]तत्प्रमाणयुक्ताः कार्या एकाङ्क एवायम् ॥ १४३ ॥

---

१. 'प्रख्यातोदात्तनायकोपेत.' का. २. 'षड्जकलक्षण' क-ख. 'षड्रसलक्षणे युक्तः' ३. 'युक्तः' मु. ४. 'वर्जित' मु. 'शृङ्गारहास्यवर्ज. शेषैरन्यै समायुक्त.' का. ५. 'नानाविनो डिमः कार्यः' मु. 'नानाभावान्वितश्चैव' का. ६. 'निर्घातचन्द्रसूर्योपरागसोल्कावपात-सयुक्तः' मु. का. 'रागेणेह सूर्ययो' क-ख; ७. 'युद्धनियुद्धनिबद्धसफेटस्तत्र कर्तव्य.' मु. 'युद्धनियुद्धघर्षण' क-ख. ८. 'माहेन्द्रजाल' क-ख. ९. 'भेदप्रयुक्तः' मु. १०. 'देवा-सुरराक्षसभूतयक्षनागाद्य पुरुषाः स्यु ।' का. ११. 'संयुक्त.' मु. का. १२. 'तज्ज्ञैर्ना-नाश्रयविशेष.' मु. 'तज्ज्ञैर्नानाश्रयविशेषेण' का. १३. एतत्पद्यं क-खपुस्तकयोर्नास्ति. १४. 'व्यायोग' सुविधि' मु. १५. 'कर्तव्य' ख्यातनायकशरीरः' का. १६. 'स्त्रीजन-युक्तस्तु डिमस्त्वेकाहकृतस्तथा चैव' मु. १७. 'स्त्वेकाव्यङ्क(?) स्तथा चैव' क-ख. १८. 'बहवस्तत्र तु पुरुषा व्यायच्छन्तो' मु. 'बहवश्च तत्र पुरुषा व्यायच्छन्ते यथा सम-वकारे ।' क-ख. १९. 'न च तत्प्रमाणस्तु तदेकाङ्कः सविधातव्यः ।' का. 'तत्प्रवण-स्त्वेकाङ्कः सविधातव्य.' मु.

न च दिव्यनायककृतः कार्यो राजर्षिनायकनिबद्धः ।
युद्धनियुद्धाक(ध)र्षणसंह(घ)र्षकृतश्च कर्तव्यः ॥ १४४ ॥
एवंविधस्तु कार्यो व्यायोगो दीप्तकाव्यरसयोनिः ।
वक्ष्याम्यतः परमहं लक्षणमुत्सृष्टिकाङ्कस्य ॥ १४५ ॥
प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् ।
दिव्यपुरुषैर्वियुक्तः शेषैरन्यै(र्युक्तो)र्भ(भ)वेत्पुंभिः ॥ १४६ ॥
करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ।
स्त्रीपरिदेवितबहुलो निर्वेदितभाषितश्चैव ॥ १४७ ॥
नानाव्याकुलचेष्टः सात्त्वत्यारभटिकैशिकीहीनः ।
कार्यः काव्यविधिज्ञैः सततं ह्युत्सृष्टिकाङ्कस्तु ॥ १४८ ॥
यद्दिव्यनायककृतं काव्यं संग्रामबन्धवधयुक्तम् ।
तद्भारते तु वर्षे कर्तव्यं काव्यबन्धेषु ॥ १४९ ॥
कस्माद्भारतमिष्टं वर्षेष्वन्येषु देवविहितेषु ।
हृद्या सर्वा भूमिः शुभगन्धा काञ्चनी येस्मात् ॥ १५० ॥
उपवनगमनक्रीडाविहारनारीरतिप्रमोदाः स्युः ।
तेषु हि वर्षेषु सदा न तत्र दुःखं न वा शोकः ॥ १५१ ॥
ये तेषामपि(धि)वासाः पुराणवादेषु पर्वताः प्रोक्ताः ।
संभोगस्तेषु भवेत्कर्मारम्भो भवेदस्मिन् ॥ १५२ ॥

---

१. 'नवदिव्यनायकहृत.' फ-ख; 'नरदिव्य' मु. २. 'निबद्धम्' मु. ३. 'धर्षण-संफेट' मु. 'युद्धनियुद्धाधर्षणसंघर्षाणि कर्तव्य ।' का. ४. 'विषयोऽप्र' मु. ५. 'बद्धो' मु. ६. 'स्तु' मु. ७. 'देवन' मु का. ८. 'वाक्यमभाषण' मु. ९. 'नाति-व्यायतचेष्टम्' मु. १०. 'कर्तव्योऽभ्युदयान्तस्त्वङ्कस्तूत्सृष्टिकाङ्कस्तु ।' का. ११. 'चोत्सृ-ष्टिकाङ्कस्तु' मु १२. 'क्षमम्' मु. १३. 'कार्यम्' मु. १४. 'संग्राममुद्दण्डपवधयुक्तम्' क-ख. १५. 'तस्मात्' का. १६. 'निलक्ष्टं हि' मु. 'निलघलं हि' का. १७. 'चैव' मु. १८. 'नो दुःखं नापि वा शोकः' मु., 'न वा शोकम्' का. १९. 'यस्तेषा-मधिवास.' मु. २०. 'पर्वतः कथिता.' मु 'पर्वता गदिता.' का. २१. 'कर्मारम्भास्तथा-प्यस्मिन्' मु.

[अङ्कस्य लक्षणगतं व्यायेशतं शेषमात्रगतम्।
प्रहसनमेतः परमहं सलक्षणं संप्रवक्ष्यामि ॥ १५३ ॥]
प्रहसनमपि विज्ञेयं द्विविधं शुद्धं तथा च संकीर्णम्।
वक्ष्यामि तयोर्युक्त्या पृथक्पृथग्लक्षणविशेषम् ॥ १५४ ॥
भगवत्तापसविप्रैरन्यैरपि हास्यवादसंबद्धम्।
कापुरुषसंप्रयुक्तं परिहासाभाषणप्रायम् ॥ १५५ ॥
अविकृतभाषाचारं विशेषभावोपपन्नरचित(चरित)पदम्।
नियतगतिवस्तुविषयं शुद्धं ज्ञेयं प्रहसनं तु ॥ १५६ ॥
वेश्याचेटनपुंसकविटधूर्ता बन्धकी च यत्र स्युः।
अनिभृतवेषपरिच्छदचेष्टितकरणैस्तु संकीर्णम् ॥ १५७ ॥
लोकोपचारयुक्ता या वार्ता यश्च दम्भसंयोगः।
तत्प्रहसनेषु योज्यं धूर्तैर्विवादसंयुक्तम् ॥ १५८ ॥
वीथ्यङ्गैः संयुक्तं कर्तव्यं प्रहसनं यथायोगम्।
भाणस्यापि तु लक्षणमतः परं संप्रवक्ष्यामि ॥ १५९ ॥
आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषेषु (वस्तु)।
द्वि(वि)विधाश्रयो हि भाणो विज्ञेयस्त्वेकहार्यश्च ॥ १६० ॥

---

१. पद्यमिदं क ख-पुस्तकयोर्नास्ति. २. 'मिति' मु. ३. 'तथैव' का. ४. 'तस्य व्याख्यास्याम्यहं पृथ' मु; 'तस्य व्याख्यास्येहं पृथक् पृथक् लक्षणविशेषान्।' का. ५. 'विशेषान्' मु. ६. 'भगवत्तापसभिक्षुश्रोत्रियविप्रादिहासंसंयुक्तम्' का. ७. 'संपन्नम्' मु. ८. 'नीचजनसंयुक्तं' मु. 'नीचजनसंप्रयुक्तं' का. ९. 'हासोपहास' मु. 'पहास' का. १०. 'वेश्यानपुंसकविटैर्वानिकदासीजनेन वा कीर्णम्' मु. ११. 'धूर्तविटा' का. १२. 'अनिभृत' मु. १३. 'य च परिच्छदाचटितकरणे' क ख. १४. 'चेष्टितकरणात्तु' का. १५. 'संपन्नम्' मु. १६. 'स प्रहसने न योज्यो धूर्तजनविवादसंयुक्तः' मु; 'तत्प्रहसने प्रयोज्य' का. १७. 'धूर्तविटविवादसंपन्नम्' का. 'स प्रहसने न योज्यो धूर्तप्रविवादसंपन्नः' ख. मु. १८. 'उद्धात्यकादिभिरिदं वीथ्यङ्गैर्मिश्रितं भवति मिश्रम्' मु; 'उद्धात्यकादिभिरिदं वीथ्यङ्गैः मिश्रितं भवेन्मिश्रम्।' का. १९. 'भाणस्य विधानमतो लक्षणयुक्त्या प्रवक्ष्यामि' मु. २०. 'हि' का. २१. 'संस्तव' मु. २२. 'वर्णनाविशेषश्च' मु. का. २३. 'द्वियो हि' मु. 'विविधाश्रयो' का. २४. 'पात्रश्च' मु.

परवचनमात्मसस्थं प्रतिवचनैरुत्तरोत्तरग्रथितैः(तैः) ।
आकाशपुरुषकथितैरङ्गविकारैरभिनेयैः[ श्चैव ] ॥ १६१ ॥
धूर्तविटसंप्रयोज्यो नानावस्थान्तरात्मकश्चैव ।
एकाङ्को बहुचेष्टः सततं कार्यो बुधैर्भाणः ॥ १६२ ॥
[ भाणस्यापि हि निखिलं लक्षणमुक्तं तथागमानुगतम् ।
वीथ्याः संप्रति निखिलं कथयामि यथाक्रमं विप्राः ॥ १६३ ॥ ]
अधमोत्तममध्याभिर्युक्ता स्यात् प्रकृतिभिस्तिसृभिः ।
वीथी स्यादेकाङ्का तथैकहार्या द्विहार्या वा ॥ १६४ ॥
सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ।
अङ्गानां वक्ष्येऽहं लक्षणमखिलं यथादेशम् ॥ १६५ ॥
उद्घात्यकावलगिता (लगिता) वस्यन्दितनालिसंप्रलापाश्च ।
वाक्केल्यथ प्रपञ्चो मृदवाधिबले छलत्रिगते ॥ १६६ ॥
व्याहारो गण्डश्च त्रयोदशाङ्गान्युदाहृतान्यस्याः ।
अथ वीथ्याः संप्रोक्ता लक्षणमेषां प्रवक्ष्यामि ॥ १६७ ॥
पदानि त्वंगतार्थानि यत्तरा ('ये नराः') पुनरादरात् ।

---

१ 'प्रतिवचनैः सोत्तरैर्ग्रथितवाक्यम्' मु. 'परवचनैरुत्तरोत्तरैर्ग्रथितैः' फा. २ 'इदमार्यार्धं मुद्रिते नास्ति. ३. 'अङ्गविकारैरभिनेयैस्तत्' फा. ४ एषार्या फ-रा-पुस्तकयोर्नास्ति । ५. 'बहुसमाढ्यः कार्यं सततं काव्ये बुधैर्भाणः' मु इदमार्यार्धं मुद्रिते नास्ति. ६. 'सर्वरसलक्षणाढ्या युक्ता ह्यङ्गैस्त्रयोदशभिः ।' इत्यधिकमत्र फ. रा-पुस्तकयोः । ७ 'द्विपात्रहार्याथवैकहार्या वा' मु फा. ८ 'उद्घात्यकावलगिते तथावस्यन्दितमेव च । असत्प्रलापश्च प्रपञ्चो नालिकापि च ॥ वाक्केल्यधिबलं चैव छलं व्याहार एव च । मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा । त्रयोदशाङ्गान्येतानि वीथ्यामेतानि योजयेत् ॥ लक्षणं पुनरेतेषां प्रवक्ष्याम्यनुपूर्वशः ।' इत्येवं पाठभेदः फा. पुस्तके । इत प्राक् 'अधमोत्तममध्याभिर्युक्ता स्यात्प्रकृतिभिस्तिसृभिः ॥ सर्वरसलक्षणयुक्ता विज्ञेया वीथिका ह्यर्थे तस्याः । अङ्गानां वक्ष्येऽहं लक्षणमधुना यथोद्देशम् ॥' इति सार्धार्या मुद्रितपुस्तकेऽधिका. 'उद्घात्यकावलगिते अवस्यन्दितकं तथा । असत्प्रलापश्च तथा प्रपञ्चो नालिकापि वा ॥ वाक्केल्यधिबलं चैव छलं व्याहार एव च । मृदवं त्रिगतं चैव ज्ञेयं गण्डमथापि वा ॥' इत्येवं मु. ९. आर्यार्धमिदं मुद्रितपुस्तके फा. पुस्तके च नास्ति. १०. 'च गतार्थानि तदर्थगत्ये नरः' मु. ११. 'ये नराः पुनरादरात्' फा.

योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥ १६८ ॥
यत्रान्यस्मिन्समावेश्य कार्यमन्यत्प्रसाध्यते ।
तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः ॥ १६९ ॥
आक्षिप्तार्थे (प्तेऽर्थे) तु कस्मिंश्चिच्छुभाशुभसमुत्थितम् (ते) ।
कौशलारू (दु) च्यतेऽन्यार्थे (न्योऽर्थः) तदवस्पन्दितं भवेत् ॥१७०॥
[ असंबद्धं तु यद्वाक्यमसम्बद्धमथोत्तरम् ।
असत्प्रला ( ला ! ) पितं चैव वीथ्यां सम्यक् प्रयोजयेत् ॥ १७१ ॥
मूर्खजनसंनिकर्षे विद्वानन्यत्र भाषते सम्यक् ।
वचनं न गृह्यतेऽस्य सञ्ज्ञेयोऽसत्प्रलापस्तु ॥ १७२ ॥
यदसंद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परतः ।
एकस्य चार्थहेतोः सहास्यजननः प्रपञ्चस्तु ॥ १७३ ॥ ]
हास्येनोपगतार्था प्रहेलिका नालिकेति विज्ञेया ।
एकद्विप्रतिवचनौ वाकेली स्यात्प्रयोगेऽस्मिन् ॥ १७४ ॥
मूर्खजनसंनिकर्षे हितमपि यत्र प्रभाषते विद्वान् ।
न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ॥ १७५ ॥
यदतो संभृत( यदसद्भूतं )वचनं सथं(स्त)वयुक्तं द्वयोः परस्परं यत् ।
एकस्य चार्प ( र्थ ) हेतोः स हास्यजननः प्रपञ्चः स्यात् ॥ १७६ ॥
यत्कारणाद्गुणानां दोषीकरणं भवेद्विवादकृतम् ।
दोषगुणीकरणं वा तन्मृदवं नामापि विज्ञेयम् ॥ १७७ ॥

१. 'प्रशस्यते' का. २. 'परानुरोधात्तज्ज्ञेयं नाम्नावलगितं बुधैः' मु. 'तच्चावलितत' क-ख. ३. 'आक्षिप्य कंचिदेवार्थं शुभाशुभं' मु. आक्षिप्य कंचिदर्थं शुभाशुभसमुत्थितम् ।' का. ४. 'यद्वाद्यबुद्धिनैपुण्यात्' मु. 'यत्ख्यजेद् बुद्धिवैशाद्यात्' का. ५. कोष्ठरबद्धा पद्यत्रयी क ख-पुस्तकयोर्नास्ति. इतः प्राक् 'असंबद्धं तु यद्वाक्यमसंबद्धं यदुत्तरम् । असत्प्रलापस्तं चैव वीथ्यां सम्यक्प्रयोजयेत् ॥' इत्यधिकं मु. ६. '°नाला केलीं नाम जानीयु । मु. '°नात् वाक्केळिका नाम तामाह' का. ७. 'वचनं न गृह्यतेऽस्य संज्ञेयोऽसत्प्रलापस्तु' का. ८. 'यदसत्संभूतं वचनं' मु. ९. 'सस्तव' मु. १०. 'परस्परतः' मु. ११. 'प्रपञ्चस्तु' मु. १२. 'यद्गुणदोषीकरणं दोषगुणीकरणमेव च । येर्हेतुभिरपपन्नार्थैस्तन्म्' मु. १३. 'मृदवमपि' क ख.

परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्र ।
अन्योन्यार्थविशेषकमधिबलमिति तद्बुधैर्ज्ञेयम् ॥ १७८ ॥
अन्यार्थमेव वाक्यं छलमभिसंधानहास्यरोषकरम् ।
श्रुतिमाधुर्यार्थात्मनि बहवोऽर्था युक्तिभिर्नियुज्यन्ते ॥ १७९ ॥
एतद्धास्य(यद्धास्य)महास्यं वा त्रिगतं नामापि विज्ञेयम् ।
प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः ॥ १८० ॥
संरम्भसंभ्रमयुतं विवादयुक्तं तथापवादकृतम् ।
बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञाः ॥ १८१ ॥
(अन्यान्यपि लास्यविधावङ्गानि तु नाटकोपयोगानि ।
अस्माद्विनिःसृतानि तु भाण इवैकप्रयोज्यानि ॥ १८२ ॥
गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका ।
प्रच्छेदकत्रिमूढाख्यं सैन्धवं च द्विमूढकम् ॥ १८३ ॥
उत्तमोत्तमकं चैव उक्तप्रत्युक्तमेव च ।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणम् ॥ १८४ ॥
आसनेषूपविष्टैर्यत्तन्त्रीभाण्डोपबृंहितम् ।
गायनैर्गीयते शुष्कं तद्गेयपदमुच्यते ॥ १८५ ॥
प्राकृतं या वियुक्ता तु पठेदासनसंस्थिता ।
मदनानलतप्ताङ्गी स्थितिपाठ्यं तदुच्यते ॥ १८६ ॥

१. 'अन्यार्थ' मु. २. 'बहुविधे' मु. ३ 'मिति' मु ४. 'शेष' फ-र. ५. 'यथानुदात्तवचनं त्रिधा विमर्श भवेत्प्रयोगे तु । हास्यरससंप्रयुक्तं त्रिगतं नाम विज्ञेयम् ॥' मु. ६. 'कथितो' मु. ७. 'गण्डमिति वदन्ति' मु ८. धनुश्चिह्नान्तर्गतपाठः केवलं मुद्रितपुस्तकानुसारेण लिखित, लिखितादर्शपुस्तकयोस्तु नात्राध्याये स्थितानुपलभ्यते. ९. 'तत्पाठ' फ-र. १०. 'गेयं पदं स्थितं पाठ्य' फ-र. ११. 'त्रिमूढाख्यं' फ-र. १२. 'सैन्धवाख्यं द्विमूढकम्' फ-र. १३. 'मुत्तमम्' फ-र.

१४. 'यत्तु वीणामाश्रित्य पदपाणिवादनयुगम् ।
यत्पदच्छेदेन वा युक्तं स्थितिपाठ्यं निगद्यते ॥' मु.
प्राकृतं यद्वियुक्तं तु पठेदासनसंस्थिता ।
मदनानलतप्ताङ्गी स्थितपाठ्यं निगद्यते ॥' फ-र.

आसीनमास्यते यत्र चिन्ताशोकसमन्वितम्।
अप्रसारितगात्रं च जिह्मदृष्टिनिरीक्षितम्॥ १८७॥
यत्र स्त्री नरवेषेण ललितं मस्कृतं पठेत्।
सखीनां तु विनोदाय सा ज्ञेया पुष्पगन्धिका॥ १८८॥
प्रच्छेदकः स विज्ञेयो यत्र चन्द्रातपाहता।
स्त्रियः प्रियेषु सज्जन्ते ह्यपि विप्रियकारिषु॥ १८९॥
अनिष्ठुरश्लक्ष्णपदं समवृत्तैरलंकृतम्।
नाट्यं पुरुषभावाढ्यं त्रिमूढकमुदाहृतम्॥ १९०॥
पात्रविस्मृतसंकेतं सुव्यक्तकरुणान्वितम्।
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः॥ १९१॥
शुभार्थगीताभिनयं चतुरस्रपदक्रमम्।
स्पष्टभावरसोपेतं व्याजचेष्टं द्विमूढकम्॥ १९२॥

---

१ 'आसीनमासनस्थस्य सर्वतोद्यविवर्जितम्।
अप्रसारितगात्रं च चिन्ताशोकान्वितं च यत्॥' मु.
'आसीनमास्यते यत्र सर्वतोद्यविवर्जितम्।
अप्रसारितगात्रं च चिन्ताशोकसमन्वितम्॥' क. ख.

२ 'नृत्तं तु द्विविधं यत्र गीतमातोद्यमेव च।
स्त्रियः पुंवच्च चेष्टन्ते सा ज्ञेया पुष्पगण्डिका॥' मु.
'नृत्तानि विविधानि स्युर्गेयं गानं च संततम्।
चेष्टामिश्राश्रयं पुंसां यत्र सा पुष्पगण्डिका॥' क. ख.

३ '°श्लक्ष्णपदं' मु. ४ '°मिति स्मृतम्' क. ख.
'श्लवावादिसंयुक्तमव्यक्तकरणाश्रयम्।
पाठ्यं तु स्वभावोक्त्या विदुः सैन्धवकं बुधाः॥' मु.
'पात्रं विभ्रष्टसंकेतं सुव्यक्तकरणान्वितम्।
प्राकृतैर्वचनैर्युक्तं विदुः सैन्धवकं बुधाः॥' क. ख.

५ 'मुखप्रतिमुखोपेतं चतुरस्रपदक्रमम्।
स्पष्टभावरसोपेतं नानार्थं च त्रिमूढकम्॥' मु.
'मुखप्रतिमुखोपेतं चतुरस्रपदक्रमम्।
स्पष्टभावरसोपेतं श्लिष्टार्थं च द्विमूढकम्॥' क. ख.

उत्तमोत्तमकं विद्यादनेकरससंश्रयम् ।[1]
विचित्रैः श्लोकबन्धैश्च हेलाभावविभूषितम्[2] ॥ १९३ ॥
[ यदि प्रतिकृतिं दृष्ट्वा विनोदयति मानसम् ।[3]
मदनानलतप्तं तु विचित्रपदमुच्यते ॥ १९४ ॥]

कोपप्रसादजनितं[4] साधिक्षेपपदाश्रयम् ।
उक्तप्रत्युक्तमेवं स्यात् किंतु गीतार्थयोजितम् ॥ १९५ ॥
[ दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता ।
करोति विविधान् भावान् तद्वै भावितमुच्यते ॥ १९६ ॥ ]
एतद्वै लास्यविधौ लक्षणमुक्तं मया तु विस्तरतः ।
यद(दि)हैव तु यन्नोक्त प्रसङ्गविनिवृत्तिहेतोस्तु ॥ १९७ ॥)
इति दशरूपविधानं सर्वं प्रोक्तं मयातिलक्षणतः ।
[13] इतिवृत्तद्विविधान सधिविधौ लक्षणं वक्ष्ये ॥ १९८ ॥

[14] इति भारतीये नाट्यशास्त्रे दशरूपलक्षणं नामाध्यायोऽष्टादश ॥

---

१. 'अनेककरणान्वितम्' मु　२. 'लीलाभावविभूषितम्' मु 'हेलाहावविचिन्तितम्' क-घ.

३. 'यत्राप्रयोकृतं (?) दृष्ट्वा विनोदयति मानसम् ।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥' क-घ.

४ 'कोपप्रसादजननमधिक्षेप (प्य!) जनाश्रयम् ।
उक्तप्रत्युक्तमेवं स्याच्चित्रगीतार्थयोजितम् ॥' मु.

५. '°जननं' क-ख. ६. 'सविक्षेपपदाश्रयम्' क-घ. ७. '°एवं स्याच्चित्रगीतार्थयोजितम्' मु.

८. 'भाणामुखतिलासं (?) विज्ञेयं त्वेकपात्रिकार्थत्वात् ।
प्रकरणवदुक्तकाव्यं सत्त्वयुक्तं द्विविधभावात् ॥ मु.

९. 'यत्तु' क ख. १०. 'भावास्तस्माद्भाविकमुच्यते ॥' क ख. ११. 'लास्यविधौ एतेषां' मु. क ख. १२. 'मया हि लक्षणतः' मु. १३. 'इतिवृत्तद्विविधानसधिविलक्षणां वक्ष्ये' (?) का. 'पुनरस्य शरीरगत' १४. 'इति भारतीये नाट्यशास्त्रे दशरूपविधानं नामाध्याय एकोनविंशः ।' क-घ., 'इति भारतीये नाट्यशास्त्रे दशरूपविधानं नाम विंशोऽध्यायः ।' इति भारतीये नाट्यशास्त्रे दशरूपलक्षणं नामोध्यायोऽष्टादश ।' मु.

एकोनविंशोऽध्याय.।

इतिवृत्तं तु[1] नाट्यस्य शरीरं परिकीर्तितम्।
पञ्चभिः संधिभिस्तस्य विभागः[2] सम्प्रकल्पितः॥ १।
इतिवृत्तं द्विधा[3] चैव बुधस्तु परिकल्पयेत्।
आधिकारिकमेकं तु[4] प्रासङ्गिकमथापरम्॥ २॥
यत्[7] कार्यं हि फलप्राप्त्या समर्थं[8] परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत् प्रासङ्गिकं विदुः॥ ३॥
कवेः प्रयत्नान्नेतॄणां युक्तानां विध्यपाश्रयात्।
कल्प्यते हि[7] फलप्राप्तिः समुत्कर्षात् फलस्य च[5]॥ ४॥
कारणात् फलयोगस्य वृत्तं स्यादाधिकारिकम्।
तस्योपकरणार्थं[9] तु कीर्त्यते ह्यानुषङ्गिकम्॥ ५॥
[[10] लौकिकसुखदुःखाख्या यथावस्था रसोद्भवा।
दशधा मन्मथावस्था व्यवस्था त्रिविधा मता॥ ६॥]
[11] ससाध्ये फलयोगे[12] तु व्यापारः साधकस्य[13] यः।
तस्यानुपूर्व्या[14] विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः॥ ७॥
[नाट्यप्रकरणा[15] भावा अवस्थास्ता मता इह।
धर्मार्थकामसंबन्धः फलयोगस्तु कथ्यते॥ ८॥]
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः॥ ९॥

---

१. 'हि' मु. २. 'विभागाः परिकीर्तिता.' का., 'विभागा सप्रलक्षित' मु. ३. 'द्विजा' (?) मु. ४. 'परिवर्जयेत्' का., '५. "°एवं स्यात्' मु. क-ख. ६. इत प्रभृति पद्यद्वयी लिखितपुस्तके नास्ति। ७. 'यत्' का. ८. 'तु' मु. ९. 'परोपकरणार्थं तु' का. १०. पद्यमिदमधिकं का. पुस्तके. ११. लिखितादर्शे श्लोकतः पूर्वं 'कल्प्यते हि फलप्राप्तिः समुत्कर्षः फलस्य च। कल्प्ये प्रयत्नोन्नेतॄणां युक्तानां विध्य (ध्य?) पाश्रयात्॥' इत्युपलभ्यते.' १२. 'फलसाध्ये' मु. १३. 'कारकस्य' मु. 'करकणस्य' क-ख. १४. 'तस्यानुपूर्व्यात्' मु. १५. पद्यमिदं का. पुस्तक एवोपलभ्यते।

औत्सुक्यमात्रं बन्धस्य यद् बीजस्य निबध्यते ।
महतः फलयोगस्य सोऽत्र प्रारम्भ इष्यते ॥ १० ॥

अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।
परं चौत्सुक्यगमनं प्रयत्नः परिकीर्तितः ॥ ११ ॥

ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्प्यते ।
भावमात्रेण सं ( तं ) प्राहुर्विधिज्ञाः प्राप्तिसंभवम् ॥ १२ ॥

नियतां तु फलप्राप्तिं यदा भावेन पश्यति ।
नियतां तां फलप्राप्तिं सगुणाः परिचक्षते ॥ १३ ॥

अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
इतिवृत्ते भवेद्यस्मिन्फलयोगः प्रकीर्तितः ॥ १४ ॥

सर्वस्ये( स्यै )व हि कार्यस्य प्रारब्धस्य फलार्थिभिः ।
एता अनुक्रमेणैव पञ्चावस्था भवन्ति हि ॥ १५ ॥

तासां स्वभावभिन्नानां परस्परसमागमात् ।
विन्यास एकभावेन फलहेतुः प्रकीर्तितः ॥ १६ ॥

इतिवृत्तं समाख्यातं प्रत्यगेवाधिकारिकम् ।
तदारम्भादि कर्तव्यं फलान्तं च यथा भवेत् ॥ १७ ॥

---

१. 'औत्सुक्यं बन्धमात्रस्य' मु. 'औत्सुक्यमात्रबन्धस्तु' का. २. 'यो' मु. क-ख. ३. 'स खल्वारम्भ' मु, का. ४. 'व्यापारो यः' का. ५. 'संप्रकीर्तितः' मु. 'स प्रयत्नः प्रकीर्तितः' का. ६. 'ईषत्प्राप्तिश्च या काचिदर्थस्य परिकल्पते' का. ७. 'यदौचित्यं फलस्य' मु. ८. 'सज्ज्ञेयो विधिज्ञैः प्राप्तिसंभव.' का. ९. 'रूपक्रियाफलप्राप्तिर्यदा' मु. १०. 'च' का. ११. 'यत्र' का. १२. 'सगुणा' मु. 'सगुणस्तु विनिर्दिशेत्' का. १३. 'इति योगे' मु, 'यद् दृश्यते निवृत्ते तु फलयोग स उच्यते ।' का. १४. 'सगुणस्तु विनिर्दिशेत् का. १५. 'इतिवृत्तादिकार्यस्य' मु. १६. 'यथानुक्रमतो तास्तु' मु. 'यथानुक्रमशो ह्येता.' का. 'भवेतत्र सयोज्यं' का. १७. 'आसां' का. १८. 'विन्यास' मु. 'विन्यासः फलभावेन फलाय परिकल्प्यते ।' का. १९. 'यद्वृत्तं हि समारब्धं पुरस्तादाधिकारिकम्' मु. 'इतिवृत्तं यथाख्यातं पुरस्तादाधिकारिकम् ।' का. २०. 'फलान्तं' मु. 'फलन्ति' का. २१. 'यदा' मु.

पूर्णसंधि तु तत्कार्यं हीनसंध्यपि वा पुनः ।
नियमात्पञ्चसंधि स्याद्धीनसंध्यथ कारणात् ॥ १८ ॥
चतुर्थस्यैकलोपे तु द्विलोपे त्रिचतुर्थयोः ।
द्वितीयत्रिचतुर्थानां त्रिलोपे लोप इष्यते ॥ १९ ॥
प्रासङ्गिके परार्थत्वान्न ह्येष नियमो भवेत् ।
यद्वृत्तं सम्भवेत्तत्र तद्योज्यमविरोधतः ॥ २० ॥
इतिवृत्ते यथावस्था पञ्चारम्भादिकाः स्मृताः ।
अर्थप्रकृतयः पञ्च तथा बीजादिका अपि ॥ २१ ॥
बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥ २२ ॥
स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति ।
फलावसानं तच्चैव बीजं तदिह कीर्तितम् ॥ २३ ॥
प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्तिर्बन्धस्य स बिन्दुः परिकीर्तितः ॥ २४ ॥
यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम् ।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता ॥ २५ ॥
फलं प्रकल्प्यते यस्याः परार्थं केवलं बुधैः ।
अनुबन्धविहीनं स्यात्प्रकरीमिति निर्दिशेत् ॥ २६ ॥

---

१ 'स्वर्ण॰' मु, 'पूर्णसध्यपि यत्कार्यं' का. २ 'पूर्णसंधि स्यात्' का. ३ 'हीनसंधिस्तु' का. ४ 'एकलोपे चतुर्थस्य' का. ५ 'लोपेन' मु ६ 'सम्भवेत्किंचित्' मु ७ 'यथाधस्त्वात्' मु 'यदावस्था' का. ८ '॰दिका' का. ९ 'ध्यसौ पञ्च' का. १० 'तदा' मु ११ इत प्राक् 'अर्थप्रकृतयः पञ्च संसंधिषु प्रकीर्तिताः' इत्यधिकं मु. १२ 'बीजबिन्दुपताकाख्य' का. १३ 'इदमर्धं मुद्रिते नास्ति' १४ 'अल्पमात्र' का. १५ 'प्रसर्पति' का. १६ 'चैवं' मु 'चैवं' का. १७ 'तदभिधीयते' का. १८ 'बिन्दुरिति' मु, बिन्दुरिति संज्ञित' का. १९ 'परार्थे' मु २० 'प्रधानस्याप' मु. २१ 'फलं यद्धि फलार्थं स्यात्प्रधानस्योपकारकम् । प्रधानवच्च कल्प्येत पारार्थ्यं' मु. 'फलं संकल्प्यते यद्धि, परार्थं यस्य केवलम् ।' का. २२ 'अनुबन्धेन हीनस्य प्रकरीं तां विनिर्दिशेत्' का. २३ विहीनाना यथावदिति निर्दिशेत्' मु

यदाधिकारिकं वृत्तं सम्यक्प्राज्ञैः प्रयुज्यते ।
तदर्थो यः समारम्भस्तत्कार्यं परिकीर्तितम् ॥ २७ ॥
एतेषां यस्य येनार्थो यतश्च गुण इष्यते ।
तत्प्रधानं तु कर्तव्यं गुणभूतान्यतः परम् ॥ २८ ॥
एकोऽनेकोऽपि वा सन्धिः पताकायां तु यो भवेत् ।
प्रधानार्थानुयायित्वादनुसन्धिः प्रकीर्त्यते ॥ २९ ॥
आगर्भादाविमर्शाद्वा पताका विनिवर्तते ।
कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते ॥ ३० ॥
यत्रान्यस्मिन्प्रयुज्यमाने तल्लिङ्गेभ्यः ( ङ्गोऽन्यः ) प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ३१ ॥
सहसैवार्थसंपत्तिर्गुणवत्युपकारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ॥ ३२ ॥
वचः सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥ ३३ ॥
अर्थोपक्षेपणं यत्र लीनं सविनयं भवेत् ।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते ॥ ३४ ॥
द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
उपन्यासः संयुतश्च तच्चतुर्थमुदाहृतम् ॥ ३५ ॥
चतुःपताकापरमं नाटके काव्यमिष्यते ।

१. 'यत्तु' का. 'कार्यं पूर्वमेव प्रकीर्तितम् । यदर्थो य' मु. २. 'समुदाहृतम्' का. ३. 'प्रधानं तत्प्रकर्तव्य' का. ४. 'नैकोऽपि' का. ५. 'पताकायाश्च योऽन्येत्' का. ६. 'अनुबन्ध स कीर्त्यते' का. ७. 'आगमादिविमर्शान्ता' क.ख. ८. 'तस्माद् यस्मात्तु बन्धोऽस्या परार्थायोपकल्पते' का. ९. 'यत्रान्यस्मिंश्चिन्त्यमाने तल्लीनोऽन्य' मु. 'यत्रार्थे चिन्त्यमानेऽपि तल्लिङ्गार्थं प्रयुज्यते ।' का. १०. 'त्युपचारत' का. ११. 'स्थानमिलापनं धारार्थसंयुतम्' मु. १२. 'परिकीर्त्यते' का. १३. 'वचसातिशयश्लिष्टं' का. 'वचसाश्लि' क.ख. १४. 'परिकल्पितम्' मु १५. 'यत्तु' का. 'यथा' क-ख. १६. 'सविनयं' क-ख. १७. 'संश्लिष्टः' मु. १८. 'उपन्यासो युतो यस्तच्चतुर्थं सतु' मु.

पञ्चभिः संधिभिर्युक्तं तांश्च वक्ष्याम्यतः पुनः ॥ ३६ ॥
मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव हि।
तथा निर्वहणं चेति नाटके पञ्च संधयः ॥ ३७ ॥
पञ्चभिः संधिभिर्युक्तं प्रधानमनुकीर्त्यते।
शेषाः प्रधानसंधीनामनुग्राह्यास्तु संधयः ॥ ३८ ॥
यत्र बीजसमुत्पत्तिर्नानार्थरससंभवा।
काव्ये शरीरानुगता तन्मुखं परिकीर्तितम् ॥ ३९ ॥
बीजस्योद्घाटनं यत्तु दृष्टनष्टमिव क्वचित्।
मुखन्यस्तस्य सर्वत्र तद्वै प्रतिमुखं स्मृतम् ॥ ४० ॥
उद्भेदस्तस्य बीजस्य प्राप्तिरप्राप्तिरेव वा।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ॥ ४१ ॥
[13]गर्भान्निर्भिन्नबीजार्थो विलोभनकृतोऽपि वा।
क्रोधव्यसनजो वापि स विमर्श इति स्मृतः ॥ ४२ ॥
समानं च समर्थानां मुख्यार्थानां सबीजिनाम्।
नानाभावोऽन्तराणां यद्भवेन्निर्वहणं तु तत् ॥ ४३ ॥
एते तु संधयो ज्ञेया नाटकस्य प्रयोक्तृभिः।
तथा प्रकरणस्यापि शेषाणां विनिबोधत ॥ ४४ ॥
[व्यायोगेहामृगौ चापि त्रिसंधी परिकीर्तितौ।]
[22]न तयोरवमर्शस्तु कर्तव्यः कविभिः सदा ॥ ४५ ॥

१. 'तत्प्रवक्ष्याम्यतः परम्' मु. २. 'परम्' का. ३. 'प्रतिमुखं चैव गर्भो विमर्श एव च' मु. ४. '०ऽविमर्शस्तथा हि' का. (?) ५. 'चैव' मु. का. ६. 'संधयो नाटके स्मृताः' का. ७. अयं श्लोको लिखितादर्शे नोपलभ्यते. ८. 'तत्र' क-ख. ९. 'शरीरानुगतं' का. १०. 'मुखान्यस्तस्य' क-ख. 'मुखेन्यस्तस्य' का. ११. 'भवेत्' का. १२. 'च' मु. १३. 'गर्भनिर्भिन्नबीजार्थो' का. १४. 'विकल्पनकृतोऽपि वा' मु. १५. 'किंचिदाश्लेषसंयुक्तो विमर्शः स्मर्यते बुधैः' १६. 'समानयनमर्थानां' मु. १७. 'मुखाद्यानां' मु., 'व्यादयानां तु मु. १८. 'फलोपसंगतानां च ज्ञेयं निर्वहणं तु तत्।' का. 'भावोत्तराणां च भवेन्निर्वहणं च' मु. १९. 'हि' का. 'च' मु. २०. 'च निबोधत' का. २१......२२. 'न तयोर्विमर्शस्तु स्यात्र च वृत्तिस्तु कैशिकी' मु.

डिमः समवकारश्च चतुःसंधी प्रकीर्तितौ ।
गर्भावमर्शौ न स्यातां न च वृत्तिस्तु कैशिकी ॥ ४६ ॥
द्विसंधि तु प्रहसनं वीथ्यङ्को भाण एव च ।
मुखनिर्वहणे स्यातां तेषां वृत्तिश्च भारती ॥ ४७ ॥
एवं हि संधयः कार्या दशरूपे प्रयोक्तृभिः ।
पुनरेषां तु संधीनामङ्गकल्पं निबोधत ॥ ४८ ॥
संधीनां यानि वृत्तानि प्रदेशेष्वनुपूर्वशः ।
स्वसंपद्गुणयुक्तानि तान्यङ्गान्युपधारयेत् ॥ ४९ ॥
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः ।
रागप्राप्तिः प्रयोगस्य गुह्यानां चैव गूहनम् ॥ ५० ॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम् ।
अङ्गहीनो नरो यद्वद् नैवारम्भक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगक्षमं भवेत् ॥ ५१ ॥
काव्यं यदपि हीनार्थं सम्यगङ्गैः समन्वितम् ।
दीप्तत्वात्तु प्रयोगस्य शोभामेति न संशयः ॥ ५२ ॥
उदात्तमपि यत्काव्यं स्यादङ्गैः परिवर्जितम् ।
हीनत्वात्तु प्रयोगस्य न सतां रञ्जयेन्मनः ॥ ५३ ॥

---

१ 'गर्भापमर्शौ' क-ख. २. अत्र पूर्वश्लोके च 'अविमर्श' इति दर्शनेन 'संधीनां' नामसु लक्षणेषु च, 'विमर्श' इत्येव वर्तते । 'विमर्श' इति वा, 'अविमर्श' इति वा इति संदिग्धम्' ३. 'वीथ्यङ्गा' क ख. ४ 'मुखनिर्वहणे तत्र कर्तव्ये कविभिः सदा ।' क ख., 'मुखनिर्वहणे तेषां कर्तव्ये कैशिकी विना ।' मु. ५. 'तु' मु. ६. 'दशरूप' मु. ७. 'पुन सध्यन्तरं तेषां' का. ८. 'कल्पान्' मु ९. कोष्ठकबद्धा श्लोकत्रयी क-ख-पुस्तकयोर्मुद्रितपुस्तके च नास्ति । १०. 'प्रदेशामनुपूर्वशः' मु, 'प्रदेशाद्यानुपूर्वत' क-ख. ११. 'सपद्गुणप्रयुक्तानि तान्यङ्गान्यवबोधयेत्' मु. १२ 'प्रयोगश्च' मु. १३. 'अविख्यातं' मु १४. अयमर्धश्लोको मुद्रितपुस्तके त्रुटितः. १५. 'यद्वन्नैवारम्भक्षमो' क-ख. १६. 'तु तद्' क-ख. १७. 'समपिन्म्' क ख. १८. 'दीप्तत्वात्' का. १९. 'विप्रयोगस्य नैव तद्' मु, 'हीनत्वाद्धि प्रयोगस्य' मु.

[ तस्मात्संधिप्रयोगेषु यथादेशं यथारसम् ।
कविनाङ्गानि कार्याणि प्रदेशांस्तु निबोधत ॥ ५४ ॥ ]
उपक्षेपः परिकरः परिन्यासो विलोभनम् ।
युक्तिः प्राप्तिः [ समाधानं विधानं परिभावना ॥ ५५ ॥
उद्भेदः करणं भेदो द्वादशाङ्गानि वै मुखे ।
तथा प्रतिमुखे चैव वक्ष्याम्यङ्गानि नामतः ॥ ५६ ॥ ]
विलासः परिसर्पश्च विधूतं तापनं तथा ।
नर्म नर्मद्युतिश्चैव तथा प्रशमनं पुनः ॥ ५७ ॥
निरोधश्चैव विज्ञेयः पर्युपासनमेव च ।
पुष्पं वज्रमुपन्यासो वर्णसंहार एव च ॥ ५८ ॥
एतानि वै प्रतिमुखे गर्भेऽङ्गानि निबोधत ।
अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ५९ ॥
संग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च ।
तोटकाधिबले चैव चोद्वेदो विद्रवस्तथा ॥ ६० ॥
एतान्यङ्गानि वै गर्भे विमर्शे च निबोधत ॥ ६१ ॥

---

१. धनुश्चिह्नान्तर्गतपाठो लिखितादर्शयोर्नोपलभ्यते. २. '°संधिप्रदेशेषु यथायोगं' मु. ३. 'कविताङ्गानि' मु ४. 'सम्यक् तानि निबोधत' का. ५. इतः प्राक् मुद्रितपुस्तके 'सामभेदः प्रदानं च दण्डश्च वध एव च । प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥ साहसं च भयं चैव ह्रीर्माया क्रोध एव च । ओज संवरणं भ्रान्तिस्तथा हेत्ववधारणम् ॥ दूतो लेखस्तथा स्वप्नश्चित्र मन्द इति द्विधा । संध्यन्तराणि संधीनां प्रदेशास्त्वेकविंशतिः ॥ एते विशेषाः संधिजाः स्युः संधेर्यस्त्वर्थयोगतः । पाठ्याङ्गान्यथ योगेन सन्ति तानि निबोधत ॥ इति पाठ्य उपक्षेपः परिन्यासो' इत्यधिकमुपलभ्यते. ६. धनुश्चिह्नान्तर्गतपाठो लिखितपुस्तके त्रुटितः. ७. 'ह्येतान्यङ्गानि' का. ८. 'शृणुताङ्गान्यतः परम्' का. ९. 'शमनं' क-ख. १०. 'नर्मच्युति' क-ख. ११. 'तथा गणं' 'तथा गपणं' क-ख. १२. 'वज्रं पुष्पं' का. १३. 'एवमङ्गानि बीजस्य संप्रसिद्धिकराणि च ।' इत्यधिकमितः प्राक् मु. १४. 'गर्भे चैव' मु., 'गर्भाङ्गानि' का. १५. 'दिक्षि' क-ख. 'क्षिप्रमेव' मु. 'प्रार्थनाक्षिप्तमेव च' का. १६. 'ह्युद्वेगो' क-ख. १७. 'ह्यवमर्शे' क-ख., 'ऽप्य विमर्शे' क-ग.

अपवादश्च संफेटो विद्रवः शक्तिरेव च ।
प्रसङ्गो व्यवसायश्च द्युतिः खेदो निषेधनम् ॥ ६२ ॥
विरोधे[नः]मथादानं छादनं च प्ररोचना ।
एतान्यवमृशेऽङ्गानि भूयो निर्वहणे शृणु ॥ ६३ ॥
संधिनिरोधो ग्रथनं निर्णयः परिभाषणम् ।
धृतिः प्रसाद आनन्दः समयश्चोपगूहनम् ॥ ६४ ॥
भाषणं पूर्ववाक्यं च काव्यसंहार एव च ।
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ॥ ६५ ॥
चतुःषष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि संधिषु ।
[ संपादनार्थं बीजस्य सम्यक्संधिकराणि तु ॥ ६६ ॥
कार्याण्येतानि कविभिर्विस्पष्टार्थानि नाटके ] ।
एतेषां तु पुनर्वक्ष्ये लक्षणानि यथाक्रमम् ॥ ६७ ॥
काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ।
समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः ॥ ६८ ॥
तन्निर्वृत्तिः परिन्यासो विज्ञेयः कविभिः सदा ।
गुणनिर्वर्णनं चैवं विलोभनमिति स्मृतम् ॥ ६९ ॥

---

१. 'अपवादोऽथ' का. २. 'द्रि द्रवः' मु., 'ऽभिद्रव.' क-ख. ३. 'व्यवसायः प्रसङ्गश्च' का. ४. 'निरोधश्च प्रकीर्तित.' क-ख. ५. 'प्ररोचना विचलनमादानं छेदनं तथा । व्याहारश्च द्युतिश्चैव विमर्शाङ्गान्यमूनि च ॥' इति क-ख. पुस्तकयोः । ६. 'छलनं' मु. ७. 'व्यवहारश्च युद्धश्च' क-ख.; 'व्याहारश्चापि द्युतिश्च' मु. ८. 'विमर्शेऽङ्गान्यमूनि च' मु. ९. 'विबोधो' मु. 'विरोधो' का. १०. 'कृतिः प्रसादानन्दौ च' मु., 'द्युतिः प्रसादश्चानन्दः' का. ११. 'समयो ह्युपगूहनम्' का. १२. 'आभाषणं पूर्वभावः' मु. १३. 'काव्यसंहार' क-ख. १४. 'चाङ्गानि कुर्यान्निर्वहणे बुध.' का. १५. 'संध्यङ्गानि चतुर्दश' मु. १६. 'संधौ निर्वहणाख्ये तु कर्तव्यानि प्रयोक्तृभिः । एतेषां स्वर्यसंबद्धं पुनर्वक्ष्यामि लक्षणम् ॥' मु. १७. एतदर्धमधिकं का. पुस्तके. १८. 'पुनरेषां प्रवक्ष्यामि' का. १९. 'काव्यस्यार्थसमुत्पत्ति' मु. २०. 'यदुत्पन्नार्थबाहुल्यम्' क-ख. २१. 'भविष्यदर्थकथनं परिन्यासं प्रचक्षते' मु., 'तन्निष्पत्त्या तु कथनं परिन्यासः प्रकीर्तितः ।' का. २२. 'तन्मध्ये' मु., 'यत्तु' का.

संप्रधारणमर्थानां युक्तिरित्यभिधीयते ।
सुखार्थस्याभिगमनं प्राप्तिरित्यभिधीयते ॥ ७० ॥
बीजार्थस्योपगमनं तत्समाधानमुच्यते ।
सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥ ७१ ॥
कुतूहलोत्तरावेशो विज्ञेया परिभावना ।
बीजार्थस्य प्ररोहो यः स उद्भेद इति स्मृतः ॥ ७२ ॥
प्रकृतार्थसमारम्भः करणं नाम तद्भवेत् ।
सघातभेदनार्थो यः स भेद इति कीर्तितः ॥ ७३ ॥
समीहा रतिभोगार्था विलास इति कीर्तितः ।
दृष्टनष्टानुसरणं परिसर्प इति स्मृतः ॥ ७४ ॥
कृतस्यानुनयस्यादौ विधूतमपरिग्रहः ।
अपायदर्शनं यच्चापनं नाम तद्भवेत् ॥ ७५ ॥
क्रीडार्थं विहितं यत्तु हास्यं नर्मेति तत् स्मृतम् ।
दोषप्रच्छादनार्थं तु हास्यं नर्मद्युति स्मृतम् ॥ ७६ ॥
उत्तरोत्तरवाक्यं तु भवेत्प्रशमनं बुधाः ।
या तु व्यसनसप्राप्तिर्निरोधः स तु कीर्तितः ॥ ७७ ॥
क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्युपासनम् ।
विशेषवचनं यत्तु तत्पुष्पमिति सज्ञितम् ॥ ७८ ॥
प्रत्यक्षरूपं यद्वाक्यं तद्वज्रमिति सज्ञितम् ।

१. 'सुखार्थस्योपगमन' मु. का. २. '°रित्यभिसंज्ञितम्' का. ३. 'समाधानमपीष्यते' का. ४. 'मिहोच्यते' का. ५. 'कौतूहलोत्तरविशो भवेत्तु' का. ६. 'उद्भेद स तु कीर्तित.' का. ७. 'संघार्य' मु. ८. 'समोगो रतिसपन्नो' मु. ९. 'विधूतं ह्यपरिग्रह' मु. १०. 'तस्योपशमनं यत्तु शमनं नाम तद्भवेत् ।' मु. ११. 'यत्तु' का. १२ 'क्रीडाविलोभनार्थं तु हास्यं नर्म इति स्मृतम् ।' मु. १३. 'यत्तु हास्यं नर्म तु संज्ञितम् ।' का. १४. अयमर्धश्लोको मुद्रिते नास्ति । १५. [ हास्यं ] इति त्रुटितं क-ख. पुस्तकयोः । १६. 'अधरोत्तर' क-ख. १७. 'प्रगणनं' मु. 'प्रगयणं पुन.' क-ख. १८. 'च' मु., 'प्रकीर्तित.' का. १९. 'विरुद्धवचनप्रायं पञ्जमित्यभिधीयते ।' क-ख. २०. 'इत्यभिधीयते'

उपपत्तिकृतो योऽर्थ उपन्यासस्तु स स्मृतः ॥ ७९ ॥
चातुर्वर्ण्याभिगमनं[2] वर्णसंहार इष्यते ।
एतानि[3] तु प्रतिमुखे गर्भे चापि निबोधत ॥ ८० ॥
कपटाद्याश्रयं[4] वाक्यमभूताहरणं विदुः ।
तत्त्वार्थवचनं चैव मार्ग इत्यभिधीयते ॥ ८१ ॥
चित्रार्थसमवायो[5] यस्तद्रूपमिति कीर्तितम् ।
यत्सातिशयवद्वाक्यं[6] तदुदाहरणं स्मृतम् ॥ ८२ ॥
भावतत्त्वोपलब्धिस्तु[7] क्रम इत्यभिधीयते ।
सामदानार्थसंयुक्तः संग्रहः परिकीर्तितः ॥ ८३ ॥
रूपानुरूपगमनमनुमानमिति स्मृतम् ।
रतिहर्षोत्सवार्थानां[8] प्रार्थना प्रार्थना भवेत् ॥ ८४ ॥
गर्भस्योद्भेदनं[9] यत्स्यात् क्षिप्तिरित्यभिधीयते ।
संरम्भवचनप्रायं तोटकं त्विति[10] सञ्ज्ञितम् ॥ ८५ ॥
कपटेनाभिसंधानं[11] ब्रुवतेऽधिबलं[12] बुधाः ।
भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः ॥ ८६ ॥
नृपाभिभयसंयुक्तः[13] संभ्रमो[14] विद्रवः स्मृतः ।
[ एतान्यङ्गानि[15] गर्भे स्युरविमर्शे निबोधत ॥ ८७ ॥
दोषप्रख्यापनं यत् स्यात् सोऽपवादः[16] प्रकीर्तितः ।
रोषग्रथितवाक्यं तु सफेटः परिकीर्तितः ॥ ८९ ॥

---

१. 'स्थ' क-ख. २. '°पगमनं' का. ३. 'एतत्प्रतिमुखेऽङ्गानि अथ गर्भस्थलक्षणम् ।' मु, इदमर्धं लिखितादर्शे नास्ति । ४. 'कपटापाश्रय यत्तदभूताहरणं विदुः ।' का. 'कपटाश्रयं यद्वा' का. मु ५. 'चित्रार्थसमवाये तु वितर्को रूपमिष्यते' का. ६. 'यत्तु सातिशयं वाक्यं' मु. ७. 'तत्त्वोपलब्धिर्वाक्यस्य' मु. क-ख. ८. 'कार्यानुनयपूर्वस्तु नियोगः' मु. ९. 'गर्भस्योद्भेदनं यत्तु तदुपस्थितमुच्यते ।' मु. १०. 'त्विह' मु. ११. 'कपटेनातिसंधानम्' का. १२. 'ह्येयं त्वधिबलं बुधैः' का. 'ज्ञेयं चाधिबल. बुधैः' मु. १३. 'शङ्काभयत्रासकृतो विद्रवः समुदाहृतः ।' क-ख. १४. 'द्रव एव हि विद्रवः' मु. १५. पद्यार्धमिदं क-ख. पुस्तकयोर्नास्ति । मुद्रितपुस्तके तु-'गर्भाङ्गलक्षणं प्रोक्तं विमर्शेऽथ निबोधत ।' १६. 'अपवादस्तु स स्मृतः ।' मु.

गुरुव्यतिक्रमो यस्तु विज्ञेयोऽभिद्रवस्तु सः ।
विरोधप्रशमो यस्तु सा शक्तिः परिकीर्तिता ॥ ८९ ॥
प्रसङ्गश्चैव विज्ञेयो गुरूणां परिकीर्तनम् ।
व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः ॥ ९० ॥
वाक्यमाधर्षणकृतं द्य(यु ?)ति खज्ञैरुदाहितम् (ता ?) ।
मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः ॥ ९१ ॥
ईप्सितार्थप्रतीघातो निषेधः स तु कीर्तितः ।
विरोधनं तु संरम्भादुत्तरोत्तरभाषणम् ॥ ९२ ॥
बीजकार्योपगमनमादानमिति संज्ञितम् ।
अवमानात् कृतं वाक्यं कार्यार्थं छादनं भवेत् ॥ ९३ ॥
प्ररोचना च विज्ञेया संहारार्थप्रकाशिनी ।
एतान्यवमृशाङ्गानि संहारे तु निबोधत ॥ ९४ ॥

---

१. 'द्वि द्रवस्तु' मु. २. 'विरोधो (धा ?)पशमो' का. ३. काशीमुद्रितपुस्तके श्लोकेऽस्मिन् पूर्वार्धोत्तरार्धयोः पौर्वापर्यम् । ४. 'गुरूणां परिकीर्तितः' क-ख. 'वाक्यैरामर्षयोजितैः' मु. ५. 'तु' का. 'तु कर्तव्यः' मु. ६. 'प्रतिज्ञादोषसंभवः' का. 'प्रतिज्ञाहेतुसंश्रयः' मु. ७. इतः प्रभृति कोष्ठबद्धा श्लोकद्वयी लिखितपुस्तके नास्ति । किंतु

(उत्तरोत्तरवाक्यं तु निरोध इति संज्ञितः ।
प्ररोचना च विज्ञेया या कार्यार्थप्रदर्शिनी ॥
अनुमानार्थसंयुक्तं विद्याद् विचलनं तथा ।
बीजकार्योपगमनमादानमिति संज्ञितम् ॥
अपमानकृतं वाक्यं कार्यार्थं छादनं भवेत् ।
प्रत्यक्षकथनं यत्तु स व्याहार इति स्मृतः ॥
वाक्यमाधर्षसंयुक्तं द्युतिस्तज्ज्ञैरुदाहृतः ।)

एवं पाठभेदः । 'वाक्यमाधर्षे संयुक्तं द्युतिस्तज्ज्ञैरुदाहृतम् । मनः श्रेष्ठार्थमुत्पन्नः श्रमस्त्वेद उदाहृतः । ईप्सितार्थप्रतीघातः प्रतिषेधः प्रकीर्तितः । कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ॥' इति च क-ख. पुस्तकयोः । ८. 'साधिक्षेपं वचो यत्र तद् द्युतिरिति संज्ञितम् ।' मु. ९. 'अपमानादिजनितसमोद्दच्छलनं' मु. १०. 'संहारार्थप्रदर्शिनी' मु. ११. इदमर्धं लिखितादर्शे नोपलभ्यते । 'लक्षणं विमर्शाङ्गानां संहारे तु निबोधत ।' इति क-ख. पुस्तकयोः.

[1]मुखबीजोपगमनं संधिरित्यभिधीयते ।
कार्यस्यान्वेषणं [2]युक्त्या [3]निरोध इति कीर्तितः ॥ ९५ ॥
उपक्षेपस्तु कार्याणां ग्रथनं [4]परिकीर्तितम् ।
[5]अनुभूतार्थकथनं निर्णयः समुदाहृतः ॥ ९६ ॥
परिवादकृतं यत् स्यात् तदाहुः परिभाषणम् ।
लब्धस्यार्थस्य शमनं [6]धृतिमाचक्षते पुनः ॥ ९७ ॥
शुश्रूषाद्युपसंपन्नैः[7] [8]प्रसादः प्रीतिरुच्यते ।
समागमस्तु[9] योऽर्थानामानन्दः [10]परिकीर्तितः ॥ ९८ ॥
[11]दुःखस्यापगमश्चैव [12]समयोऽथ निगद्यते ।
अद्भुतस्य [13]च संप्राप्तिर्भवेद्[14]उपगूहनम् ॥ ९९ ॥
साम[15]दानादिसंपन्नं भाषणं समुदाहृतम् ।
[16]पूर्ववाक्यं तु विज्ञेयं यथार्थोक्तार्थदर्शनम् ॥ १०० ॥
[17]वरप्रसादसंप्राप्तिः काव्यसंहार इष्यते ।
[18]नृपदेवप्रशस्तिश्च प्रशस्तिरभिधीयते ॥ १०१ ॥
[19]यथासंधि तु कर्तव्यान्येतान्यङ्गानि [20]नाटके ।
कविभिः [21]काव्यकुशलै [22]रसभावानवेक्ष्य तु ॥ १०२ ॥
[23]सर्वाङ्गानि कदाचित्तु द्वित्रियोगेन वा पुनः ।

१. 'सुखबीजोपगमनम्' इति का. २. 'यत्तु विबोध इति स स्मृतः' मु. ३. 'विरोध' इति का. ४. 'नाम तद्भवेत्' मु. ५. 'अनुभूतस्य कथन' का. ६. 'कृतिरित्यभिधीयते' मु; 'द्युतिरित्यभिधीयते' इति का. ७. '°संपन्ना' लिखित पु. ८. 'प्रसाद इति भण्यते' का. ९. 'समागमस्त्वपायानां' क-ख. १०. 'स तु कीर्तितः' का. ११. 'दुःखस्यापगमो यस्तु' का., 'दुःखापनयनं चैव' मु. १२. 'समयः स निगद्यते ।' मु; 'स शमः संनिगद्यते' का. १३. 'तु' लि. १४. '°दुपगूहनमिष्यते' लि. १५. 'सामदानादिसंयुक्तं भाषणं तूच्यते बुधैः ।' का. 'दानमानविनिष्पन्नमाभाषणमुदाहृतम्' मु. १६. 'पूर्वभावस्तु विज्ञेयः सद्भिः कार्योपदेशकः' मु; 'पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शकम् ।' का. १७. 'वरप्रदानं' का. १८. 'नृपदेवप्रशान्तिश्च' का. 'देवद्विजनृपादीनां प्रशस्तिः स्यात् प्रसाधनम् ।' मु. १९. 'इत्येतानि यथा संधिकार्याण्यङ्गानि रूपके ।' का. २०. 'रूपके' मु. २१. 'कार्यकुशलैः' का. २२. 'रसभावमपेक्ष्य तु ।' लि. २३. 'यन्मिथाणि' क-ख., 'संमिश्राणि' का.

ज्ञा[1]त्वा कार्यमवस्थां च योज्या[2]न्यङ्गानि संधिषु ॥ १०३ ॥
( ए[3]तेषामेव चाङ्गानां संबद्धान्यर्थयुक्तितः ।
सं[4]ध्यन्तराणि वक्ष्यामि स्वर्थोपक्षेपकाणि च ॥ १०४ ॥
सामभेदै[5]स्तथा दण्डः प्रदानं वध एव च ।
प्रत्युत्पन्नमतित्वं च गोत्रस्खलितमेव च ॥ १०५ ॥
साहसं च भयं चैव ह्रीर्मा[6]या क्रोध एव च ।
ओजः[7]संवरणं भ्रान्ति[8]स्तथा हेत्ववधारणम् ॥ १०६ ॥
दूतो लेखस्तथा स्वप्नश्चि[9]त्रं मद इति स्मृतम् ॥
संध्यन्तराणि संधीनां विशेषास्त्वेकविंशतिः ॥ १०७ ॥ )
विष्कम्भश्चूलिका चैव तथा चैव प्रवेशकः ।
अङ्कावतारोऽङ्क[10]मुखमर्थोपक्षेपपञ्चकम् ॥ १०८ ॥
मध्यमपुरुषनियोज्यो नाटकमुखसंधिर्मा[11]त्रसंचारः ।
विष्कम्भकस्तु संस्कृतपुरोहितामात्यकञ्चुकिभिः ॥ १०९ ॥
शुद्धः संकीर्णो वा द्विविधो विष्कम्भकस्तु विज्ञेयः ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्य[12]कृतः ॥ ११० ॥
अन्त[13]र्यवनिकासंस्थैः शू[14]र्न्यादिभिरनेकधा ।
अर्थोपक्षेपणं यत्तु[15] क्रियते सा हि चूलिका ॥ १११ ॥
अङ्कान्त[16]रानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषये प्रवेशको नाम विज्ञेयः ॥ ११२ ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।

---

१. 'कार्यं कालमवस्थां च ज्ञात्वा कार्याणि संधिषु' मु. २. 'कार्याण्यङ्गानि संधिषु' लि. ३. इतः प्रभृति श्लोकचतुष्टयी का. पुस्तके नास्त्येव । ४. 'संध्यन्तराणि संधीनां विशेषास्त्वेकविंशतिः ।' क-ख. ५. 'भेदप्रदानं च दण्डश्च वध' मु. ६. 'ज्ञेया सा' क-ख. ७. 'तेजः' क-ख. ८. 'भ्रान्ता' क-ख. ९. 'चित्रं मद इति द्विजाः' मु. १०. 'अङ्कावताराङ्कमुखं' का. ११. 'संधिवस्तुसंचारः' का. १२. 'नीचमध्यमैः कृतः' का. १३. 'जवनिकासंस्थैः' लि. १४. 'उत्तमाधममध्यमैः' का. १५. 'यत्र' का. १६. 'अङ्कान्तराधिकारी' ( ! ) का.

प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ ११३ ॥
[ [1]प्राकृतभाषामथितः संस्कृते प्राकृतस्य लोकस्य ।
नीचस्याचरणकृतः प्रवेशको नाम विज्ञेयः ॥ ११४ ॥ ]
अङ्कान्तरेऽथवाङ्के निपतति यस्मिन्[2] प्रयोगमासाद्य ।
बीजार्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ[3] ॥ ११५ ॥
विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषेण वा ।
यत्र[4] संक्षिप्यते पूर्वं तदङ्कमुखमिष्यते[5] ॥ ११६ ॥
[6]वृत्तिवृत्त्यङ्गसंपन्नपदार्थप्रकृतिक्षमम् ।
पञ्चावस्थाभि[7]निष्पन्नैः पञ्चभिः संधिभि[8]र्युतम् ॥ ११७ ॥
संध्यन्तरैकविंशत्या चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतं गुणालंकारभूषितम् ॥ ११८ ॥
महारसं महाभोगमुदात्तवचनान्वितम् ।
महापुरुषसंचारं सो[9]ध्वाचारजनप्रियम् ॥ ११९ ॥
सुश्लिष्टसंधि[10]संयोगं सुप्रयोगं सुखाश्रयम् ।
मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥ १२० ॥
अवस्था या हि लोकस्य सुखदुःखसमुद्भवा ।
नानापुरुषसंचारा नाटके संभ[11]वेदिह ॥ १२१ ॥
न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला ।
न तत्कर्म न[12] योगोऽसौ नाटके यन्न दृश्यते ॥ १२२ ॥
योऽयं[13] स्वभावो लोकस्य ना[14]नावस्थान्तरात्मकः ।
सोऽङ्गाद्य[15]भिनयैर्युक्तो ना[16]ट्यमित्यभिधीयते ॥ १२३ ॥

---

१. तदेतत्पद्य लिखितपुस्तके नास्ति। २. 'यस्मात्' का. ३. 'विज्ञेयोऽङ्कावतारोऽसौ' का. ४. 'यदुपक्षिप्यते' लि. ५. 'उच्यते' लि. ६. 'वृत्तिप्रत्यङ्गसंपन्नं पताकार्थं प्रतिक्रियम्।' का. ७. 'पञ्चावस्थासमुत्पन्नं' का. ८. 'पञ्चसंधि चतुर्वृत्ति' क-ख. ९. 'साध्वाचारं जनप्रियम्' लि. १०. 'सुश्लिष्टसंधियोगं च' का. ११. 'सा भवेदिह' मु, 'साभिधीयते' लि. १२ 'न वा योगो' लि; 'न तत्कर्मसमायोगो' मु. १३. 'यो य.' का. १४. 'नानावस्थानयात्मक.' लि. १५. 'साङ्गाभिनयसंयुक्तो' का. १६. 'नाट्यकं त्वभिधीयते' लि.

देवतानामृषीणां च राज्ञां [1]लोकस्य चैव हि ।
पूर्ववृत्तानुचरितं [2]नाटकं नाम तद्भवेत् ॥ १२४ ॥
यस्मात् [3]स्वभावः संहृत्य [4]साङ्गोपाङ्गगतिक्रमैः ।
अभिनीयते गम्यते च [5][6]तस्माद्धि नाटकं स्मृतम् ॥ १२५ ॥
सर्वभावैः सर्वरसैः सर्वकर्मप्रवृत्तिभिः ।
नानावस्थान्तरोपेतं नाटकं संविधीयते ॥ १२६ ॥
[7]यान्येकै[8]शिल्पजातानि ह्येककर्मकृतानि च ।
तानि शेयाणि रूपाणि [9]प्रयोज्यानि प्रयोक्तृभिः ॥ १२७ ॥
[10]लोकस्वभावं संप्रेक्ष्य नराणां च बलाबलम् ।
संभोगं चैव युक्तिं च ततः [11]कुर्यात्तु नाटकम् ॥ १२८ ॥
भविष्यति युगे प्रायो भविष्यन्त्यबुधा नराः ।
ये चापि हि [12]भविष्यन्ति तेऽप्यल्पश्रुतबुद्धयः ॥ १२९ ॥
बुद्धयः कर्म [13]शिल्पानि वैचक्षण्यं कलासु च ।
सर्वाण्ये[14]तानि [15]नश्यन्ति यदा लोकः प्रणश्यति ॥ १३० ॥
तदेवं लोकभावानां प्रसमीक्ष्य [16]बलाबलम् ।
मृदुशब्दं [17]सुसंबद्धं च कविः कुर्यात्तु नाटकम् ॥ १३१ ॥
[18]चेक्रीडिताद्यैः शब्दैस्तु काव्यबन्धा भवन्ति ये ।
वेश्या इव न [19]शोभन्ते कमण्डलुधरैर्द्विजैः ॥ १३२ ॥

---

१. 'चोत्कृष्टनैधनम्' लि; 'लोकस्य चैव हि' मु. २. 'नाट्यकं' लि. ३. 'स्वभावं ।' का. ४. 'साङ्गोपाङ्गप्रतिक्रमैः' मु. ५. 'प्रयुज्यते ज्ञायते च' लि. ६. 'यस्मात् तत्' मु. ७. पद्यमिदं लिखितपुस्तके नास्ति । 'यान्येव' का. ८. 'एकरूपकृतानि च' क-ख. ९. 'कर्तव्यानि प्रयोक्तृभिः' का. १०. 'लोकस्य भावं' मु. ११. 'कार्यं तु' का; मु. १२. 'श्लोके प्रणश्यति प्रायोभवन्त्यविबुधा' मु. १३. 'शल्यानि (शास्त्राणि) वैचक्षण्यं बलानि च ।' क-ख. १४. 'सर्वाणि पुंसां' का. १५. 'यदा लोकः विना नाट्यं प्रणश्यति ।' मु. १६. 'यथाक्रमम्' मु. १७. 'यथार्थं च तज्ज्ञैः कार्यं तु लक्षणम् ।' मु. १८. अयं श्लोको लिखितादर्शे नोपलभ्यते । १९. 'न भान्ति च' क-ख.

इति वृत्तं ससंध्यङ्गं मया प्रोक्तं द्विजोत्तमाः ।
अतः परं प्रवक्ष्यामि वृत्तीनामिह लक्षणम् ॥ १३३ ॥

इति भारतीये नाट्यशास्त्रे संध्यङ्गविकल्पो नामैकोनविंशोऽध्यायः ।

---

अथ विंशोऽध्यायः ।

समुत्थानं तु वृत्तीनां व्याख्यास्याम्यनुपूर्वशः ।
यथावस्तूद्भवं चैव काव्यानां च विकल्पनम् ॥ १ ॥
एकार्णवं जगत् कृत्वा भगवानच्युतो यदा ।
शेते स्म नागपर्यङ्के लोकान् संक्षिप्य मायया ॥ २ ॥
अथ वीर्यमदोन्मत्तावसुरौ मधुकैटभौ ।
तर्जयामासतुर्देवं तरसा युद्धकाङ्क्षिणौ ॥ ३ ॥
निर्जबाहुविसृष्टौ तौ भूतभावनमक्षयम् ।
जानुभिर्मुष्टिभिश्चैव योधयामासतुः प्रभुम् ॥ ४ ॥
अभिद्रवन्तावन्योन्यं वाक्यैश्च परुषैस्तदा ।
नानाविक्षेपवचनैः कम्पयन्ताविवोदधिम् ॥ ५ ॥
तयोर्नानाप्रकाराणि श्रुत्वा वाक्यानि गर्जतोः ।
किंचिदाकम्पितमना द्रुहिणो वाक्यमब्रवीत् ॥ ६ ॥
किमियं भारती वृत्तीर्वाग्भिरेव प्रवर्तते ।
उत्तरोत्तरसंबद्धौ नन्विमौ निधनं नय ॥ ७ ॥

---

१. 'दशरूपविधान' लि. २. 'अत ऊर्ध्वं प्रवक्ष्यामि' का. ३. 'वृत्तिनिरूपणं नामैकविंशोऽध्यायः ।' मु, 'वृत्तिनिरूपणं नाम विंशोध्याय.' लि. ४. 'काव्याना' मु; 'काष्टाना' लि. ५. 'लोकं' ६. 'वीर्यबलोन्मत्तौ' लि. ७. 'युद्धकाङ्क्षया' लि. ८. 'बाहू विमर्दमानौ तौ भूतभावनमक्षयम्' का. ९. 'विमृद्दं तौ' का-ख. १०. 'मुष्टिभिर्जानुभिश्चैव' का. ११. 'बहुभि परुषैर्वाक्यैरन्योन्यस्पर्धया तौ' लि. १२. 'नामविक्षेपवचनै.' लि. १३. 'तयोर्नैकप्रकाराणि' का. 'तयोरनेकरूपाणि विचाक्षि वदतोस्तदा । श्रुत्वा आकम्पितमना' मु. १४. 'तर्जनाम्' लि. १५. 'प्रवर्तिता' लि. १६. 'उत्तरोत्तरसंबद्धा न त्विमौ' लि. १७. 'सबद्धावन्विमौ' मु.

पितामहवचः श्रुत्वा प्रोवाच मधुसूदनः ।
कार्यहेतोर्मया ब्रह्मन् भारतीयं विनिर्मिता ॥ ८ ॥
भाष्यतो वाक्यभूयिष्ठा भारतीयं भविष्यति ।
अहमेतौ निहन्म्यद्य इत्युक्त्वा वचनं हरिः ॥ ९ ॥
शुद्धैरविकृतैरङ्गैः साङ्गहारैस्तदा भृशम् ।
योधयामास तौ दैत्यौ युद्धमार्गविशारदौ ॥ १० ॥
भूमिसंस्थानसंयोगैः पदन्यासैस्तदा हरेः ।
अतिभारोऽभवद्भूमेर्भारती तत्र निर्मिता ॥ ११ ॥
वल्गितैः शार्ङ्गधनुषस्तीव्रैर्दीप्तिकैरथ ।
सत्त्वाधिकैरसंभ्रान्तैः सात्त्वती तत्र निर्मिता ॥ १२ ॥
विचित्रैरङ्गहारैस्तु देवो लीलासमुद्भवैः ।
बबन्ध यच्छिखापाशं कैशिकी तत्र निर्मिता ॥ १३ ॥
संरम्भावेगबहुलैर्नानाचारीसमुत्थितैः ।
नियुद्धकरणैश्चित्रैर्निर्मितारभटी ततः ॥ १४ ॥
यां यां देवः समाचष्टे क्रियां वृत्तिसमुत्थिताम् ।
तां तदर्थानुगैर्वाक्यैर्द्रुहिणः प्रत्यपूजयत् ॥ १५ ॥
यदा हतौ तावसुरौ हरिणा मधुकैटभौ ।
उक्तवांस्तु तदा ब्रह्मा नारायणमरिंदमम् ॥ १६ ॥
अहो विचित्रैर्विशदैः स्फुटैः सुललितैरपि ।
अङ्गहारैः कृतं देव त्वया दानवनाशनम् ॥ १७ ॥

---

१. 'बाढं कार्यक्रियाहेतोः' का. २. 'वदतो वाक् प्रभूयिष्ठा' लि. ३. 'बाहुयुद्धविशारदौ' मु. ४. 'पदन्यासैर्हरेस्ततः' लि., 'पादन्यासैर्हरेस्तदा' मु. ५. 'तेन' मु. ६. 'वर्जितैः' क-ख. ७. 'धनुषा दीप्तदीप्ततरैरथ' मु. ८. 'च विनिर्मिता' मु. ९. 'विविधैः' मु. १०. 'नानाचारीसमन्वितैः' मु., 'नानाचारसमुद्भवैः' लि. ११. '°रङ्गैः' मु. १२. '°रुत्पन्नारभटी ततः' लि. १३. 'वृत्तिसमुद्भवाम्' मु. 'वृत्तिषु संस्थिताम्' लि. १४. 'जल्पैः' मु., 'जाप्यैः' लि. १५. 'ततोऽब्रवीत् पद्मयोनिः' लि. १६. 'विचित्रैर्ललितैः स्फुटैः सुविशदैरपि' लि.

तस्मादयं सर्वलोके नियुद्धसमयक्रमः ।
सर्वशास्त्रविमोक्षेषु न्यायसंज्ञो भविष्यति ॥ १८ ॥
न्यायाश्रितैरङ्गहारैर्न्यायैश्चैव समुत्थितैः ।
यस्माद् युद्धं कृतं ह्येतत्तस्मान्न्यायः प्रकीर्तितः ॥ १९ ॥
[ ततो वेदेषु निक्षिप्ता द्रुहिणेन महात्मना ।
पुनर्नाट्यप्रयोगे च नानाभावरसान्विता ॥ २० ॥
वृत्तिसंज्ञा कृता ह्येषा नानाभावरसाश्रया ।
चरितैस्तस्य देवस्य द्रव्यं यद् यादृशं कृतम् ॥ २१ ॥
ऋषिभिस्तादृशी वृत्तिः कृता चार्वेयाङ्गसंभवा ।
नाट्यवेदसमुत्पन्ना वागङ्गाभिनयात्मिका ॥ २२ ॥
पुनरिष्टसुजातेन नानाचारीसमाकुले ।
मया काव्यक्रियाहेतोः प्रक्षिप्ता द्रुहिणाज्ञया ॥ २३ ॥
ऋग्वेदाद्भारती वृत्तिर्यजुर्वेदात्तु सात्त्वती ।
कैशिकी सामवेदाच्च शेषा चाथर्वणात्तथा ॥ २४ ॥

या वाक्प्रधाना पुरुषप्रयोज्या
स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।

---

१. 'सर्वलोके नियुद्धः समयः शुभः' मु., 'हि लोकस्य नियुद्धसमयक्रमः' लि. २. 'न्यायसमुत्थितैर्विविधैरङ्गहारैर्विभूषितम् । यस्माद् युद्धं कृतं ह्येतत्तस्मान्न्यायाः प्रकीर्तिताः ॥' मु. ३. 'न्यायैश्चैव' लि. ४. 'यस्माद् युद्धान्यवर्तन्त तस्मान्न्यायाः प्रकीर्तिताः ।' लि. ५. इत-प्रभृति श्लोकद्वयी 'लिखितादर्शे नोपलभ्यते ।' ६. 'वेदेषु' लि. ७. इतः पूर्वं 'पुनरिष्टसुजातेन नानाचारी समाकुले' इत्यधिकं लिखितपुस्तके. ८. 'पुनर्नाट्यप्रयोगेण' लि. ९. 'नानाभावसमन्विता' लि. १०. 'कृता ह्येताः काव्यहेतोः प्रकल्पिताः ।' लि. ११. 'काव्यक्रियाप्रकल्पिताः' मु. १२. 'चरितैर्हरस्य' मु. १३. 'तस्य देवस्य वर्ण्यं' लि. १४. 'वाङ्मयसंभवा' मु. 'पा(आ)प्याभिर्संयुता' लि. १५. 'सा चाभिनयान्विता' लि. १६. 'पद्यार्धमिदं लिखितादर्शे विंशश्लोकस्योत्तरार्धरूपत्वेन पूर्वमेवायातं वर्तते ।' १७. 'ऋग्वेदे' मु. १८. 'यजुर्वेदे च' मु. १९. 'सात्त्विकी' लि. २०. 'कैशिकी' का. २१. 'सामवेदे च' मु. २२. 'चाथर्वणी तथा' मु. २३. 'पुरुषप्रयोज्या' मु. २४. 'संस्कृतपाठ्ययुक्ता' मु.

स्वनामधेयैर्भरतैः प्रयुक्ता
सा भारती नाम भवेत्तु वृत्तिः ॥ २५ ॥
भेदास्तस्यास्तु विज्ञेयाश्चत्वारोऽङ्गत्वमागताः।
प्ररोचनामुखं चैव वीथी प्रहसनं तथा ॥ २६ ॥
जय(यि[6])न्तुदयिनी चैव मङ्गल्या विजयावहा।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥ २७ ॥
नटी विदूषको वापि पारिपार्श्वक एव वा।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ २८ ॥
चित्रैर्वाक्यैः स्वकार्योत्थैर्वीथ्यङ्गैरन्यथापि वा।
आमुखाङ्गान्यतो वक्ष्ये यथावदनुपूर्वशः ॥ २९ ॥
उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा।
प्रवृत्तिकावलगिते आमुखाङ्गानि पञ्च वै ॥ ३० ॥
उद्घात्यकावलगितयोर्लक्षणं कथितं मया।
शेषाणां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ॥ ३१ ॥
सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा।
गृहीत्वा प्रविशेत् पात्रं प्रयोगातिशयो हि सः ॥ ३२ ॥
प्रवृत्तं कार्यमाश्रित्य सूत्रभृद् यत्र वर्णयेत्।
तदाश्रयाच्च पात्रस्य प्रवेशस्तत् प्रवृत्तकम् ॥ ३३ ॥
एषामन्यतमं श्लिष्टं योजयित्वा तु युक्तिभिः।
पात्रग्रन्थैरसंबाधं प्रकुर्यादामुखं बुधः ॥ ३४ ॥
एवमेतद् बुधैर्ज्ञेयमामुखं विविधाश्रयम्।
लक्षणं पूर्वमुक्तं तु वीथ्याः प्रहसनस्य च ॥ ३५ ॥

---

१. 'भवने' मु. २. 'ता भारतीं वृत्तिमुदाहरन्ति' मु. ३. 'त्वमागता' मु. ४. 'पूर्वरङ्गप्ररोचिनी' मु. ५. 'यत्तु' लि. ६. 'त्नपायि वा' मु. ७. इदमर्धं मुद्रितपुस्तके नास्ति। ८. 'प्रवृत्तिकावलगिते' लि. ९. 'उद्घात्यकावलगिते वीथ्यङ्गे तु मयोदिते।' मु. १०. 'कालं प्रवृत्तमाश्रित्य' मु. ११. 'तदाश्रयस्य' मु. १२. 'प्रवृत्तिकम्' लि. १३. 'अथ' लि., 'अर्थयुक्तिभिः' मु. १४. 'विविधाश्रयम्' मु.

इत्यष्टार्थविकल्पा वृत्तिरियं भारती मया प्रोक्ता ।
सात्त्वत्यास्तु विधानं लक्षणयुक्त्या प्रवक्ष्यामि ॥ ३६ ॥

या सात्त्वतेनेह गुणेन युक्ता
न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती नाम भवेत्तु वृत्तिः ॥ ३७ ॥

वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु ।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः ॥ ३८ ॥
वीराद्भुतरौद्ररसा विज्ञेया ह्यल्पकरुणशृङ्गारा ।
उद्धतपुरुषप्राया परस्पराधर्षणकृता च ॥ ३९ ॥
उत्थापकश्च परिवर्तकश्च संलापकः ससंघातः ।
चत्वारोऽस्या भेदा विज्ञेया नाट्यतत्त्वज्ञैः ॥ ४० ॥
अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनः शक्तिम् ।
इति संघर्षसमाश्रयमुत्थितमुत्थापको ज्ञेयः ॥ ४१ ॥
उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान् भजते स चापि परिवर्तको ज्ञेयः ॥ ४२ ॥
साधर्षजो निराधर्षजो वापि विविधवचनसयुक्तः ।
साधिक्षेपालापो ज्ञेयः संलापकः सोऽपि ॥ ४३ ॥
मित्रार्थवाक्यशक्त्या दैववशादात्मदोषयोगाद्वा ।
संघातभेदजननस्तज्ज्ञैः संघातको ज्ञेयः ॥ ४४ ॥
इत्यष्टार्थविकल्पा वृत्तिरियं सात्त्वती मयाभिहिता ।
कैशिक्यास्त्विह लक्षणमतः परं संप्रवक्ष्यामि ॥ ४५ ॥

---

१. आर्येयं लिखितादर्शयोर्नास्ति । २. 'निरस्तग्राम्यकरुणनिर्वेदा(?)' लि. ३. 'परस्पराधर्षणा चैव' मु. ४. 'उपरिवर्तकश्च संलापकश्च संघातः' मु. ५. 'चत्वारश्चैव' मु. ६. एतदर्धं मुद्रितपुस्तके नास्ति. ७. 'सामर्षोऽथ निरामर्षोऽपि लापो संलापको नाम' मु. ८. '°त्स्य' मु.

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसंयुता[1] या बहुनृत्तगीता।
कामोपभोगप्रभवोपचारा
तां कैशिकीं वृत्तिमुदाहरन्ति ॥ ४६ ॥

नर्म[2] च नर्मस्फुर्जो[3] नर्मस्फोटोऽथ नर्मगर्भश्च।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥ ४७ ॥
आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम्।
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥ ४८ ॥
ईर्ष्याक्रोधप्रयासोपालम्भवचनानुविद्धं[4][5] च।
आत्मोपक्षेपकृतं[6] सविप्रलम्भं स्मृतं नर्म ॥ ४९ ॥
नवसंगमसंभोगो रतिसमुदयवाक्यैर्वेपसंयुक्तः[7]।
ज्ञेयो नर्मस्फुर्जो[8] ह्यवसानभयानकश्चैव[9] ॥ ५० ॥
विविधाना भावानां लवैर्लवैर्भूषितो बहुविशेषैः[10]।
असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेय ॥ ५१ ॥
विज्ञानरूपसंभावनादिभिर्नायको[11] गुणैर्यत्र।
प्रच्छन्नं[12] व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥ ५२ ॥
[ पूर्वस्थितान्[13]निपद्येत(?)यत्र चान्यतमनायकस्तिष्ठेत्।
तमपीह नर्मगर्भं वदन्ति नाट्यप्रयोगेऽस्मिन् ॥ ५३ ॥ ]
इत्यष्टार्थविकल्पा वृत्तिरियं कैशिकी मया प्रोक्ता[14]।
अत ऊर्ध्वमुद्धतरसामारभटीं संप्रवक्ष्यामि ॥ ५४ ॥
आरभटमायगुणा तथैव बहुकपटवञ्चनोपेता[15]।
दम्भानृतवचनवती त्वारभटी नाम विज्ञेया ॥ ५५ ॥

---

१. 'स्त्रीपुंसयुक्ता' मु २. 'सनर्म' मु ३. 'नर्मस्फुञ्जो' लि. ४ 'ईर्ष्याक्रोधप्रायं सोपालम्भवचनानुविद्धं च।' मु ५ 'वचनाविद्धं च' लि. ६. 'आत्मोपक्षेपकृत' मु. ७. 'वाक्यवेषसंयुक्तं' का. ८ 'नर्मस्फुञ्जो' लि. ९. 'ह्यवमान' भयानकश्चैव' लि १०. 'बहुविशेष' का. ११. 'विज्ञानरूपसमावादि' मु. १२. 'प्रच्छन्नं' लि. १३. इयमार्या लिखितादर्शयोर्नास्ति। १४. 'मयाभिहिता' लि. १५. 'बहुवचनकपटा च' का.

प्रस्तावपातप्लुतलङ्घि[1]तानि चान्[2]यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युक्तानि च[3] यत्र नित्यं तां तादृशीमारभटीं वदन्ति ॥५६॥
संक्षिप्तकावपा[4]तौ वस्तूत्थापनमथापि संफेटः ।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि ।
अन्वर्थशिल्पयुक्तो [5]बहुपुस्तोत्थानचित्रनेपथ्यः ।
संक्षिप्तवस्तुवि[6]षयो ज्ञेयः[7] संक्षिप्तको नाम ॥ ५७ ॥
भयहर्[8]षसमुत्थानं विद्रुतसंभ्रान्तविविधवचनं च ।
क्षिप्रप्रवेशनिर्गममवपातमिमं वि[9]जानन्ति ॥ ५८ ॥
[10]सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वापि ।
नाट्यं विभाव्यते यत्तद्वस्तूत्थापनं ज्ञेयम् ॥ ५९ ॥
सं[11]रम्भसमायुक्तो बहुयुद्धनियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः संफेटो नाम विज्ञेयः ॥ ६० ॥
एवमेता बुधैर्ज्ञेया वृत्तयो ना[12]ट्यसंश्रयाः ।
[13]रसप्रयोगमासां च कीर्त्यमानं निबोधत ॥ ६१ ॥
[14]शृङ्गारे चैव हास्ये च वृत्तिः स्यात् कैशिकीति सा ।
[15]सात्वती नाम सा ज्ञेया वीररौद्राद्भुताश्रया ॥ ६२ ॥
[16]भयानके च बीभत्से रौद्रे चारभटी भवेत् ।

---

१. 'वञ्चितानि' क-ख. २. 'छद्यानि' लि. ३. 'युद्धानि' लि. ४. 'संक्षिप्तकाव-पातौ' का. ५. 'पुस्तोत्थापनचित्रनेपथ्यः' मु. 'बहुपुंस्त्वोत्थानवाच(?) संयुक्तः' लि. ६. 'विज्ञो ज्ञेयः संक्षिप्तको नाम' मु. ७. 'सोऽपि हि संक्षिप्तको ज्ञेयः' लि. ८. 'विद्रव-विनिपातसंभ्रमावरणम्' लि. ९. 'विजानीयात्' लि. १०. 'सर्वरससमासकृतं सविद्रवम-विद्रवाश्रयं चापि । पश्चाद्विभाव्यते यत्' मु., 'नैकरसक्लेशयुक्तं सविद्रवं वाप्यविद्रवं वापि । कार्यं विभाव्यते तद्वस्तूत्थापनं ज्ञेयम् ॥' लि. ११. 'संरम्भसंप्रयुक्तो बाहु[नि]युद्धाति-युद्धकपटनिर्भेदः । शस्त्रप्रहारब[हु]लः संस्फोटो नाम विज्ञेयः ॥' इति लि. १२. 'वृत्तयो नाट्यमातरः' लि.; 'वृत्तयः काव्यहेतवे' क-ख. १३. 'रससंप्रयोगतासां च गदतो मे निबोधत ।' क-ख. १४. 'हास्यशृङ्गारकरुणैर्वृत्तिः स्यात् कैशिकी रसैः । सात्वती चापि च ज्ञेया वीराद्भुतसमाश्रया ॥' लि, मु., 'हास्यशृङ्गारबहुला कैशिकी परिप्रश्निता ।' क-ख. १५. 'सात्वती चापि विज्ञेया वीररौद्राद्भुताश्रया' मु. १६. 'रौद्रे भयानके चैव विज्ञेयारभटी बुधैः । बीभत्से करुणे चैव भारती संप्रकीर्तिता ॥' लि.

भारती चापि विज्ञेया करुणाद्भुतसंश्रया ॥ ६३ ॥
[ न[1] ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः।
भावोऽपि रसो वापि प्रवृत्तिरेव वा (?) ॥ ६४ ॥
सर्वेषां समवेतानां रूपं यस्य भवेद्बहु।
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ॥ ६५ ॥ ]
वृत्त्यन्त एषोऽभिनयो मयोक्तो।
वागङ्गसत्त्वप्रभवो यथावत्[2]।
आहार्यमेवाभिनयं प्रयोगे।
वक्ष्यामि नेपथ्यकृतं पुनश्च[3] ॥ ६६ ॥

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नाम विंशोऽध्यायः[4]।

---

अथैकविंशोऽध्यायः[5]।

आहार्याभिनयं विप्राः प्रवक्ष्याम्यनुपूर्वशः।
एवमेव[6] प्रयोगोऽयं यतस्तस्मिन् प्रतिष्ठितः ॥ १ ॥
आहार्याभिनयो[7] नाम ज्ञेयो नेपथ्यजो विधिः।
तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता ॥ २ ॥
[ तस्मिन्[8] यत्नस्तु कर्तव्यो नेपथ्ये शुभमिच्छता।
नाट्यस्येह स्वलंकारो नेपथ्यं समप्रकीर्तितम् ॥ ३ ॥ ]
नानावस्थाः प्रकृतयः पूर्वनेपथ्यसूचिकाः[9]।
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः[10] ॥ ४ ॥

---

१. सेयं कोष्ठकबद्धा पद्यद्वयी का. पुस्तकेऽधिका। २. 'समासात्' लि. ३ 'च भूय' मु; 'यथावत्' लि. ४. 'इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नामाध्यायो विंश' लि. ५. 'एकविंशोऽध्याय.' लि. ६. 'प्रयोगो यत्र सर्वोऽयमाहार्याभिनये स्थित.।' लि. ७. इतः पूर्वं लिखितादर्शे 'नानावस्था प्रकृतय. पूर्वं नेपथ्यसाधिताः। अङ्गादिभिरभिव्यक्तिमन्ते गच्छन्त्ययत्नत. ॥' इति पद्यम्। तदेतत्संख्याने द्वितीयं पद्यं काशीमुद्रितपुस्तके चतुर्थत्वेन वर्तते। तथैवात्रापि चतुर्थत्वेन द्रष्टव्यम्। ८. 'श्लोकोऽयं का. पुस्तकेऽधिक।' ९. 'पूर्वं नेपथ्यसाधिता.' लि. १०. 'अन्ते गच्छन्त्ययत्नत.' लि.

चतुर्विधं तु नेपथ्यं पुस्तोऽलंकार[1] एव च ।
तथाङ्गरचना[2] चैव ज्ञेयः संजीवं[3] एव च ॥ ५ ॥
पुनस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
संधिमो व्याजिमश्चैव चेष्टिमश्च[4] प्रकीर्तितः ॥ ६ ॥
[5]किलिञ्चवस्त्रचर्माद्यैर्यद्रूपं क्रियते बुधैः ।
संधिमो नाम विज्ञेयः पुस्तो नाटकसंश्रयः[6] ॥ ७ ॥
व्याजिमो नाम[7] विज्ञेयो यन्त्रेण क्रियते तु यः ।
चेष्टते चैव यद्रूपं चेष्टिमः स तु संज्ञितः[8] ॥ ८ ॥
शैल[9]यानविमानानि चर्मवर्मध्वजा नगाः ।
यानि क्रियन्ते नाट्ये हि[10] स पुस्त इति संज्ञितः ॥ ९ ॥
अलंकारस्तु विज्ञेयो माल्याभरणवाससा[11] ।
नानाविधसमायोगात् [ यो ]ऽङ्गोपाङ्गविनिर्मितः[12] ॥ १० ॥
[13]वेष्टितं वितत[14]ं चैव संघात्यं ग्रन्थिमं तथा ।
प्रलम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम् ॥ ११ ॥
चतुर्विधं तु विज्ञेयं देहस्याभरणं बुधैः ।
आवेध्यं[15] बन्धनीयं च प्रक्षेप्यारोप्यके[16] तथा ॥ १२ ॥
आवेध्यं[17] कुण्डलादीह तथा[18] श्रवणभूषणम् ।
श्रोणिसूत्राङ्गदैर्मुक्ताबन्धनीयानि निर्दिशेत्[19] ॥ १३ ॥
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ।
आरोप्यं हेमसूत्रादि[20] हाराश्च विविधाश्रयाः ॥ १४ ॥

१. 'मुक्तालंकार एव च' लि. २. 'माल्याङ्गरचना' लि. ३. 'सञ्जीवमेव' लि. ४. 'वेष्टितश्च' लि. ५. 'कैलिञ्जं चर्मवस्त्राद्यैः' लि. ६. 'नरकसंश्रय (?)' लि. ७. 'वा सुविज्ञेयो' लि. ८. 'ये खेदे चैव यद्रूप वस्त्राद्यैर्वेष्टितः स तु ।' लि. ९. 'शील' लि. १०. 'तु' लि. ११. 'माल्याभरणवाससाम्' लि. १२. 'योगोऽ(ङ्गो)पाङ्गविनिर्मितः' लि. १३. 'विष्टिमं(?)' लि. १४. 'वेपितं(?)' लि. १५. 'आवेध्यं' लि. १६. 'क्षेप्यमाप्यकं' लि. १७. 'आवेध्यं' लि. १८. 'यस्मात्' लि. १९. 'बन्धनीया विनिर्दिशेत्' लि. २०. 'हेमसूत्राणि' लि.

भारती चापि विज्ञेया करुणाद्भुतसंश्रया ॥ ६३ ॥

[ ने ह्येकरसजं काव्यं किंचिदस्ति प्रयोगतः ।
भावोऽपि रसो वापि प्रवृत्तिर्वृत्तिरेव वा (?) ॥ ६४ ॥
सर्वेषां समवेतानां रूपं यस्य भवेद्बहु ।
स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ॥ ६५ ॥]

वृत्त्यन्त एषोऽभिनयो मयोक्तो ।
वागङ्गसत्त्वप्रभवो यथावत् ।
आहार्यमेवाभिनयं प्रयोगे ।
वक्ष्यामि नेपथ्यकृतं पुनश्च ॥ ६६ ॥

इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नाम विंशोऽध्यायः ।

---

अथैकविंशोऽध्यायः ।

आहार्याभिनयं विप्राः प्रवक्ष्याम्यनुपूर्वशः ।
एवमेव प्रयोगोऽयं यतस्तस्मिन् प्रतिष्ठितः ॥ १ ॥
आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः ।
तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता ॥ २ ॥
[ तस्मिन् यत्नस्तु कर्तव्यो नेपथ्ये शुभमिच्छता ।
नाट्यस्येह त्वलंकारो नेपथ्यं संप्रकीर्तितम् ॥ ३ ॥]
नानावस्थाः प्रकृतयः पूर्वनेपथ्यसूचिकाः ।
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः ॥ ४ ॥

---

१. सेयं कोष्ठकबद्धा पद्यद्वयी का. पुस्तकेऽधिका । २. 'समासात्' लि. ३ 'च भूयः' मु.; 'यथावत्' लि. ४. 'इति भारतीये नाट्यशास्त्रे वृत्तिविकल्पो नामाध्यायो विंश' लि. ५. 'एकविंशोऽध्यायः' लि. ६. 'प्रयोगो यत्र सर्वोऽयमाहार्याभिनये स्थितः ।' लि. ७. इतः पूर्वं लिखितादर्शे 'नानावस्थाः प्रकृतयः पूर्वं नेपथ्यसाधिताः । अङ्गादिभिरभिव्यक्तिमन्ते गच्छन्त्ययत्नतः ॥' इति पद्यम् । तदेतत्संस्थाने द्वितीयं पद्यं काशीमुद्रितपुस्तके चतुर्थत्वेन वर्तते । तथैवात्रापि चतुर्थत्वेन द्रष्टव्यम् । ८. 'श्लोकोऽयं का. पुस्तकेऽधिकः ।' ९. 'पूर्वं नेपथ्यसाधिताः' लि. १०. 'अन्ते गच्छन्त्ययत्नतः' लि.

चतुर्विधं तु नेपथ्यं पुस्तोऽलंकार एव च ।
तथाङ्गरचना चैव ज्ञेयः संजीव एव च ॥ ५ ॥
पुनस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
संधिमो व्याजिमश्चैव चेष्टिमश्च प्रकीर्तितः ॥ ६ ॥
किलिञ्जवस्त्रचर्माद्यैर्यद्रूपं क्रियते बुधैः ।
संधिमो नाम विज्ञेयः पुस्तो नाटकसंश्रयः ॥ ७ ॥
व्याजिमो नाम विज्ञेयो यन्त्रेण क्रियते तु यः ।
चेष्ट्यते चैव यद्रूपं चेष्टिमः स तु संज्ञितः ॥ ८ ॥
शैलयानविमानानि चर्मवर्मध्वजा नगाः ।
यानि क्रियन्ते नाट्ये हि स पुस्त इति संज्ञितः ॥ ९ ॥
अलंकारस्तु विज्ञेयो माल्याभरणवाससा ।
नानाविधसमायोगात् [ यो ]ऽङ्गोपाङ्गविनिर्मितः ॥ १० ॥
वेष्टितं विततं चैव संघात्यं ग्रन्थिमं तथा ।
प्रलम्बित तथा चैव माल्यं पञ्चविधं स्मृतम् ॥ ११ ॥
चतुर्विधं तु विज्ञेयं देहस्याभरणं बुधैः ।
आवेध्यं बन्धनीयं च प्रक्षेप्यारोपके तथा ॥ १२ ॥
आवेध्यं कुण्डलादीह तथा श्रवणभूषणम् ।
श्रोणिसूत्राङ्गदैर्मुक्ताबन्धनीयानि निर्दिशेत् ॥ १३ ॥
प्रक्षेप्यं नूपुरं विद्याद्वस्त्राभरणमेव च ।
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः ॥ १४ ॥

१. 'मुक्तालंकार एव च' लि. २. 'नाट्याङ्गरचना' लि. ३. 'सञ्जीवमेव' लि. ४. 'वेष्टितश्च' लि. ५. 'कैलिञ्जं चर्मवस्त्राद्ये' लि. ६. 'नरकसश्रय (?)' लि. ७. 'वा सुविज्ञेयो' लि ८. 'ये खेठे चैव यद्रूप वस्त्राद्यैर्वेष्टित स तु ।' लि. ९. 'शील' लि. १०. 'तु' लि ११. 'माल्याभरणवाससाम्' लि. १२. 'योगोऽ(ङ्गो)पाङ्गविनिर्मित' लि. १३. 'विष्टिम(?)' लि. १४. 'वेपित(?)' लि. १५. 'आवेध्यं' लि. १६. 'क्षेप्यमाप्यक' लि. १७. 'आवेध्यं' लि. १८. 'यत्स्यात्' लि. १९. 'बन्धनीया विनिर्दिशेत्' लि. २०. 'हेमसूत्राणि' लि.

भूषणानां विकल्पं च पुरुषस्त्रीसमाश्रयम् ।
नानाविधं प्रवक्ष्यामि देशजातिसमुद्भवम् ॥ १५ ॥
चूडामणिः समुकुटः शिरसो भूषणं स्मृतम् ।
कुण्डलं मोचकं कीलः [1]कर्णाभरणमिष्यते ॥ १६ ॥
मुक्तावली हर्षकं च [2]सत्सूत्रं कण्ठभूषणम् ।
[3]कटकोऽङ्गुलिमुद्रा च स्यादङ्गुलिविभूषणम् ॥ १७ ॥
[ [4]हस्तवी वलयं चैव बहुनालीविभूषणम् ।
रुचकोचितके( कः? )श्चैव मणिबन्धविभूषणम् ॥ १८ ॥ ]
[5]केयूरमङ्गदं चैव कूर्परोपरि भूषणम् ।
[6]त्रिसरश्चैव हारश्च [7]भवेद्वक्षोविभूषणम् ॥ १९ ॥
व्यालम्बिमौ[8]क्तिकाहारा [9]माल्याद्या देहभूषणम् ।
तरलं सूत्रकं चैव भवेत्कटिविभूषणम् ॥ २० ॥
अयं पुरुषनियोगः कार्यस्त्वाभरणाश्रयः ।
देवानां पार्थिवानां च पुनर्वक्ष्यामि योषिताम् ॥ २१ ॥
[10]शिखापाशः शिखाजालं पिण्डपात्रं तथैव च ।
[11]चूडामणिर्मकरिका मुक्ताजालं [12]गवाक्षकम् ॥ २२ ॥
[ [13]शिरसो भूषणं चैव विचित्रं शीर्षजालकम् ।
कुण्डलं [14]शिखिपात्रं च [15]वेणीगुच्छः सदारकः ॥ २३ ॥
ललाटतिलकश्च नानाशिल्पप्रयोजिताः ।
भ्रूकक्षोपरि गुच्छश्च कुसुमानुकृतिर्भवेत् ॥ २४ ॥
कर्णिका कर्णवलयं तथा स्यात् पत्रकर्णिका ।
[16]आवेष्टितः कर्णमुद्रा [17]कर्णोत्कीलकमेव ॥ २५ ॥

१. 'कुण्डलं कर्णमेवैक कलाकरणमिष्यते' लि २. 'सत्सूत्र' का. ३. 'घटिकाङ्गुलिमुद्रा च' लि. ४. पद्यमिदं का. पुस्तकेऽधिकम्. ५. 'केयूरावङ्गदे चैव' लि. ६. 'त्रिरस चैव हारं च' का. ७. 'विवा ( ग्रीवा? ) 'वक्षोजभूषणम्' लि. ८. 'मुक्तिकाहारा' लि. ९. 'माल्याद्या' लि. १०. 'शिखापाश' लि. ११. 'चूडामणि' लि. १२. 'गवाक्षि' लि. १३. 'पद्यार्धमेतत् केवलं का. पुस्तक एवोपलभ्यते । १४. 'खङ्गपात्र च' लि, १५. 'वेणीकञ्जधरोचकम्' का. १६. 'आपेश्रुक (?)' लि. १७. 'कर्णोत्कीलक एव च' का.

[1]नानारत्नविचित्राणि दन्तपत्राणि चैव हि ।
कर्णयोर्भूषणं कार्यं कर्णपूरस्तथैव च ॥ २६ ॥
[2]तिलकः पत्ररेखा च भवेद्गण्डविभूषणम् ।
[3][ त्रिवेणी चैव विज्ञेयं भवेद्वक्षोविभूषणम् ॥ २७ ॥
नेत्रयोरञ्जनं कार्यमधरस्य च रञ्जनम् ।
दन्तानां विविधा रागाश्चतुर्णां शुक्लता तथा ।
रागान्तरविकल्पार्थशोभनेनाधिकोज्ज्वलः(ला) ॥ २८ ॥
मुग्धानां सुन्दरीणां च मुक्ताभाः सितशोभनाः ।
सुरक्ता वापि दन्ताः स्युः पद्मपल्लवरञ्जनाः ॥ २९ ॥
अश्मरागो द्योतितः स्यादधरः पल्लवप्रभः ।
विलासश्च भवेत्तासां सविभ्रान्तनिरीक्षितम् ॥ ३० ॥ ]
*मुक्तावली व्यालपङ्क्तिर्मञ्जरी रत्नमालिका ।*
रत्नावलीसूत्रकं च ज्ञेयं कण्ठविभूषणम् ॥ ३१ ॥
[4][ द्विसर( सर ? )स्त्रिसर( सर ? )श्चैव चतूरस( चतुःसर ? )कमेव च ।
तथा शृङ्खलिका चैव भवेत्कण्ठविभूषणम् ॥ ३२ ॥ ]
[5]नानारत्नकृताश्चैव हारा वक्षोविभूषणम् ।
[6]मणिजालावनद्धं च भवेत् [7]स्तनविभूषणम् ॥ ३३ ॥
[ [8]अङ्गदं वलयं चैव बाहुमूलविभूषणम् ।

---

१. 'नानाचित्रविचित्राणि रत्नपात्राणि चैव हि ।' का. २. 'तिलकाः पत्रलेखाश्च' लि. ३. एतदारभ्य श्लोकचतुष्टयं केवलं काशीमुद्रितपुस्तक एवोपलभ्यते. ४. एष श्लोकः केवलं काशीमुद्रितपुस्तक एवोपलभ्यते । ५. 'नानाशिल्पकृताश्चैव' का. ६. 'मणिजालानुबन्धं च' लि. ७. 'पृष्ठविभूषणम्' लि. ८. तदेतत्–काशीमुद्रितपुस्तकातिरिक्तपुस्तकेषु श्लोकत्रयमेवम्—

'मुद्राङ्गुलीयकं चैव ह्यङ्गुल्याभरणी भवेत् ।
शङ्खकलापी कटकं तथा स्यात् पत्रपूरकम् ॥
खर्जूरकांशोपितिकं बाहुनानाविभूषणम् ।
अङ्गुदेव(?) त्रयं चैव ज्ञेयं बाहुविभूषणम् ॥
मुक्ताजालाद्यतिलकं मेखला काञ्च्यथापि वा ॥
रसना च कलापश्च ज्ञेयं श्रोणिविभूषणम् ॥'

ब(ख?)र्जुरं खेच्छितीकश्च बाहुनालीविभूषणम् ॥ ३४ ॥
कटकं कलशाखा च हस्तपत्रं सुपूरकम्।
मुद्राङ्गुलीयकं च स्यादङ्गुलीनां विभूषणम् ॥ ३५ ॥
काञ्ची मौक्तिकजालाढ्या कुलकं मेखलं तथा।
रशना च कलापश्च भवेच्छ्रोणीविभूषणम् ॥ ३६ ॥]
एकयष्टिर्भवेत् काञ्ची मेखला त्वष्टयष्टिका।
रशना षोडश ज्ञेया कलापः पञ्चविंशतिः ॥ ३७ ॥
द्वात्रिंशच्च चतुःषष्टिः शतमष्टोत्तरं तथा।
मुक्ताहारा भवन्त्येते देवपार्थिवयोषिताम् ॥ ३८ ॥
नूपुरः किङ्किणीकं च रत्नजालकमेव च।
संघोषकटकं चैव गुल्फोपरि विभूषणम् ॥ ३९ ॥
पदयोः पादपात्रं स्यादङ्गुलीष्वङ्गुलीयकम्।
अङ्गुष्ठे तिलकं चैव पादयोश्च विभूषणम् ॥ ४० ॥
[तथैवालक्तरागश्च नानाभक्तिनिवेशितः।
अशोकपल्लवच्छायः स्यात् स्वाभाविक एव वा ॥ ४१ ॥]
एतद्विभूषणं नार्या आकेशादानखादपि।
यथाभावरसावस्थं विज्ञायैवं प्रयोजयेत् ॥ ४२ ॥
आगमश्च प्रमाणं च रूपनिर्वर्णनं तथा।
विश्वकर्मोद्भवं कार्यं बुध्वा चापि प्रयोजयेत् ॥ ४३ ॥
..........बहुविधं नानापत्तनसंभवम्।
तज्ज्ञेयं त्रिप्रकारं तु शुद्धं रक्तं विचित्रितम् ॥ ४४ ॥

---

१. 'रसना षोडश ज्ञेयाः' लि. २. 'द्वात्रिंशत् षोडशाष्टौ च चतुःषष्टिः शतं तथा।' लि. ३. '[नू]पुरे [कि]ङ्किणीकाश्च घण्टिका लालमेव च। सुघोषे कटके चैव गुल्फोपरि विभूषणम् ॥' लि. ४. 'जङ्घयोः पदपत्रं स्यात्' का. ५. 'तु' का. ६. 'पद्यमेतदधिकं का. पुस्तके. ७. लि. पुस्तके तु—'तथा भावरसावस्थं विज्ञेयं द्विजसत्तमाः। एतद्विभूषणं नार्या आकेशादानखादपि ॥' एवं पौर्वापर्येण वर्तते। ८. 'विश्वकर्मभ-(मौक)वत्कार्यं' लि. ९. इतःप्रभृति श्लोकद्वयं का. पुस्तके नास्ति।

दिव्यपार्थिवयोरेवं प्रोक्तमेतद्द्विधा द्विजाः ।
[1]नहि शक्यं सुवर्णेन मुक्ताभिर्मणिभिस्तथा ॥ ४५ ॥
[2]स्वाधीनं चेच्छया चैव कर्तुमङ्गस्य भूषणम् ।
[3][ विभावतोऽभिप्रयुक्तमङ्गशोभाकरं भवेत् ॥ ४६ ॥
यथा स्थानान्तरगतं भूषणं रत्नसंयुतम् ।
न तु नाट्यप्रयोगेषु कर्तव्यं भूषणं बहु ॥ ४७ ॥
खेदं जनयते तद्धि सव्यायतविचेष्टनात् ।
गुर्वाभरणसन्नो हि चेष्टां न कुरुते पुनः ॥ ४८ ॥
गुरुभारावसन्नस्य खेदो मूर्च्छा प्रजायते ।
तस्मात् न सम्यक् च कृतं सौवर्णं भूषणं भवेत् ॥ ४९ ॥
जतुपूर्णाल्पपत्रं तु न खेदजननं भवेत् ।
स्वेच्छया भूषणविधिर्दिव्यानामुपदिश्यते ।
यदभावाद्विनिष्पन्ना मानुषाणां विभूषणम् ॥ ५० ॥ ]
भूषणैश्चापि वेषैश्च[4] नानावस्था[5]समाश्रयैः ।
दिव्याङ्गनानां कर्तव्या विभक्तिः[6] स्वस्वभूमिजा ॥ ५१ ॥
विद्याधरीणां यक्षीणामप्सरोनागयोषिताम् ।
[7][ ऋषिदैवतकन्यानां वेषैर्नानात्वमिष्यते ॥ ५२ ॥ ]

---

१. 'तर्हि शक्यमनुसारेण' ञ, शक्यमनुवर्ण(?)' क-ख. २. 'स्वाधीनमतिस्वल्पेव' छ,. ३. लिखितादर्शेषु कोष्टबद्धश्लोकपञ्चकस्थाने सार्धश्लोकद्वयमेवं वर्तते—'मुक्तामणिलताप्रायं फणास्थाने तु केवलम्(?) । कार्यं तु मुनिकन्यानामेकवेणिधरं शिरः । न चापि भूषणविधिस्तासामप्यर्पितो भवेत् । एव शृङ्गारेण कार्या चेषा देवाङ्गनाश्रयाः ॥ मानुषीणां तु कर्तव्या नानादेशसमाश्रयैः ॥' ४. 'वेषैश्च' क-ख. ५. 'नानास्थानसमाश्रयै.' क-ख. ६. 'विभक्तिश्च......भूमिजा' क-ख. ७. कोष्टबद्धश्लोकानां स्थाने क-ख, पुस्तकयोस्तु—

'मुक्तामणिमणिप्रायं पन्नगस्त्रीणां च मूर्धनि ।
अप्सरोयक्षनारीणां कार्यं कार्यं च भूषणम् ॥
समस्तानां भवेद्वेषो यक्षाणां केवलं स्त्रिया ।
स्त्रियास्तु शशिखण्डं च मुक्ताभूमिष्टभूषणम् ।

तथा च सिद्धगन्धर्वराक्षसासुरयोषिताम्।
दिव्यानां नरनारीणां मानुषीणां तथैव च ॥ ५३ ॥
शिखापुटशिखण्डा तु मुक्ताभूयिष्ठभूषणम्।]
विद्याधरीणां कर्तव्यः शुद्धो वेषपरिच्छदः ॥ ५४ ॥
[यक्षिण्यप्सरसां चैव कार्यं रत्नैर्विभूषणम्।
यस्त्वासां तु भवेद्वेषो यक्षीणां केवलं शिखा ॥ ५५ ॥
दिव्यवत् संप्रकर्तव्यं नागीनां तु विभूषणम्।]
मुक्तामणिलताप्रायं फलं तासां तु केवलम् ॥ ५६ ॥
कार्यं तु मुनिकन्यानामेकवेणीधरं शिरः।
न चापि भूषणं कार्यं तासामत्यर्थतो भवेत् ॥ ५७ ॥
[मुक्तामरकतप्रायं मण्डनं सिद्धयोषिताम्।
तासां चैव तु कर्तव्यं पीतवस्त्रपरिच्छदम् ॥ ५८ ॥
पद्म[राग?] मणिप्रायं गन्धर्वीणां विभूषणम्।
वीणाहस्ता च कर्तव्याः कौसुम्भवसनास्तथा ॥ ५९ ॥
इन्द्रनीलैस्तु कर्तव्यं राक्षसीनां विभूषणम्।
सिता दंष्ट्रा च कर्तव्या कृष्णवस्त्रपरिच्छदः ॥ ६० ॥
वैदूर्यमुक्ताभरणाः कर्तव्याः सुरयोषितः।
शुकपिच्छनिभैर्वस्त्रैः कार्यस्तासां परिच्छदः ॥ ६१ ॥
पुष्परागैश्च मणिभिः क्वचिद्वैदूर्यभूषितम्।
दिव्यवानरनारीणां कार्या नीलपरिच्छदाः ॥ ६२ ॥]
एवं शृङ्गारिणः कार्यो वेषो दिव्याङ्गनाश्रियः।
अवस्थान्तरमासाद्य शुद्धाः कार्याः पुनस्तथा ॥ ६३ ॥

---

१. 'कर्तव्यं चित्रवेषपरिच्छदं' क-ख. २. कोष्ठकबद्धं सार्धपद्यं ख-क. पुस्तकयोर्नास्ति। ३. पद्यार्धमेतत् क-ख. पुस्तकयोः—'मुक्तामणिमणिप्रायं फणीस्तासां च मूर्धनि' इति पूर्वमेव. ४. 'भूषणविधिस्तासां वेषोवनोचित.' इति क ख. पुस्तकयोः। ५. इतः प्रभृति कोष्ठकबद्धं श्लोकपञ्चकं काशीमुद्रितपुस्तकेऽधिकम्। ६. 'भुवं (एवं?) शृङ्गारिणः कार्या वेषा दिव्याङ्गनासु वा।' इति क-ख. पुस्तकयोः। ७. 'तथैव च' क-ख.

मानुषीणां तु कर्तव्या नानादेशसमुद्भवाः ।
वेषास्त्वाभरणोपेतास्तांश्च सम्यङ् निबोधत ॥ ६४ ॥
अवन्तियुवतीनां तु शिरः सालककुन्तलम् ।
गौडीनामलकप्रायं [1]सशिखापाशवेणिकम् ॥ ६५ ॥
आभीरयुवतीनां तु द्विवेणीधरमेव च ।
शिरःपरि[2]गतं कार्यं नीलप्रायमथाम्बरम् ॥ ६६ ॥
तथा पूर्वोत्तरस्त्रीणां समुद्धतशि[3]खण्डिकम् ।
[4]आकेशं छादनं तासां वेषकर्मणि कीर्तितम् ॥ ६७ ॥
तथा च दक्षिणस्त्रीणां कार्यमुल्लेख्यसंश्रितम् ।
[5]कुम्भीपदकसंयुक्तं तथावर्तल[6]ललाटिकम् ॥ ६८ ॥
[7] [ गणिकानां तु कर्तव्यमिच्छाविच्छित्तिमण्डनम् ॥ ६९ ॥ ]
दे[8]शजातिविशेषेण देशा[9]नामपि कारयेत् ।
[10]वेषं तथा चाभरणं क्षुरकर्मपरिच्छदम् ॥ ७० ॥
अदे[11]शजो हि वेषस्तु न शोभां जनयिष्यति ।
मेखलोरसि बन्धे च [12]हास्यायैवोपजायते ॥ ७१ ॥
तथा प्रोषितकान्ता या[13] व्यसनाभिहताश्च याः ।
[14]वेषः स्यान्मलिनस्तासामेकवेणीधरं शिरः ॥ ७२ ॥
विप्रलम्भे हि [15]नार्यास्तु शुद्धो वेषो भवेदिह ।
[16]नानाभरणसंयुक्तो न चापि मृजयान्वितः ।
एवं स्त्रीणां प्रयोक्तव्या दे[17]शावस्थासमुद्भवाः ॥ ७३ ॥

---

१. 'शेषा प्रायेकवेणिकम्' क-ख. २. 'परिगमप्रायो' का. मु ३. 'शिखण्डकम्' क-ख. ४. 'आवेशाछदक सासां दशकर्मणि कीर्तितम् ।' क-ख. ५. 'कुम्भीपयाङ्-सयुक्तम्' क-ख. ६. 'ललाटकम्' क-ख. ७. पद्यार्धमेतत् क-ख. पुस्तकयोर्नास्ति । ८. 'देशजातिविधानेन' क-ख. ९. 'शेषाणामपि' क-ख. १०. 'येषां' क-ख. ११. 'आदेशयुक्तो' क-ख. १२. 'हास्यं समुपपादयेत्' क-ख. १३. 'प्रोषितकान्तासु मदनाभिहतासु च' क-ख. १४. 'वेषो वै मलिन कार्यः शिरश्चाप्येकवेणिकम् ।' इति क-ख. १५. 'भार्यास्तु' क-ख. १६. 'नान्याभरणसंयुक्तो नवापिहिनतायुत.' (?) क-ख. १७. 'वेषा देशसमुद्भवा.' क-ख.

पुरुषाणां पुनश्चैव वेषान् वक्ष्यामि तत्त्वतः ।
तत्राङ्गरचना पूर्वं कर्तव्या नाट्ययोक्तृभिः ॥ ७४ ॥
[ सितनीलसमायोगात् पाण्डुवर्णः प्रकीर्तितः ।
सितरक्तसमायोगात् पद्मवर्ण इति स्मृतः ॥ ७५ ॥
पीतनीलसमायोगाद् हरितो नाम जायते ।
नीलरक्तसमायोगात् कषायो नाम जायते ॥ ७६ ॥
रक्तपीतसमायोगात् गौर इत्यभिधीयते । ]
एते संयोगजा वर्णा ह्युपवर्णास्तथापरे ॥ ७७ ॥
त्रिचतुर्वर्णसंयुक्ता बहवः परिकीर्तिताः । [1]
बलस्थो यो भवेद्वर्णस्तस्य भागो भवेत्ततः ॥ ७८ ॥
दुर्बलस्य च भागौ द्वौ नीलमुक्त्वा प्रदाप(दाप ?)येत् ।
नीलस्यैको भवेद्भागश्चत्वारोऽन्ये तु वर्णके ॥ ७९ ॥
बलवान् सर्ववर्णानां नील एव प्रकीर्तितः ।
एवं वर्णविधिं ज्ञात्वा नानासंयोगसंभवम् ।
ततस्तु वर्तना कार्या नानारूपसमाश्रया ॥ ८० ॥

---

१ कोष्ठबद्धश्लोकानां स्थाने क ख. पुस्तकयोस्तु—
सितो नीलश्च पीतश्च चतुर्थो रक्त एव च ।
एवं स्वभावजा वर्णा ये कार्ये लङ्घन [र्णकम् ?] ॥
संयोगजाः पुनस्त्वन्ये उपवर्णा भवन्ति हि ।
तथाहं संप्रवक्ष्यामि यथा कार्या प्रयोक्तृभिः ।
सितपीतसमायोगः पाण्डुवर्ण इति स्मृतः ।
सितरक्तसमायोगः पद्मवर्ण इति स्मृतः ।
सितनीलसमायोगः कापोतो नाम जायते ।
पीतनीलसमायोगाद् हरितो नाम जायते ।
नीलरक्तसमायोगात् काषायो नाम जायते ।
रक्तपीतसमायोगाद्गौर इत्यभिधीयते ॥' इत्येव पद्यानि ।
२ 'विधीयते' क ख. ३ 'नीलवर्णाद्वते भवेद्' क-ख. ४. 'चत्वारोऽन्यस्य तु स्मृता ।' क ख. ५ 'वर्णस्य तु बलीयस्त्व नीलस्यैव हि कीर्तते' इति क-ख. ६ 'मानसं योगसंश्रयम्'(?) क ख. ७ 'ततः कुर्याद् यथायोगमङ्गानां वर्तनं बुधः' क ख.

वर्तनाच्छादितं रूपं स्ववेषपरि[1]वर्तितम् ।
नाट्यधर्मप्रवृत्ते[2]न ज्ञेयं तद् प्रकृतिस्थितम् ॥ ८१ ॥
[ [3]स्ववर्णमात्मनश्चान्यं वर्णजैर्वेषसंश्रयैः ।
प्रकृतिवास्य कर्तव्या तस्य प्रकृतिमास्थिता ॥ ]
यथा [4]नरः स्वभावं स्वं परित्यज्यान्यदे[5]हजम् ।
पराभवं [6]प्रकुरुते भूतदेहसमाश्रयम् ॥ ८२ ॥
[7]वर्णकैश्चापि वेषैश्च छादितः पुरुषस्तथा ।
परभावं कुरुते यस्य वेप[8]संमाश्रयम् ॥ ८३ ॥
देवदानवग[9]न्धर्वयक्षराक्षसपन्नगाः ।
[10]ते प्राणिन इति प्रोक्ता जीवब[11]न्धाश्च ये त्विह ॥ ८४ ॥
[12][13]शैलप्रासादयन्त्राणि चर्मवर्म[14]ध्वजास्तथा ।
नानाप्रहरणाद्याश्च ते प्राणिन इति स्मृताः ॥ ८५ ॥
अथवा कारणोपेता भवन्त्येते शरीरिणः ।
वेषभाषाश्रयोपेता नाट्यधर्ममवेक्ष्य तु ॥ ८६ ॥
वर्णानां तु विधिं ज्ञात्वा [15]वयैः प्रकृतिमेव च ।
कुर्यादङ्गस्य रचनां देशजातिवयःश्रिताम् ॥ ८७ ॥
देवा गौरास्तु कर्तव्या यक्षाश्चाप्सरसस्तथा ।
[16]रुद्राः सद्रुहिणस्कन्दास्तपनीयसमप्रभाः ॥ ८८ ॥

१. 'स्ववेषपरिवर्जितम्' ख-क. २. 'नाट्यधर्मप्रवृत्तं तु' क-ख. ३. 'पद्यमेतत् क-ख. पुस्तकयोर्नास्ति ।' ४. 'जन्तु' क-ख. ५. '°देहिकम्' क-ख. ६. 'तत्स्वभावं हि भजते देहान्तरमुपाश्रितः ।' क-ख. ७. 'पोषणत्र्यपंको(?)श्चैव च्छादित. पुरुषस्तथा ।' क-ख. ८ 'यस्य वेषमुपाश्रित ' क-ख. ९. '°गन्धर्वा' क-ख. १०. 'प्राणिसंज्ञा. ( ज्ञाः ? ) कृता ह्येते' क-ख. ११. 'जीवबन्धास्तथापरे' क-ख. १२. इतः पूर्वं का. मु. पुस्तकेऽधिकमेतत्पद्यम्—

[ स्त्रीभावाः पर्वता मार्गाः समुद्रा वाहनानि च ॥
नानायन्त्राण्यपि तथा विज्ञेयाः प्राणिसंश्रया. । ]

१३. 'तथा' क-ख. १४. 'देवाभिरोद्व(?)' क-ख. १५. 'वश्ये' क-ख. १६. 'रुद्रार्क-द्रुहिणस्कन्दा' क-ख.

सोमो बृहस्पतिः शुक्रो वरुणस्तारकागणः ।
समुद्रो हिमवान् गङ्गा श्वेताः कार्यास्तु वर्णतः ॥ ८९ ॥
रक्तमङ्गारकं विद्यात् पीतौ बुधहुताशनौ ।
नारायणो नरश्चैव श्यामवर्णोऽथ वासुकिः ॥ ९० ॥
दैत्याश्च दानवाश्चैव राक्षसा गुह्यका नगाः ।
पिशाचा यम आकाशं श्यामवर्णास्तु वर्णतः ॥ ९१ ॥
नानावर्णाः स्मृता यक्षा गन्धर्वा भूतपन्नगाः ।
विद्याधराः सपितरो वानराश्च तथैव हि ॥ ९२ ॥
वसन्ति सप्तद्वीपेषु ये नरा वर्णतस्तु ते ।
कर्तव्या नाट्यतत्त्वज्ञैर्निष्टप्तकनकप्रभाः ॥ ९३ ॥
जम्बूद्वीपस्य वर्षे ये नानावर्णाश्रया नराः ।
उत्तरांस्तु कुरूंस्त्यक्त्वा ते चापि कनकप्रभाः ॥ ९४ ॥
भद्राश्च वपुषा श्वेताः कर्तव्या वर्णतो बुधैः ।
केतुमालास्तथा श्वेता गौराः शेषेषु कीर्तिताः ॥ ९५ ॥
नानावर्णाः स्मृता भूतो वामना विकृताननाः ।
वराहमेषमहिषमृगवक्त्रास्तथैव च ॥ ९६ ॥
पुनश्च भारते वर्षे तांस्तान् वर्णान् निबोधत ।
राजानः पद्मवर्णास्तु गौराः श्यामास्तथैव च ।
ये चापि सुखिनो मर्त्या गौराः कार्यास्तु ते बुधैः ॥ ९७ ॥

---

१. 'तारकामणी(?) क-ख. २. 'समुद्रादिलवा वर्णाः सिताः कार्यास्तु वर्णतः ।' क-ख. ३. 'सोमनागश्च' क ख. ४. 'पिशाचाजलमाकाशमसितावर्णतः स्मृताः ।' क-ख. ५. 'मानवाश्च' क-ख. ६. 'पह्नुण···द्वी···(?)' क-ख. ७. 'निष्टम्भ(?)' क-ख. ८. 'तु' क-ख. ९. 'इन्द्राश्च गुरुवा(?)श्वेता' क-ख. १०. 'कर्तव्या वर्णतस्तथा' क-ख. ११. 'केतुमाले नरा नीला-' क-ख. १२. क-ख-पुस्तकयोस्तु—'नानावर्णाः स्मृता यक्षा गन्धर्वा भूतपन्नगाः । विद्याधरास्तथा चैव पितरश्च समानवाः ॥' क-ख. १३. 'ताम्रान् वर्णानि(भि?) बोधत' क-ख. १४. 'विज्ञानः (राजानः)' क-ख. १५. 'पद्मवर्णाः स्यु-' इति काशीमुद्रिते । १६. 'श्यामो (मा?) गौरास्तथैव च ।' का. मु.

कुंकर्मिणो ग्रहग्रस्ता व्याधितास्तपसि स्थिताः ।
आ( अ ? )यस्तुकर्मिणश्चैव हसिताश्च कुजातयः ॥ ९८ ॥
ऋषयश्चैव कर्तव्या नित्यं तु बदरप्रभाः ।
तपःस्थिताश्च ऋषयो नित्यमेतावता बुधैः ॥ ९९ ॥
कारणव्यपदेशेन न तथात्मेच्छया पुनः ।
वर्णस्त्वन्योपि कर्तव्यो देशजातिवशोऽनुगः ॥ १०० ॥
देशं कालं च जातिं च पृथिव्युद्देशमेव च ।
विज्ञाय वर्तना कार्या पुरुषाणां प्रयोगतः ॥ १०१ ॥
किरातबर्बरान्ध्राश्च द्रविडाः काशिकोसलाः ।
पुलिन्दा दाक्षिणात्याश्च प्रायेण स्वसिताः स्मृताः ॥ १०२ ॥
शकाश्च यवनाश्चैव पौह्(ह्ल?) वा बाह्लिकाश्रयाः ।
प्रायेण गौराः कर्तव्या उत्तरां ये श्रिता दिशम् ॥ १०३ ॥
पाञ्चालाः शूरसेनाश्च माहिषा उड्रमागधाः ।
अंङ्गा वङ्गा[ः]कलिङ्गाश्च श्यामाः कार्यास्तु वर्णतः ॥ १०४ ॥
ब्राह्मणाः क्षत्रियाश्चैव गौराः कार्याः [12]सदैव हि ।
वैश्याः शूद्रास्तथा चैवं[13] श्यामाः कार्यास्तु वर्णतः ॥ १०५ ॥
एवं कृत्वा यथान्यायं मुखाङ्गोपाङ्गवर्णनम् ।
श्मश्रुकर्म प्रयुञ्जीत देशकर्मक्रियानुगम् ॥ १०६ ॥
[16]शुक्लं श्यामं विचित्रं च तथा रोमशमेव च ।
चतुर्विधं भवेच्छ्मश्रु नानावस्थान्तराश्रयम् ॥ १०७ ॥
[17]शुद्धं तु लिङ्गिनां कार्यं तथामात्यपुरोधसाम् ।

१. 'कुकर्मिणो' इत्यादि श्लोकद्वय का. मु. पुस्तके नास्ति। २. 'वर्णस्त्वन्यः प्रयोक्तव्यो देशजातिवय श्रितः ।' का. मु. ३. 'कर्म च' क-ख. ४. 'पृथिव्युद्देशसश्रयम्' क-ख. ५. 'विज्ञाय वर्तनां कुर्यात् पुरुषाणां प्रयोगवित् ।' का. मु. ६. 'द्रमिलाः' का. मु. ७. 'पाह्नवा बह्लिकादय.' का. मु. ८. 'उत्तरां पश्चिमां दिशम्' क-ख. ९. 'तथा चैवोड्र( ड्र ? ) मागधा.' का. मु. १०. 'अङ्गवङ्गकलिङ्गास्तु' का. मु. ११. 'रक्ताः कार्या.' का. मु. १२. 'तथैव च' क-ख. १३. 'तथा श्यामाः कार्याश्चैव हि सर्वतः' क-ख. १४. 'अङ्गोपाङ्गेषु वर्तनाम्' क-ख. १५. 'देशकालवयोऽनुगम्' क-ख. १६. 'शुद्धं विचित्रं श्यामं च' क-ख. १७. 'शुद्धस्तु लिङ्गिनां कार्यः' का. मु.

[5]अनिस्तीर्णप्रतिज्ञानां दुःखितानां तपस्विनाम् ॥ १०८ ॥
व्यसनाभिहतानां च श्यामं श्मश्रु प्रयोजयेत् ।
मध्यस्था ये च पुरुषा ये च दीक्षां समाश्रिताः ॥ १०९ ॥
दिव्या ये पुरुषाः केचित् सिद्ध[2]विद्याधरादयः ।
[3]पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः ॥ ११० ॥
शृङ्गारिणश्च ये मर्त्या यौ[4]वनोन्मादिनश्च ये ।
तेषां विचित्रं कर्तव्यं श्मश्रु नाट्यप्रयोक्तृ[7]भिः ॥ १११ ॥
ऋषीणां तापसानां च ये च दीर्घव्रता नराः ।
सिद्ध[6]विद्याधराणां च रोमशस्तु विधीयते ॥ ११२ ॥
एवं नानाप्रकारं तु श्मश्रुकर्म प्रयोजयेत् ।
अत ऊर्ध्वं प्रवक्ष्यामि वे[8]षान्नानाप्रयोगजान्[9] ॥ ११३ ॥
शुद्धो विचित्रो मलिनस्त्रि[10]विधो वेष उच्यते ।
[11]तेषां विभागं व्याख्यास्ये यथा कार्यं प्रयोक्तृभिः ॥ ११४ ॥
[ दे[12]वाभिगमने चैव माङ्गल्ये नियमस्थिते ॥
तिथिनक्षत्रयोगे च विवाहकरणे तथा ॥ ११५ ॥ ]
[13]धर्मप्रवृत्तं यत्कार्यं स्त्रीणां च पुरुषस्य वा ।

---

१. 'पद्यमेतम्' का. मु. पुस्तके नास्ति. २. 'सिद्धा' क-ख. ३. 'नृपतीनां कुमाराणां' का. मु. ४. 'यौवनोन्मादिताश्च ये' क-ख. ५. 'अनिस्तीर्णप्रतिज्ञानाम्' इत्यादि पद्यं काशीमुद्रितपुस्तकेऽत्र वर्तते । केवलं 'प्रयोजयेत्' इत्यस्य स्थाने 'भवेत्तदा' इति वर्तते । ६. 'तथा च वैरबद्धानां रोमशं तु भवेदय ।' इति क-ख. ७. 'श्मश्रुकार्यं प्रयोक्तृभिः' इति क-ख. ८. 'येषां नानाप्रयोगजान्' क-ख. ९. इतोऽग्रे काशीमुद्रितपुस्तके—
'चेष्टितं विततं चैव संघात्यं ग्रथितं तथा ॥
प्रालम्बकं तथा चैव माल्यं पञ्चविधं स्मृतम् ।
अ(आ)च्छादनं बहुविधं नानावर्तनसंभवम् ।
ज्ञेयं तद् त्रिप्रकारं तु शुद्धं रक्तं विचित्रकम् ॥
श्लोकद्वयी समधिका । १०. 'त्रिविधो ये च उच्यते (?)' क-ख. ११. 'तेषां नियोगं वक्ष्यामि यथावदनुपूर्वशः ।' क-ख. १२. पद्यमेतत् काशीमुद्रितपुस्तकेऽधिकम् । क-ख-पुस्तकयोस्तु नास्ति । १३. 'धर्मप्रवृत्तवत् कार्यं स्त्रिया वा पुरुषस्य वा ।' इति क-ख.

वेषस्तत्र भवेच्छुद्धो ये च प्राप(य?)त्रिका नराः ॥ ११६ ॥
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
नृपाणां कर्कशानां च चित्रो वेषो भवेत्सदा ॥ ११७ ॥
कञ्चुकीनाममात्यानां श्रेष्ठिनां सपुरोधसाम् ।
सिद्धविद्याधराणां च वणिक्शास्त्रविदामपि ॥ ११८ ॥
विप्रक्षत्रियवैश्यानां स्थानीया ये च मानवाः ।
शुद्धो यस्त्रिविधस्तेषां कर्तव्यो नाटकाश्रयः ॥ ११९ ॥
उन्मत्तानां प्रमत्तानां जनानामध्वगामिनाम् ।
व्यसनोपगतानां च मलिनो वेष इष्यते ॥ १२० ॥
शुद्धरक्तविचित्राणि वासांस्युच्चावचानि च ।
योजयेत्तान्यतत्त्वज्ञैर्वेषयोः शुद्धचित्रयोः ॥ १२१ ॥
कुर्याद्वेषे तु मलिने मलिनानि विचक्षणः ।
मुनिनिर्ग्रन्थशाक्येषु यतिपाशुपतेषु च ॥ १२२ ॥
वृत्तानुगैश्च कर्तव्यो वेषो लोकस्वभावतः ।
चीरवल्कलचर्माणि तापसानां तु योजयेत् ॥ १२३ ॥

---

१. 'विशेषो यो भवेत्तथा' क-ग. २. 'कञ्चुकिनाम्' क-ग. ३. 'श्रेष्ठीनां पुरोधसाम्' का. मु. ४. 'शास्त्रविदामपि' क-ग. ५. 'शुद्धो यत्रिविधस्तेषां' क-ग. ६. 'उत्तमानां' क-ग. ७. 'अध्वगानां तथैव च' क-ग. ८. 'व्यसनोपहतानां च' क-ग. ९. तदेतदर्धपद्यं काशीमुद्रितपुस्तके नास्त्येव । १०. 'त्रिदण्डिश्रोत्रियेषु च' का. मु. ११. 'प्रतानुगश्च ( वृत्तानुगश्च )' क-ग. १२. 'तु' का. मु. १३. 'अलंकार भवन' का. मु. १४. 'चीरवल्कलचर्माणि' इत्यादि श्लोकद्वयस्थाने काशीमुद्रितपुस्तके—

'परिव्राण्मुनिमुख्येषु तापसेषु तथैव च ।
काषायवसनो वेषः कार्यस्तत्र यथाक्रमम् ॥
नानाचित्राणि वासांसि कुर्यात् पाशुपतेष्वथ ।
कुब्जादीनां ये प्रोक्तास्तेषां चापि यथोचितम् ॥
अन्तःपुरस्य रक्षार्थे विनियुक्ता हि ये नराः ।
काषायकञ्चुकपटाः कार्यास्तेषां यथाविधि ।
चीरवल्कलचर्माणि तापसानां तु कारयेत् ॥'

एवं शार्ङ्गदत्तमम् ।

अन्तःपुरप्रवेशे तु विनियुक्ता हि ये नराः।
कापायकञ्चुकिपटास्तेऽपि कार्या यथाविधि ॥ १२४ ॥
[1]कुलजाश्चापि ये प्रोक्तास्तेषां चैव यथोचितम्।
[2]अवस्थान्तरितश्चैव सम्यग्वेषो भवेत्तथा ॥ १२५ ॥
[3]सांग्रामिकश्च शूराणां वेषः संपरिकीर्तितः।
विचित्रशस्त्रकवचो [4]बद्धतूणधनुर्धरः ॥ १२६ ॥
[5]चित्रो वेषस्तु कर्तव्यो नृपाणां नित्यमेव हि[6]।
केवलस्तु भवेच्छुद्धो [7]नक्षत्रोत्पातमङ्गले ॥ १२७ ॥
[8]एवं वेषो बुधैः कार्यो देशजातिगुणान्वितः।
उत्तमाधममध्यानां स्त्रीणां नृणामथापि च ॥ १२८ ॥
एवं वस्त्रविधिः कार्यः प्रयोगे नाटकाश्रये।
नानावस्थां समासाद्य शुभाशुभकृतस्तथा ॥ १२९ ॥
तथा प्रतिशिरश्चापि कर्तव्यं नाटकाश्रयम्।
दिव्यानां मानुषाणां च [9]देशजातिवयः[10]श्रितम् ॥ १३० ॥
पार्श्वागता मस्तकिनस्तथा चैव किरीटिनः।
[11]त्रिविधा मुकुटा ज्ञेया दिव्यपार्थिवसंश्रयाः ॥ १३१ ॥
देवगन्धर्वयक्षाणां पन्नगाना सरक्षसाम्।
कर्तव्या नैकविहिता मुकुटाः पार्श्वमौलिनः ॥ १३२ ॥
उत्तमा ये च दिव्यानां तेषां कार्याः किरीटिनः।
मध्यमा मौलिनश्चैव कनिष्ठा(ष्ठाः?) [12]पार्श्वमौलिनः ॥ १३३ ॥
नराधिपानां [13]कर्तव्या(व्यं) मस्तके मुकुटं बुधैः।

---

१. 'कुश(ल)जा.' क-ख. २. 'अवस्थान्तरमासाद्य स्त्रीणां वेषो भवेदिह।' का. मु. ३. 'वेषः सांग्रामिकश्चैव शूराणां सप्रकीर्तितः।' का. मु. ४. 'बद्धत्राण' का. मु. ५. 'विचित्रवेषः कर्तव्यो' का. मु. ६. 'च' का. मु. ७. 'नक्षत्रोत्पादमङ्गले' का. मु. ८. 'एवमेष भवेद्वेषो वयोजातिगुणान्वित।' का. मु. ९. 'देशानाम्' का. मु. १०. °श्रितः का. मु. ११. 'त्रिविधा मुकुटा' इत्यादि पद्यद्वयं का. मु. पुस्तके नास्ति। १२. 'शीर्षमौलिनः का. मु. १३. 'कर्तव्यास्तथा मस्तकिनो बुधैः.' का. मु.

विद्याधराणां सिद्धानां चारणानां तथैव च ॥ १३४ ॥
ग्रन्थि(थि?)ताः केशमुकुटाः कर्तव्यास्तु प्रयोक्तृभिः ।
[ उदात्तैश्चापि ये तत्र कार्यास्ते पार्थमौलिनः ॥ १३५ ॥
तस्मात्तु मुकुटाश्लिष्टाः प्रयोगे दिव्यपार्थिवे ।
केशानां छेदनं नेष्टं वेद वेदे यथा श्रुतिः ॥ १३६ ॥
भद्रीकृतस्य वा यज्ञे शिरसश्छेदनेप्सया ।
केशानां चातिदीर्घत्वात् स्मृतं मुकुटधारिणः ॥ १३७ ॥
विद्याधराणां सिद्धानां चारणानां तथैव च ।
ग्रन्थि(थि?)तः केशमुकुटः कर्तव्यस्तु प्रयोक्तृभिः ॥ १३८ ॥
अमात्यानां कञ्चुकिनां तथा श्रेष्ठिपुरोधसाम् ।
वेष्टनं बन्धपट्टादि मतिशीर्षाणि कारयेत् ॥ १३९ ॥
सेनापतेः पुनश्चापि युवराजस्य चैव हि ।
मस्तकेष्वर्धमुकुटं प्रयोगे संप्रयोजयेत् ॥ १४० ॥
शेषाणामर्थयोगेन देशजातिवयःश्रुतम् ।
शिरः प्रयोक्तृभिः कार्यं प्रयोगस्य वशानुगम् ॥ १४१ ॥
बालानामपि कर्तव्यं न शिखण्डविभूषितम् ।
जटामुकुटलम्बं च मुनीनां तु भवेच्छिरः ॥ १४२ ॥
रक्षोदानवदैत्यानां पिङ्गकेशाक्षाणि तु ।
हरिश्मश्रूणि च तथा मुखशीर्षाणि कारयेत् ॥ १४३ ॥ ]
पिशाचोन्मत्तभूतानां साधकानां तपस्विनाम् ।
अनिस्तीर्णप्रतिज्ञानां लम्बकेशं तु दीर्घकम् ॥ १४४ ॥

---

१. 'वानराणां' क-ख. २. 'ग्रन्थितः केशमुकुटः कर्तव्यस्तु प्रयोक्तृभिः ।' का. ङ.
३. काशीमुद्रितपुस्तके शेषपद्यानि पद्यानि समधिकानि क-ख. पुस्तकयोस्तु—
'देवदानवदैत्यानां पिङ्गकेशेक्षणानि हि ।
हरिश्मश्रूणि च तथा नानारूपाणि कारयेत् ॥'
एतन्मध्ये, ×××× एवं प्रकारेण त्रुटिचिह्नानि । ४. 'इतोऽग्रे' ह-ङ. पुस्तकयोः
'सेनापतेः पुनश्चापि युवराजस्य चैव हि । सोमदेवैर्मुकुटं सृजन्ति देवताः ।'

शाक्यश्रोत्रियनिर्ग्रन्थपरिव्राड्दीक्षितेषु च ।
शिरोमुण्डं तु कर्तव्यं यज्ञदीक्षान्वितेषु च ॥ १४५ ॥
तथा वृत्तानुषङ्गेण शेषाणां लिङ्गिनां शिरः ।
मुण्डं वा कुञ्चितं वापि लम्बकेशमथापि वा ॥ १४६ ॥
वधूनां चापि कर्तव्यं ये च राजोपजीविनः ।
ये च शृङ्गारिणस्तेषां शिरः कुञ्चितमूर्धजम् ॥ १४७ ॥
चेटानामपि कर्तव्यं त्रिशिखं मुण्डमेव वा ।
विदूषकस्य कर्तव्यं खलिकाकपदं तथा ॥ १४८ ॥
एवं नानाप्रकारेण बुद्ध्या चैषां विभज्य च ।
अतस्तैर्भूषणैश्चित्रैर्वस्त्रैर्माल्यैरथापि वा ॥ १४९ ॥
अवस्थाप्य कृतिः स्थाप्या प्रयोगरससंभवा ।
स्त्रीणां वा पुरुषाणां वा व्यवस्थां प्राप्य तादृशीम् ॥ १५० ॥
एवं शेयाङ्गरचना नानाप्रकृतिसंभवा ।
संजीव इति यः प्रोक्तस्तस्य वक्ष्यामि लक्षणम् ॥ १५१ ॥
यः प्राणिनां प्रवेशो वै स संजीव इति स्मृतः ।
चतुष्पदोऽथ द्विपदस्तथा चैवापदः स्मृतः ॥ १५२ ॥
उरगान्थपदान् विद्याद् द्विपदान्खगमानुषान् ।
ग्राम्यारण्याश्च पशवो विज्ञेयास्ते चतुष्पदाः ॥ १५३ ॥
एतेऽपि युद्धसंफेटैरुपरोधैस्तथैव च ।
नानाप्रहरणोपेताः प्रयोज्या नाटके बुधैः ॥ १५४ ॥
आयुधानि च कार्याणि तज्ज्ञैः सम्यक् प्रमाणतः ।
तान्यहं संप्रवक्ष्यामि यथावदनुपूर्वशः ॥ १५५ ॥
भिण्डि( न्दि ? ) द्वादशतालः स्याद् दश कुन्तो भवेदथ ।

१. 'सञ्जीव' क-ख. 'सञ्जीव इति सज्ञितः' क ख. २. 'स्मृता.' का. मु. ३. 'उरगा ह्यपदा ज्ञेया द्विपदाः खगमानुषाः' का. मु. ४. 'ग्रामारण्याश्च' क-ख. ५. 'वै' क-ख. 'एते तु युद्धसंभेदो(?) खवरोधे तथैव च' का. मु. ६. 'आयुधानि च वर्माणि पुरुषाणा प्रमाणत. ।' का. मु. ७. 'यथा युक्तिप्रमाणत.' का. मु. ८. 'भिण्डि(न्दि ?) द्वादशतालास्तु' क-ख.

अष्टौ शतघ्नी शूलश्च तोमरो शक्तिरेव च ॥ १५६ ॥
अष्टतालं धनुर्ज्ञेयमायामस्तु द्विहस्ततः ।
शरो गदा च चक्रं च चतुस्तालं भवेदथ ॥ १५७ ॥
अङ्गुलानि त्वसिः कार्यो चत्वारिंशत्प्रमाणतः ।
द्वादशाङ्गुलकं चक्रं ततोऽर्धं प्रास उच्यते ॥ १५८ ॥
प्रासवत् पट्टिशं विद्याद्दण्डं चैव हि विंशतिः ।
विंशतिः कम्पनं चैव ह्यङ्गुलानि प्रमाणतः ॥ १५९ ॥
षोडशाङ्गुलविस्तीर्णं सबलं संप्रकीर्तितम् ॥ १६० ॥
त्रिंशदङ्गुलमानेन कर्तव्यं खेटकं बुधैः ।
जर्जरोद्दण्डकाष्ठं च तथैव प्रतिशीर्षकम् ॥ १६१ ॥
छत्रं च चामरं चैव ध्वजो भृङ्गार एव च ।
यत् किंचिन्मानुषे लोके द्रव्यं पुंसां प्रयोगजम् ॥ १६२ ॥
तत्सर्वं तूपकरणं नान्यस्मिन् संविधीयते ।
यद्यस्य विषयप्राप्तं तेनोक्तं तस्य लक्षणम् ॥ १६३ ॥
माहेन्द्रा वै ध्वजाः प्रोक्ता लक्षणैः संप्रकीर्तिताः ।
एषामन्यतमं कुर्यात् जर्जरं दारु कर्मतः ॥ १६४ ॥
अथवा वृक्षजातस्य प्ररोहो वापि जर्जरः ।

---

१. 'अष्टौ...शतघ्नी...शूलं तोमरमेव च ।' क-ख. २. 'अष्टौ तालाधनुर्ज्ञेया(य!) मायामोऽस्य द्विहस्तकम् (?) क-ख. ३. 'चक्रं च चतुस्तालो' का. मु. ४. 'कार्या-श्चत्वारिंशत्' क-ख. 'प्रास' का. मु. ५. 'प्रासवत्पादिशं (प्रासवत्पट्टिशं) विद्या-द्दण्डकाष्ठेव विंशतिः ।' क. ख. ६. 'कणपं (!) च विधेदंशं ह्यङ्गुलैः परिमाणत । षोडशाङ्गुलि विस्तीर्णं सबाल्वं सप्रपञ्चिकम् ।' का. मु. (?) ७. 'जर्जरोदं तु काष्ठं च' क. 'तर्जरोदं तु काष्ठं च' ख. ८. 'पत्रं' क-ख. ९. 'प्रयोजयेत्' क-ख. १०. 'तत्सोप-करणं (?) सर्वं तस्मात्ते संप्रकीर्तितम् ।' क. ख. ११. इतोऽग्रे काशीमुद्रितपुस्तके—

[ जर्जरे दन्तकाष्ठे च संप्रवक्ष्यामि लक्षणम् ।
श्वेतभूम्यां तु यो जात. पुष्पनक्षत्रसंश्रया ॥ ] इत्यधिकं पद्यम्—

१२. 'माहेन्द्रे वै ध्वजे कार्यं लक्षणं विधिकर्मणा ।' इति का. मु. १३. 'तेषामन्यतमे कार्यम्' का. मु. १४. 'अथवा वृक्षयोनि. स्यात् प्ररोहो वापि जर्जरः । क-ख.

वेणुरेव भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ॥ १६५ ॥
प्रमाणतोऽङ्गु[1]लानां तु शतमष्टोत्तरं भवेत् ।
स्वेने[2] ( श्वेत ? ) भूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा ॥ १६६ ॥
संग्राह्यो वै भवेद्वेणुर्जर्जरार्थे प्रयत्नतः ।
पञ्च[3]पर्वा चतुर्ग्रन्थिस्ताल[4]मात्रस्तथैव च ॥ १६७ ॥
स्थूलग्रन्थिर्न कर्तव्यो न शा[5]खी न च कीटवान् ।
न क्रिमिक्षतपर्वा च न हीनश्चा[6]न्यवेणुभिः ॥ १६८ ॥
[7]मधुसर्पिः सर्षपाक्तं माल्यधूपपुरस्कृतम् ।
उपास्य विधिवद्वेणुं गृह्णीयाज्जर्जरं प्रति ॥ १६९ ॥
यो विधिर्[8]यः क्रमश्चैव माहेन्द्रे तु ध्वजे स्मृतः ।
स जर्जरस्य कर्तव्यः पुण्य[9]वेणुसमाश्रयः ॥ १७० ॥
[11]नित्यं यः पीतपत्रश्च सरु(?) पत्रस्तथैव च ।
पर्यग्रतण्डुलश्चैव पुष्प(ष्य)वेणुः स कीर्तितः ॥ १७१ ॥
[12]विधिरेवं मया प्रोक्तो जर्जरस्य तु लक्षणे ॥
[13]अत ऊर्ध्वं प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् ॥ १७२ ॥
[14]कपित्थबिल्ववंशेभ्यो दण्डकाष्ठं भवेदथ ।
[15]वक्रं त्वेव हि तत्कार्यं त्रिभागे लक्षणान्वितम् ॥ १७३ ॥
कीटैर्नोपहतं यच्च व्याधिना न च पीडितम् ।
मन्दशा[16]खं भवेद् यच्च दण्डकाष्ठं तदुच्यते ॥ १७४ ॥

---

१. 'प्रमाणमङ्गुलाना तु' क-ख. २. 'पद्यस्यास्य स्थाने काशीमुद्रितपुस्तके आयातपूर्वं 'जर्जरे दन्तकाष्ठे च' इत्यादिपद्यम्। ३. 'पञ्चपर्वा' का. मु. ४. 'स्फाल ( स्ताल ? ) मात्रः' का. मु. ५. 'नाशाखी' क-ख. ६. 'न हीनस्त्वन्यवेणुभिः' का. मु. ७. 'अक्तं तु मधुसर्पिभ्यां' का. मु. ८. 'महेन्द्रे यो विधिः स्मृतः' का. मु. ९. 'शुभ्यं (त्व) वेणुसमाश्रयः' क-ख. १०. काशीमुद्रितपुस्तके तु—'भवेद्वै दीर्घपर्वा तु तनुपर्वा तथैव च।' इति. ११. पर्वानुमण्डलं चैव पुष्यवेणुप्रकीर्तितः।' का. मु. १२. 'विधिरेष' का. मु. १३. 'अथ' का. मु. १४. 'बिल्वं कपित्थं वंशो वा दण्डकाष्ठं भवेत्सदा।' का. मु. १५. 'वक्रं त्वेव च' का. मु. १६. 'मन्दशालं' का. मु.

यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् ।
कारयेत् स त्वपचयं महान्तं प्राप्नुयाद् ध्रुवम् ॥ १७५ ॥
[1]तथा शीर्षविधानार्थं पटी कार्या तु मानतः ।
[2]सप्रमाणविनिर्दिष्टा [3]द्वात्रिंशच्चाङ्गुलानि [4]वै ॥ १७६ ॥
[5]बिल्वकल्केन कर्तव्या पटी [6]चीरसमाश्रया ।
स्निग्धेन बिल्वकल्केन द्रवेण च [7]समागता ॥ १७७ ॥
[8]भस्मना वा तुषैर्वापि [9]कारयेत्प्रतिशीर्षकम् ।
[10]संछाद्य कृतको वस्त्रैर्बिल्वदिग्धैर्[11]घनोश्रयैः ॥ १७८ ॥
बिल्वकल्केन चीरं तु [12]दिग्धाङ्गं योजयेत् पटीम् ।
[13]न स्थूलां न तनुं चैव न मृद्वीं चैव कारयेत् ॥ १७९ ॥
[14]शुष्कायास्तु ततस्तस्या मलिनातपयोगतः ।
[15]छेद्यं बुधस्तु कुर्वीत विधिदृष्टेन कर्मणा ॥ १८० ॥
[16]सुतीक्ष्णेन तु शस्त्रेण [17]अर्धार्धं प्रविभज्य च ।
[18]स्वप्रमाणं विनिर्दिष्टं [19]ललाटाकृति कोपजम् ॥ १८१ ॥
अर्धाङ्गुलललाटं तु छेद्यं कार्यं षडङ्गुलम् ।
अर्धार्धमङ्गु[20]लैश्छेद्यं [21]कटयोस्त्र्यङ्गुलं भवेत् ॥ १८२ ॥
[22]कटान्ते कर्णतालस्य छेद्यं त्व[23]धिकमङ्गुलम् ।

---

१. 'तथा च (?) प्रतिशीर्षस्य पटिः कार्या प्रयत्नतः ।' क-ख. २. 'सप्रमाणा विनिर्दिष्टा' क-ख. ३. 'द्वात्रिंशदङ्गुलानि वै' क-ख. ४. 'च' का. मु. ५. 'बिल्व-मध्येन' क-ख. ६. 'पटीशीर्षसमाश्रया' क-ख. ७. 'समन्वितम्' क-ख. ८. 'भस्मनो' क-ख. ९. 'प्रतिशीर्षाणि कारयेत्' का. मु. १०. 'संस्थाप्य तु ततो पश्चाद्बिल्व-दिग्धैर्घनाश्रयैः ।' क-ख. ११. 'घनाश्रयैः' का. मु. १२. 'दिग्धं संयोजयेद्घटिम्' क-ख. १३. 'न स्थूलां न च तां तन्वीं मृद्वीं नैव च कारयेत् ।' क-ख. १४. 'तस्या-मातपशुष्कायां शुद्धप्रमाणमथापि वा ।' क-ख. १५. 'छेद्यं बुधः प्रयुञ्जीत' क-ख. १६. 'सुतीक्ष्णेन च शस्त्रेण' क-ख. १७. 'विभज्यार्धं' क-ख. १८. 'स्वप्रमाणविनिर्दिष्टं' क-ख. १९. 'ललाटकृतकोपजम्' क-ख. २०. 'अङ्गुलं छेद्यं' क-ख. २१. 'कटेव सङ्गुलं भवेत्' क-ख. २२. 'कर्णं तु' क-ख. २३. 'दधिकमङ्गुलम्' क-ख.

वेणुरेव भवेच्छ्रेष्ठस्तस्य वक्ष्यामि लक्षणम् ॥ १६५ ॥
प्रमाणतो[1]ऽङ्गुलानां तु शतमष्टोत्तरं भवेत् ।
स्तेने[2] (श्वेत ?) भूम्यां तु यो जातः पुष्यनक्षत्रजस्तथा ॥ १६६ ॥
संग्राह्यो वै भवेद्वेणुर्जर्जरार्थे प्रयत्नतः ।
प[3]ञ्चपर्वा चतुर्ग्रन्थिस्ताल[4]मात्रस्तथैव च ॥ १६७ ॥
स्थूलग्रन्थिर्न कर्तव्यो न शा[5]खी न च कीटवान् ।
न क्रिमिक्षतपर्वा च न हीनश्चा[6]न्यवेणुभिः ॥ १६८ ॥
[7]मधुसर्पिः सर्षपाक्तं माल्यधूपपुरस्कृतम् ।
उपास्य विधिवद्वेणुं गृह्णीयाज्जर्जरं प्रति ॥ १६९ ॥
यो विधिर्यः क्रमश्चैव मा[8]हेन्द्रे तु ध्वजे स्मृतः ।
स जर्जरस्य कर्तव्यः पुण्यं[9]वेणुसमाश्रयः ॥ १७० ॥
[11]नित्यं यः पीतपत्रश्च सरु(?) पत्रस्तथैव च ।
पर्यग्रतण्डुलश्चैव पुष्प(ष्य)वेणुः स कीर्तित ॥ १७१ ॥
[12]विधिरेवं मया प्रोक्तो जर्जरस्य तु लक्षणे ॥
अ[13]त ऊर्ध्वं प्रवक्ष्यामि दण्डकाष्ठस्य लक्षणम् ॥ १७२ ॥
क[14]पित्थबिल्ववंशेभ्यो दण्डकाष्ठं भवेदथ ।
[15]वक्रं त्वेव हि तत्कार्यं त्रिभागे लक्षणान्वितम् ॥ १७३ ॥
कीटैर्नोपहतं यच्च व्याधिना न च पीडितम् ।
मन्द[16]शाखं भवेद् यश्च दण्डकाष्ठं तदुच्यते ॥ १७४ ॥

---

१. 'प्रमाणमङ्गुलाना तु' क ख. २. 'पद्यस्यास्य स्थाने काशीमुद्रितपुस्तके आयातपूर्वं 'जर्जरे दन्तकाष्ठे च' इत्यादिपद्यम्। ३. 'पद्मपर्वा' का. मु. ४. 'स्फाल (स्ताल ?) मात्रः' का. मु. ५. 'नाशाखी' क-ख. ६. 'न हीनस्त्वन्यवेणुभि.' का. मु. ७. 'अर्कं तु मधुसर्पिभ्या' का. मु. ८. 'महेन्द्रे यो विधि स्मृत' का. मु. ९. 'शुभ्यं (त्य) वेणुसमाश्रयः' क-ख. १०. काशीमुद्रितपुस्तके तु—'भवेद्वै दीर्घपर्वा तु तनुपर्वा तथैव च।' इति. ११. पर्वानुमण्डलं चैव पुष्यवेणुप्रकीर्तित'।' का. मु. १२. 'विधिरेष' का. मु. १३. 'अथ' का. मु. १४. 'बिल्वं कपित्थं वंशो वा दण्डकाष्ठं भवेत्सदा।' का. मु. १५. 'वक्रं त्वेव च' का. मु. १६. 'मन्दशालं' का. मु.

यस्त्वेभिर्लक्षणैर्हीनं दण्डकाष्ठं सजर्जरम् ।
कारयेत् स त्वपचयं महान्तं प्राप्नुयाद् ध्रुवम् ॥ १७५ ॥
[1]तथा शीर्षविधानार्थे पटी कार्या तु मानतः ।
[2]सप्रमाणविनिर्दिष्टा [3]द्वात्रिंशचाङ्गुलानि [4]वै ॥ १७६ ॥
[5]बिल्वकल्केन कर्तव्या पटी [6]चीरसमाश्रया ।
स्निग्धेन बिल्वकल्केन द्रवेण च [7]समागता ॥ १७७ ॥
[8]भसना वा तुषैर्वापि [9]कारयेत्प्रतिशीर्षकम् ।
[10]संछाद्य कृतको वस्त्रैर्बिल्वदिग्धैर्घना[11]श्रयैः ॥ १७८ ॥
बिल्वकल्केन चीरं तु दिग्धा[12]ङ्गं योजयेत् पटीम् ।
[13]न स्थूलां न तनुं चैव न मृद्वीं चैव कारयेत् ॥ १७९ ॥
[14]शुष्कायास्तु ततस्तस्या मलिनातपयोगतः ।
[15]छेद्यं बुधस्तु कुर्वीत विधिदृष्टेन कर्मणा ॥ १८० ॥
[16]सुतीक्ष्णेण तु शस्त्रेण अर्धार्धं प्रविभ[17]ज्य च ।
[18]स्वप्रमाणं विनिर्दिष्टं [19]ललाटाकृति कोणजम् ॥ १८१ ॥
सर्धाङ्गुलललाटं तु छेद्यं कार्यं षडङ्गुलम् ।
अर्धार्धमङ्गुलं[20]च्छेद्यं [21]कटयोरुयङ्गुलं भवेत् ॥ १८२ ॥
[22]कटान्ते कर्णतालस्य छेद्यं त्वधि[23]कमङ्गुलम् ।

---

१. 'तया य (च ?) प्रतिशीर्षस्य पटि कार्या प्रयत्नत ।' क-ख. २. 'स्वप्रमाणा विनिर्दिष्टा' क-ख. ३. 'द्वात्रिंशदङ्गुलानि वै' क-ख. ४. 'च' का. मु. ५. 'बिल्वमध्येन' क-ख. ६. 'पटीशीर्षसमाश्रया' क-ख. ७. 'समन्वितम्' क-ख. ८. 'भसनो' क-ख. ९. 'प्रतिशीर्षाणि कारयेत्' का. मु १०. 'संस्थाप्य तु ततो वस्त्रैर्बिल्वदिग्धैर्वनाश्रयैः ।' क ख. ११. 'घनाश्रये' का. मु. १२. 'दिग्धं सयोजयेद्धटिम्' क-ख. १३. 'न स्थूलां न च तां तन्वीं मृद्वीं नैव च कारयेत् ।' क-ख. १४. 'तस्यामातपशुष्कायां सुशुष्कायामथापि वा ।' क ख. १५. 'छेद्यं बुधाः प्रकुर्वन्ति' क-ख. १६. 'सुतीक्ष्णेनाथ शस्त्रेण' क ख. १७. 'विप्रभज्यते' क-ख. १८. 'स्वप्रमाणविनिर्दिष्टं' क-ख. १९. 'ललाटकृतकोणजम्' क-ख. २०. '°मङ्गुलं छेद्यं' क-ख. २१. 'कटेव्यङ्गुलं भवेत्' क ख. २२. 'कर्यं ते' क ख. २३. 'मधिकमङ्गुलम्' क-ख.

[1]ऽयङ्गुलं कर्णविवरं [2]तथास्य छेद्यमेव च ॥ १८३ ॥
ततश्च [3]वावद्दुः कार्या [4]सुसमा द्वादशाङ्गुला ।
[5]पटीच्छेद्यकृतं ह्येतद् विधानं विहितं मया ॥ १८४ ॥
तस्योपरि[6]गताः कार्या मुकुटा बा([7]बं)हुशिल्पजाः ।
नानारत्नप्रतिच्छन्ना बहुरूपोपशोभिताः ॥ १८५ ॥
तथो[8]पकरणानीह नाट्ययुक्तिकृतानि च ।
बहुप्रकारयुक्तानि कुर्वीत प्रकृतिं प्रति ॥ १८६ ॥
यत्किञ्चिदस्मिन् लोके तु [9]चराचरसमन्विते ।
विहितं कर्म शिल्पं वा तत्तूपकरणं स्मृतम् ॥ १८७ ॥
[10]यद( यो ? ) यस्य विषयं(यः) प्राप्यं(प्यः) स तस्मिंस्त्वधिगच्छति ।
[11]नास्त्यतः पुरुषाणां हि ना[12]ट्योपकरणाश्रये ॥ १८८ ॥
[13]नाट्येनोत्पादितं कर्म शिल्पयोगः[14] क्रियापि वा ।
तेन[15] तस्य कृता सृष्टिः प्रमाणं लक्षणं तथा ॥ १८९ ॥
या [16]कार्ष्णायसभूयिष्ठा कृता सृष्टिर्महत्तरा ।
[17]नास्माकं संमता नाट्ये गुरुत्वात् खेददा हि सा ॥ १९० ॥
यद् द्रव्यं जीवलोके तु [18]नानालक्षणलक्षितम् ।
तस्यानुकृतिसंस्थानं नाट्योपकरणं भवेत् ॥ १९१ ॥
प्रासादगृहयानानि [19]नाट्योपकरणानि च ।
[20]न शक्यानि तथा कर्तुं यथोक्तानीह लक्षणैः ॥ १९२ ॥

---

१. 'अङ्गुल कर्णविवरम्' क-ख. २. 'सदैव छेद्यमेव हि' क-ख. ३. 'वा यद्दुः(?)' क-ख. ४. 'ससामा' का. मु. 'सुसमा द्वादशाङ्गुलम्' क-ख. ५. 'पट्याद्येतत्सदा छेदैः' क-ख. ६. 'तस्योपरि ततः कार्या' का. मु. ७. 'विविधाश्रयाः' का. मु. ८. 'तत्रोपकरणानीह' का. मु. ९. 'सचराचरसहिते' का. मु. १०. 'यस्या ( य ? )स्य विषयं( यं ) प्राप्तं स तदेवाभिगच्छति ।' का. मु. 'यद् यस्य विषयं प्राप्यं स तस्मिंस्त्वधिगच्छति ।' का. मु. ११. 'नान्यत.' का. मु. १२. 'नान्योपकरणाश्रयम्' का. मु. १३. 'यद् येनोत्पादितं' का. मु. १४. 'शिल्पयोगक्रियापि वा' का. मु. १५. 'तस्य तेन कृता सृष्टि.' का. मु. १६. 'वास्ययन्त्रम् भूयिष्ठा' क-ख. १७. 'ना(न)सासाकं नाट्ययोगे र्कस्मात् खेदावहा हि सा ।' क-ख. १८. 'लक्षालक्षितलक्षणम्' क-ख. १९. 'नानाप्रहरणानि च' क-ख. २०. 'न शक्यं तानि वै कर्तुं' क-ख.

लोकधर्मी भवेत्कों[1]( त्वन्या ? ) नाट्यधर्मी तथापरा ।
स्वभावो लोकधर्मी तु विभावो[2] नाट्यमेव हि ॥ १९३ ॥
[3]आयसं न तु कर्तव्यं न च सारमयं तथा ।
नाट्योपकरणं तज्ज्ञैर्गुरु[4] खेदकरं भवेत् ॥ १९४ ॥
[5]जतुकाष्ठं चर्मवस्त्रमथा वेणुदलैस्तथा ।
नाट्योपकरणानीह लघुकर्माणि कारयेत् ॥ १९५ ॥
[6]वर्मचर्मध्वजाः शैलाः प्रासादा देवता गुहाः ।
हयवारणयानानि विमानानि गृहाणि च ॥ १९६ ॥
पूर्वं वेणुदलैः कृत्वा कृतभावसमाश्रयाः ।
ततः सुरङ्गैराच्छाद्य वस्त्रो ( स्त्रैः ? ) सारूप्यमानयेत् ॥ १९७ ॥
अथवा यदि वस्त्राणामसानिध्यं भवेदिह ।
[7]तालीयैर्वा कलिञ्जै( कीलजै ? )र्वा श्लक्ष्णैर्वस्त्रक्रिया भवेत् ॥१९८॥
तथा प्रहरणानि स्युस्तृणवेणुदर्ला[8]दिभिः ।
जतुभाण्डक्रियाभिश्च नानारूपाणि नाटके[9] ॥ १९९ ॥
[10]प्रतिपादौ प्रतिशिरः प्रतिहस्तौ प्रतित्वचम् ।
तृणजैः कीलजैर्भाण्डैः सरूपाणीह कारयेत् ॥ २०० ॥
यद् यस्य यादृशं[11] रूपं सारूप्यगुणसंभवम् ।
मृण्मयं तत्र[12] कृत्स्नं तु नानारूपांस्तु[13] कारयेत् ॥ २०१ ॥
[14]भाण्डवस्त्रमधूच्छिष्टैर्लाक्षयाभ्रदलेन च[15] ।

---

१. 'भवेत्त्व (त्त्व ?) न्या' का.मु २. 'नाट्यधर्मा विकारत ' का.मु ३. 'लोहादिभिर्न कर्तव्यं न च सारमयं तथा ।' क ख. ४ 'गुरुत्वात् खेदकृदि तत्' का.मु. ५. 'कथ चर्मसु वस्त्रेषु तनुवेणुदलेषु च' क ख. ६. इत प्रभृति श्लोकद्वयं काशीमुद्रितपुस्तके नास्ति 'धर्मचर्मध्वजा ' ख. ७. 'तालीयकै कीलजैर्वा' का. मु. ८. 'तृणवेणुदलादिषु' क-ख ९. 'कारयेत्' का.मु. १०. 'प्रतिपाद. प्रतिशिरः प्रतिहस्तः प्रतित्वच । तृणैः कलिञ्जैर्भाण्डैर्वा सारूप्याणि तु कारयेत्' क ख. ११. 'सदृशं' क ख. १२. 'तत्तु' १३. 'नानारूपं' क ख. १४. 'भैण्ड' क ख. १५. इतोऽग्रे सार्धैकपद्यमधिकं का. मु. पुस्तके—

[ नगास्तु विविधा कार्याश्चर्मवर्मध्वजास्तथा ॥
नानाकुसुमजातानि फलानि कुसुमानि च ।
विविधानि च भाण्डानि लाक्षया वेह कारयेत् ॥ ]

भाण्ड[1]वस्त्रमधूच्छिष्टैस्ताम्र[2]पत्रैस्तथैव च ॥ २०२ ॥
तत्साम्यं[3] नीलरागेण अभ्रपत्रेण[4] चैव हि।
रञ्जितेनाभ्रपत्रेण मैर्णांश्चैव[5] प्रकारयेत् ॥ २०३ ॥
उपाश्रयमर्थाप्येषां[6] तुल्यं[7] व(र?)ङ्गेन कारयेत्।
विविधा मुकुटा[8] दिव्या[:] पूर्वं ये गदिता मया।
तेऽभ्रपत्रोज्ज्वलाः कार्या माणिक्यालोकशोभिताः[9] ॥ २०४ ॥
न शास्त्र[10]प्रभवं कर्म तेषां हि समुदाहृतम्।
विचार्य[11] बुद्ध्या कर्तव्यमूहापोह[12]प्रयोजितम् ॥ २०५ ॥
एवं[13] मर्त्यक्रियायोगो भविष्यन् कथितो मया।
यस्मा[14]दल्पबलत्वं हि[15] मानुषेषु[16] भविष्यति ॥ २०६ ॥
मर्त्या[17]नामल्पशक्तीनां न भवेदङ्गचेष्टितम्।
नेष्टाः सुवर्णरत्नैस्तु[18] मुकुटा भूषणानि वा ॥ २०७ ॥
युद्धे[19] नियुद्धे नृत्ते वा दृष्टिव्यापारकर्मणि।
गुरुभारावसन्नस्य खेदो मूर्च्छापि जायते ॥ २०८ ॥
खेदमूर्च्छाश्रमार्तस्य प्रयोगस्तु विनश्यति।
प्राणात्ययः कदाचिच्च[20] भवेद् व्यायतचेष्टिते[21] ॥ २०९ ॥
तस्माच्चाभ्रमयैः पत्रैर[22]भ्रकै रञ्जितैरपि।
भाण्डै[23]रथै[24] मधूच्छिष्टैः कार्याण्याभरणानि च[25] ॥ २१० ॥

---

१. 'भैण्ड' क-ख. २. 'ताम्रवर्णैः' का. मु ३. 'सम्यक् च' क-ख. ४. 'अभ्रपानेण' क-ख. ५. 'मर्पाश्चैवात्र' का. ६. 'स्तथाप्येषा' का. ७. 'शुल्बश्रेष्ठैर्न' का. ८. 'युक्तयद्दिव्या' क-ख. ९. 'माणिव्यालोपशोभिता' क-ख. १०. 'नानाशास्त्रभवं' क-ख. ११. 'आचार्यबुद्ध्या' क-ख. १२. 'अन्यापोह' का. मु. १३. 'एवमल्पप्रियायोगो भविष्यकलितो' क-ख. १४. 'कस्मात्' क-ख. १५. 'च' क-ख. १६. 'मनुष्येषु' क-ख. १७. 'मर्त्यानामपि वा शक्त्या विभवा- सर्वेवाधना.' क-ख. १८. 'सुवर्णरत्नेषु' क-ख. १९. क-ख. पुस्तकयोस्तु सार्धश्लोकस्थाने 'युद्धे नियुद्धे नृत्ते वा खेदो मूर्च्छा च जायते। मूर्च्छा वाभिद्रुते जन्तौ प्रयोगो न भविष्यति ॥' इति पाठः। २०. 'तु' का. मु. २१. 'चेष्टनात्' का. मु. २२. 'मुकुटानीह कारयेत्' का. मु. २३. इतः पूर्वं 'रक्तस्त्रनीलहारेण अभ्रपत्रेण वेदितम्.' इत्यधिकं का. मु. पुस्तके २४. 'भेण्डे.' क-ख. २५. 'च' इति क-ख.

एवं लोकोपचारेण स्वबुद्धिविभवेन च ।
नाट्योपकरणानीह बुधः सम्यक् प्रयोजयेत् ॥ २११ ॥
[1]न भेद्यं नैव स्थेयं च न प्रहर्तव्यमेव च ।
रङ्गप्रहरणैः कार्यं संज्ञामात्रं तु कारयेत् ॥ २१२ ॥
अथवा योगशिक्षाभिर्विद्यामायाकृतेन वा ।
शस्त्रमोक्षः [2]प्रकर्तव्यो रङ्गमध्ये प्रयोक्तृभिः ॥ २१३ ॥
[3]नोक्तानि [4]यानि च मया [5]लोकाद्ग्राह्याणि तान्यपि ॥
आहार्याभिनयो ह्येष मया प्रोक्तः समासतः ।
अत ऊर्ध्वं प्रवक्ष्यामि सामान्याभिनयं प्रति ॥ २१४ ॥

[6]इति भारतीये नाट्यशास्त्रे आहार्याभिनयो नामैकविंशतितमोऽध्यायः ।

---

द्वाविंशतितमोऽध्यायः[7] ।

सामान्याभिनयो नाम ज्ञेयो वागङ्गसत्त्वजः ।
[8]तत्र कार्यः प्रयत्नस्तु नाट्ये सत्त्वं प्रतिष्ठितम् ॥ १ ॥
सत्त्वातिरिक्तोऽभिनयो ज्येष्ठ इत्यभिधीयते ।
समसत्त्वो भवेन्मध्यः सत्त्वहीनोऽधमः स्मृतः ॥ २ ॥
अव्यक्तरूपं सत्त्वं हि ज्ञेयं [9]नवरसाश्रयम् ।
यथास्थानरसोपेतं रोमाञ्चास्रादिभिर्गुणैः ॥ ३ ॥
अलंकाराश्च [10]सर्वंस्या ज्ञेया [11]भावसमाश्रयाः ।

---

१. काशीमुद्रितपुस्तके तु—
'भोक्तव्यं नायुधं रङ्गे न छेद्यं न च ताडनम् ।
आदेशमात्रं गृह्णीयात् संज्ञार्थं शस्त्रमेव हि ॥
शिक्षायोगेन नाट्येऽस्मिन् शिक्षामायाकृतेन वा ॥' इति
२. 'तु कर्तव्यो' का. मु. ३. इतः पूर्वं का. मु. पुस्तके 'एवं नानाप्रकारैस्तु आयुधाभरणानि च' इति पद्यार्धमधिकम् ४. 'नोक्तानि च मया यानि' का. ५. 'लोकाद्ग्राह्यानि' क-ख. ६. इति नाट्यशास्त्रे आहार्याभिनयो नाम त्रयोविंशोऽध्यायः । का. ७. का. मु. पुस्तके—अथ चतुर्विंशतितमोऽध्यायः । ८. 'सत्त्वे' का. मु. ९ 'भावरसाश्रयं' का. १०. 'तु नाट्यज्ञैः' का. ११. 'नाट्यरसाश्रया.' का.

यौवनेभ्यधिकाः[1] स्त्रीणां विकारा वक्त्रगात्रजाः[2] ॥ ४ ॥
आदौ त्रयोऽङ्गजास्तेषां दश स्वाभाविकास्तथा[3] ।
अयत्नजास्तथा सप्त रसभावोपबृंहिताः ॥ ५ ॥
भावो हावश्च हेला च परस्परसमुत्थिताः ।
सत्त्वभेदा भवन्त्येते शरीरे[4] प्रकृतिस्थिताः ॥ ६ ॥
देहात्मकं भवेत् सत्त्वं सत्त्वाद् भावः[5] समुत्थितः ।
भावात् समुत्थितो हावो हावाद्धेला समुत्थिता ॥ ७ ॥
वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥ ८ ॥
भावातिरिक्तं[6] सत्त्वं हि व्यतिरिक्तं[7] स्वयोनिषु ।
नैकावस्थान्तरगतं[8] हावं तमिह निर्दिशेत् ॥ ९ ॥
तत्राक्षिभ्रूविकाराढ्यः[9] शृङ्गाररससूचकः[10] ।
स ग्रीवारेचको[11] ज्ञेयो भावश्चित्तसमुत्थितः[12] ॥ १० ॥
य एव भावाः[13] सर्वेषां शृङ्गाररससंश्रयाः[14] ।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका ॥ ११ ॥
लीला विलासो विच्छित्तिर्विभ्रमः[15] किलकिञ्चितम् ।
मोट्टायितं कुट्टमितं विब्बोको[16] ललितं तथा ॥ १२ ॥
विहृतं[17] चेति संयुक्ता दश स्त्रीणां स्वभावजाः ।
पुनरेषां[18] प्रवक्ष्यामि लक्षणानि पृथक् पृथक् ॥ १३ ॥
वागङ्गालंकारैः श्लिष्टैः प्रीतिप्रयोजितैर्मधुरैः ।

---

१. 'ऽभ्यधिका.' का. २. 'प्रोक्ता.' का. ३. 'परे' का. ४. 'शरीरप्रकृतिस्थिताः' का. ५. 'भावा. समुत्थिताः' क-ख. ६. 'भावस्यातिकृतं सत्त्वं' क-ख. ७. 'च' क-ख. ८. 'नैकावस्थान्तरकृतं' क-ख. ९. 'विकाराश्च' क-ख. १०. 'शृङ्गाराकारसूचका.' क-ख ११. 'रेचका ज्ञेयो' क-ख. १२. 'भावश्चित्तसमुत्थित' क-ख. १३. 'हावा' क-ख. १४. 'संभवा' क-ख. १५. 'विभ्रम.' का. मु. १६. 'विब्बोकं' क-ख. १७. 'विहृतिश्चेति संयुक्ता' क-ख., 'विहृतं चेति विज्ञेया' का. मु. १८. 'अलंकारास्तथैतेषां लक्षणानि पृथक् पृथक्' का. मु.

इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः ॥ १४ ॥
स्थानासनगमनानां हस्तभ्रूनेत्रकर्मणां चैव ।
उत्पद्यते विशेषो यः श्लिष्टः स तु विलासः स्यात् ॥ १५ ॥
माल्याच्छादनभूषणविलेपनानामनादरन्यासः ।
स्वल्पोऽपि परां शोभां नयति ह्रियः सा तु विच्छित्तिः ॥ १६ ॥
विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम् ।
मदरागहर्षजनितो योऽतिशयो विभ्रमः स मतः ॥ १७ ॥
स्मितहसितरुदितभयहर्षदुःखगर्वश्रमाभिलाषाणाम् ।
संकरकरणं हर्षादसकृत् किलकिञ्चितं ज्ञेयम् ॥ १८ ॥
इष्टजनस्य कथायां लीलाभिर्दर्शने चापि ।
तद्भावभावनकृतमुक्तं मोट्टायितं नाम ॥ १९ ॥
केशस्तनाधरादिग्रहणेऽप्यतिहर्षसंभ्रमोत्पन्नम् ।
कुट्टमितं विज्ञेयं सुखमपि दुःखोपचारेण ॥ २० ॥
ईर्ष्याणा भावानां प्राप्तावभिमानगर्वसंभूतः ।
स्त्रीणामनादरकृतो विब्बोको नाम विज्ञेयः ॥ २१ ॥
करचरणाङ्गन्यासः सभ्रूनेत्रैश्च संप्रयुक्तस्तु ।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम् ॥ २२ ॥
प्राप्तानामपि वचसां क्रियते यदभाषणं ह्रिया स्त्रीभिः ।
व्याजात् स्वभावतो वाप्येतत् समुदाहृतं विहृतम् ॥ २३ ॥
शोभा कान्तिश्च दीप्तिश्च तथा माधुर्यमेव च ।
धैर्यं प्रागल्भ्यमौदार्यमित्येते स्युरयत्नजाः ॥ २४ ॥
रूपयौवनलावण्यरूपभोगोपबृंहितैः ।

---

१. 'स्वल्पोऽप्यधिकां' का. २. 'व्यत्यासो विभ्रमो नाम' का. ३. 'स्मितरुदितहसितभयरोगमोहदुःखश्रमाभिपन्नाणाम् ।' का. ४. 'लीलाहेलादिदर्शने चापि' का. ५. 'मोट्टायितमित्यभिख्यातम्' का. ६. 'ग्रहणेष्वति' का. ७. 'इष्टानां' का. ८. 'सभ्रूनेत्रो' का. ९. 'रिदं स्मृतं ललितम्' का. १०. 'प्राप्ताम(व)पि' मु., 'प्राप्तानामपि वचनं' का. ११. 'पातात् स्वभावतो वा' मु. १२. 'ह्येतत्' का.

अलंकरणमङ्गानां शोभेति परिकीर्तिता[1] ॥ २५ ॥
विज्ञेया च तथा कान्तिः शोभैवापूर्वमन्मथा[2] ।
कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ २६ ॥
सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च ।
अनुल्बणत्वं चेष्टायां माधुर्यमिति संज्ञितम्[3] ॥ २७ ॥
चापलेनानुपहता सर्वार्थेष्वनुकत्थना[4] ।
स्वाभाविकी चित्तवृत्तिर्धैर्यमित्यभिसंज्ञितम्[5] ॥ २८ ॥
प्रयोगनिःसाध्वसता[6] प्रागल्भ्यं समुदाहृतम् ।
औदार्यं प्रश्रयः प्रोक्तः सर्वावस्थानुगो बुधैः ॥ २९ ॥
सुकुमारा भवन्त्येते प्रयोगे ललितालके[7] ।
विलासललिते हित्वा दीर्घा[8] ह्येते भवन्ति हि ॥ ३० ॥
शोभा विलासो माधुर्यं स्थैर्यं गाम्भीर्यमेव च ।
ललितौदार्यतेजांसि सत्त्वभेदास्तु पौरुषाः ॥ ३१ ॥
दाक्ष्यं शौर्यमथोत्साहो नीचार्थेषु जुगुप्सितम्[9] ।
उत्तमैश्च गुणैः स्पर्धा यत्र शोभेति सा स्मृता ॥ ३२ ॥
वीरसंचारिणी[10] दृष्टिर्गतिर्गोवृषभाञ्चिता ।
स्मितपूर्वमथालापो[11] विलास इति कीर्तितः ॥ ३३ ॥
अभ्यासात् कारणानां तु श्लिष्टत्वं यत्र जायते ।
महत्स्वपि विकारेषु तन्माधुर्यमिति स्मृतम् ॥ ३४ ॥
धर्मार्थकामसंयुक्ताच्छुभाशुभसमुत्थितात् ।
व्यवसायादविचनं[12] स्थैर्यमित्यभिसंज्ञितम्[13] ॥ ३५ ॥

---

१. 'यत् सा शोमेति भण्यते' का. २. 'शोभैवापूर्णमन्मथा' का. ३. 'कीर्तितम्' का. ४. '°प्वविकत्थना' का. ५. '°मित्यभिधीयते' का. ६. 'प्रयोगतः साध्वयता (?)' मु. ७. 'ललितालके' का. ८. 'दीप्तेऽप्येते' मु. ९. 'जुगुप्सनम्' का. १०. 'स्थिरसचारिणो दृष्टि॰' का. ११. 'तथा वाचो' का. १२. '°दवचनं' मु., 'व्यवसायादिवचनं' क., 'व्यवसायादचलनं' का. 'व्यवसायादवचनं' मु. १३. इत्यभिधीयते का.

यस्य प्रभावादाकाराः क्रोध[1]हर्षभयादिषु ।
भावेषु नोपलभ्यन्ते तद् गाम्भीर्यमिति [2]स्मृतम् ॥ ३६ ॥
अबुद्धिपूर्वकं यत्तु सुकुमारं [3]स्वभावतः ।
शृङ्गाराकारचेष्टत्वं ललितं तदुदाहृतम् ॥ ३७ ॥
दानमभ्युपपत्तिश्च तथा च प्रियभाषणम् ।
स्वजने वा परे वापि तदौदार्यं [4]प्रकीर्तितम् ॥ ३८ ॥
अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ३९ ॥
[6]सत्त्वतोऽभिनयाः पूर्वं मयोक्ता द्विजसत्तमाः ।
शारीरं चाप्यभिनयं व्याख्यास्याम्यनुपूर्वशः ॥ ४० ॥
षडात्मकस्तु शारीरो वाक्यं सूचाङ्कुरस्तथा ।
शाखा[7] नाट्यायितं चैव निवृत्त्यङ्कुर एव च ॥ ४१ ॥
[8]नानाभावरसार्थैर्वृत्तनिबद्धैः कृतस्य चूर्णपदैः ।
प्राकृतसंस्कृतपाठ्यो[9] वाक्याभिनयो बुधैर्ज्ञेयः ॥ ४२ ॥
वाक्यार्थो वाक्यं वा सत्त्वाङ्गैः सूच्यते यदा पूर्वम् ।
पश्चाद्वचनाभिनयः[10] सूचेत्यभिसंज्ञिता सा तु ॥ ४३ ॥
[11]हृदयस्थो निर्वचनैरङ्गविकारैः कृतो निपुणसाध्यः ।
सूचेवोत्पत्तिकृतो[12] विज्ञेयस्त्वङ्कुराभिनयः ॥ ४४ ॥
यस्तु शिरोमुखजङ्घोरुपाणिपादैर्यथाक्रमं क्रियते ।
शाखादर्शितमार्गः शाखाभिनयः स विज्ञेयः ॥ ४५ ॥
नाट्यायितैस्तू(सु?)पचारै[14]र्यत्क्रियतेऽभिनयसूचना नाट्ये ।

---

१. 'रोमहर्षभयादिषु' का. २. 'गाम्भीर्यमिति शंसितम्' का. ३. 'सुकुमारस्वभावजम्' का. ४. 'तत् प्रकीर्तितम्' का. ५. 'तदौदार्यमिति स्मृतम्' का. ६. 'सत्त्वजोऽभिनयः पूर्वं मया प्रोक्तो द्विजोत्तम ।' का. ७. 'शाखो' का. ८. 'नानारसार्थयुक्तैर्वृत्तनिबद्धैः सुचूर्णकृतैः ॥ का. ९. 'संस्कृतप्रायो' मु. १०. 'वाच्याभिनयःसासूचा सूरिभिर्ज्ञेया' का. ११. 'हृदयस्थैर्निर्वचनैरङ्गाभिनयः कृतो निपुणसाध्य.' का. १२. '°त्पत्तिकृतो' मु. १३. 'बुधैर्ज्ञेयः' का. १४. '°मुपचारैः' का.

काव्यप्रकर्ष[1]हेतोः प्रवेशकैः[2] सङ्गमो यावत् ॥ ४६ ॥
स्थाने ध्रुवास्वभिनयो यत् क्रियते हर्षशोकरोषाद्यैः[3] ।
भावरससंप्रयुक्तैर्ज्ञेयं[4] नाट्यायितं तच्च ॥ ४७ ॥
यत्रान्योक्तं[5] वाक्यं सूचाभिनयेन योजयेदन्यः ।
तत्संबन्धार्थकृतं[6] यन्निर्वृत्त्यङ्कुरः[7] सोऽथ ॥ ४८ ॥
एतेषां[8] च स्मृता मार्गा यथाभावरसान्विताः ।
काव्यवस्तुषु निर्दिष्टा द्वादशाभिनयात्मकाः ॥ ४९ ॥
आलापः प्रलापश्च विलापः[9] स्याच्चैव च ।
अनुलापोऽथ[10] संलापस्त्वपलापस्तथैव च ॥ ५० ॥
संदेशश्चातिदेशश्च निर्देशः[11] स्यात्तथापरः ।
उपदेशोऽपदेशश्च[12] व्यपदेशश्च कीर्तितः ।
आभाषणे तु यद्वाक्यमालापो नाम स स्मृतः ॥ ५१ ॥
अनर्थकं वचो यत्र[13] स प्रलापश्च कीर्तितः ।
दुःखं शोकोद्भवं यत्र विलापः[14] स तु कीर्तितः[15] ॥ ५२ ॥
बहुशोऽभिहितं वाक्यमनुलाप इति स्मृतः ।
[ उक्तिप्रत्युक्तिसंयुक्तः[16] संलाप इति स स्मृतः ॥ ५३ ॥ ]
पूर्वोक्तस्यान्यथाभावो ह्यपलाप[17] इति स्मृतः ।
त्वमिदं[18] वचनं ब्रूहीत्येष संदेश इष्यते ॥ ५४ ॥
अतिदेशस्त्वयोक्तं[19] यत्तन्मयोक्तमिति स्मृतम् (तः ?) ।

---

१. 'कालप्रहर्षहेतो.' का. २. 'प्रवेशने सगमं यावत्' का. ३. 'हर्षरोषशोकाद्यैः' का. ४. '॰युक्तो ज्ञेयो' का. ५. 'यस्त्वन्योक्तं' का. ६. 'तत्संबद्धार्थकथं भा (?) यन्निवृत्त्यं' का. ७. 'निवृत्तमेवाङ्कुरं विधात्' का. ८. 'एते मार्गास्तु निर्दिष्टा' का. ९. 'विलापोऽन्यस्तथैव च' का. १०. 'इदमर्धं' का. पुस्तके नास्ति ।' ११. 'निर्देशश्च तथैव च' का. १२. 'व्यपदेशापदेशौ च थपदेशस्तथैव च' इति का. १३. 'यच्च प्रलापः स तु संज्ञितः । का. १४. 'करुणप्रभवो यस्तु विलाप इति स स्मृतः ।' इति का. १५. 'यत्तुलापश्च कीर्तितः' का. १६. एतदर्धं का. पुस्तक एव । 'उक्त-प्रत्युक्त-संयुक्त युक्तप्रत्युक्तसंज्ञितम्' इति मु. पुस्तके । १७. 'ह्यपवाद' का. मु. १८. 'तदिदं' का. १९. 'अतिदेशस्त्वयोक्तं तन्मयोक्तमिति स स्मृतः ।' का.

लोपं(कं) ब्रवीम्यहमिति यो निर्देशः स उच्यते ॥ ५५ ॥
इदं कुरु गृहाणेदमुपदेश इति स्मृतः ।
व्याजोऽन्तरेण कथनं व्यपदेशः प्रकीर्तितः ॥ ५६ ॥
एते मार्गा हि विज्ञेयाः सर्वाभिनययोजकाः ।
सप्त प्रकारास्तेषां च पुनर्वक्ष्यामि तत्त्वतः ॥ ५७ ॥
प्रत्यक्षश्च परोक्षश्च तथा कालकृतास्त्रयः ।
आत्मस्थश्च परस्थश्च प्रकाराः सप्त चैव तु ॥ ५८ ॥
अहं करोमि कर्ता च वदामि वचनं तव ।
आत्मप्रत्यक्षसंस्थश्च वर्तमानश्च स स्मृतः ॥ ५९ ॥
करिष्यामि वदिष्यामि गमिष्यामीति यद्वचः ।
आत्मस्थश्च परोक्षश्च भविष्यत्काल एव च ॥ ६० ॥
हता जिताश्च भग्नाश्च मया सर्वे द्विषद्गणाः ।
आत्मस्थश्च परोक्षश्च वृत्तकालश्च स स्मृतः ॥ ६१ ॥
त्वया हता जिताश्चैवं यो वदेन्नाट्यकर्मणि ।
एष ब्रवीमि कुरुते गच्छतीत्यादि यद्वचः ॥ ६२ ॥

---

१. 'स एकोऽहं ब्रवीमीति निर्देशः स तु संज्ञितः ।' इति का. २. काशीमुद्रितपुस्तके श्लोकस्यास्य पूर्वार्धोत्तरार्धव्यत्यासेनैव वर्तते—

'व्याजान्तरेण कथनं व्यपदेशो भवेत्तु सः ।
इदं कुरु गृहाणेदमुपदेश इति स्मृतः ॥'

३. 'वाक्याभिनययोजकाः' का. ४. 'सप्तप्रकारमेतेषां' का. ५. 'लक्षणम्' का. ६. 'आत्मस्थश्च परस्थश्च प्रकाराः सर्व (?) शृण्वन्तु (?) इति मु. ७. इतोऽग्रे काशीमुद्रितपुस्तके—

'एष ब्रवीमि नाहं भो वदामीति च यद्वचः ।
प्रत्यक्षश्च परस्थश्च वर्तमानश्च तद्भवेत् ॥'

इत्यधिकम् ।
८. 'गच्छामि' का. ९. 'आत्मस्थो वर्तमानश्च प्रत्यक्षश्चैव स स्मृत' का. १०. 'करिष्यामि गमिष्यामि वदिष्यामीति यद्वच' का. ११. 'परस्थश्च' का. १२. '°स्तु' का. १३. 'जिताश्चेति' का.
१४. 'काशीमुद्रितपुस्तके न—

परस्थो वर्तमानश्च भविष्यश्च भवेत्तथा ।
स गच्छति करोतीति वचनं यदुदाहृतम् ॥ ६३ ॥
परस्थं वर्तमानं च परोक्षं चैव तद्भवेत् ।
करिष्यन्ति गमिष्यन्ति वदिष्यन्तीति यद्वचः ॥ ६४ ॥
परस्थानेऽप्यकालं च परोक्षं चैव तद्भवेत् ।
परेषामात्मनश्चैव कालस्य च विपर्ययात् ॥ ६५ ॥
सप्त प्रकारा(रां)स्त्वस्यैव भेदान् प्राहुरनेकधा ।
हस्तमन्तरतः कृत्वा यद्वदेन्नाट्यकर्मणि ॥ ६६ ॥
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ।
शिरोवदनहस्तोरःकट्यूरुचरणाश्रयः ॥ ६७ ॥
समःकर्मविभागे यो विविधाभिनये तु सः ।
ललितैर्हस्तविन्यासैस्तथा मृद्वङ्गचेष्टितैः ॥ ६८ ॥
अभिनेयं तु नाट्यज्ञै रसभावसमन्वितैः ।
अनुद्धतमसंभ्रान्तमनाविद्धाङ्गचेष्टितैः ॥ ६९ ॥
लयतालकलाकालप्रमाणनियतात्मकम् ।

---

'परोक्षश्च परस्थश्च कृतकालस्तथैव च ।
ममाप्येव च संपाद्यं तत्कार्यं भवता सह ॥
आत्मस्थश्च परस्थश्च वर्तमानश्च स स्मृतः ।
हस्तमन्तरितं कृत्वा यद्वदेन्नाट्यकर्मणि ॥
आत्मस्थं हृदयस्थं च परोक्षं चैव तन्मतम् ।
परेषामात्मनश्चैव कालस्यैव विशेषणात् ॥
सप्तप्रकारकस्यैव भेदा ज्ञेया ह्यनेकशः ।
एते प्रयोक्तृभिर्ज्ञेया मार्गा ह्यभिनये स्मृताः ॥
एभिरेव विनिष्पन्नो विविधोऽभिनये मतः ।'

इयान् पाठः 'एष ब्रवीमि' इत्यारभ्य 'प्राहुरनेकधा' इत्यन्तस्य श्लोकचतुष्टयस्य स्थाने वर्तते।

१. 'शिरोवदनपादोरुजङ्घोदरकटीकृत । समकर्मविभागो यो सामान्याभिनयस्तु सः ॥' इति का. २. 'ललितैर्हस्तसंचारैस्तथा मृद्वङ्गचेष्टितैः । अभिनेयस्तु नाट्यज्ञै रसभावसमन्वितै. ॥' इति का. ३. 'रसभावसमन्वितै' इति का. ४. 'अनुद्रसेन संभ्रान्तमनाविध्यातद्वेष्टितम्।(?)' मु. ५. 'कलापादिप्रमाण' का. ६. 'नियतात्मजम्' (?) का.

सुविभक्तपदालापमनिष्ठुरमनाकुलम् ॥ ७० ॥
यदीदृशं भवेन्नाट्यं ज्ञेयमाभ्यन्तरं तु तत् ।
एतदेव विपर्यस्तं स्वच्छन्दगतिचेष्टितम् ॥ ७१ ॥
अति(नि ?) बद्धगीतवाद्य(द्यं ?)नाट्यं बाह्यमिति स्मृतम् ।
लक्षणाभ्यन्तरं यत् स्यात् तमोदार(तदेवा ?)भ्यन्तरं स्मृतम् ॥ ७२ ॥
शास्त्रार्थबाह्यभावार्थं बाह्यमित्यभिधीयते ।
अनेन लक्ष्यते यस्मात् प्रयोगः कर्म वा बुधैः ॥ ७३ ॥
तस्माल्लक्षणमेतद्धि नाट्येऽस्मिन् सम्प्रयोजितम् ।
अनाचार्योदिता ये च ये च शास्त्रबहिष्कृताः ॥ ७४ ॥
बाह्यास्ते तु प्रयोजयन्ति(न्ते ?) क्रियामात्रैः प्रयोजितैः ।
शब्दं स्पर्शं च रूपं च रसं गन्धं तथैव च ॥ ७५ ॥
इन्द्रियाणीन्द्रियार्थांश्च भावैरभिनयेद् बुधः ।
कृत्वा साचीकृतां दृष्टिं शिरः पार्श्वाञ्चितं तथा ॥ ७६ ॥
तर्जनीं कर्णदेशे तु शब्दान्नियोजयेत् बुधः ।
किंचिदाकुञ्चिते नेत्रे कृत्वा भ्रूक्षेपमेव च ॥ ७७ ॥
स्कंधासगण्डयोः स्पर्शात् स्पर्शमेवं विनिर्दिशेत् ।
कृत्वा पताके मूर्धस्थे किंचित् प्रचलिताननः ॥ ७८ ॥
निर्वर्णयन्त्या दृष्ट्या च रूपं त्वभिनयेद् बुधः ।
किंचिदाकुञ्चिते नेत्रे कृत्वोत्फुल्लां च नासिकाम् ॥ ७९ ॥
एकोच्छ्वासेन चोद्दिष्टौ रसगन्धौ विनिर्दिशेत् ।

---

१. 'सुविभक्तपदालाप' फा. २. 'अनाकुलम्' फा. ३. 'अभ्यन्तरं' मु ४. 'अनियद्धं गीतवाद्ये ' फा. ५. 'लक्षणाभ्यन्तरत्वादि तदभ्यन्तरमिष्यते ।' फा. ६. 'शास्त्रार्थाद्बाह्यं भवेद् यत्तु तद् बाह्यमिति संज्ञितम् ।' इति फा. ७. 'कर्म चैव हि' फा. ८. 'अनाचार्योदिता ये च ये च शास्त्रबहिष्कृताः' (!) मु. ९. 'बाह्यास्ते तु प्रयोज्यन्ति (!)' मु ,'बाह्यं ते तु प्रयोक्ष्यन्ते क्रियामात्रे प्रयोजितम् ।' फा. १०. 'इन्द्रियैरिन्द्रियार्थैश्च' फा. ११. 'पार्श्वागतं' फा. १२. 'तर्जनी' फा. १३. 'शब्द लभिनयेद् बुध ' फा. १४. 'भ्रुवोरुत्क्षेपणेन च' फा. १५. 'तथाऽसगण्डयो ' फा. १६. 'पताके मूर्धस्थौ' मु १७. 'प्रचलिताङ्गुलि.' फा. १८. 'तु' फा. १९. 'एकोच्छ्वासेन दृष्टौ' फा.

पञ्चानामिन्द्रियार्थानां भावा ह्येतेऽनुभाविनः ॥ ८० ॥
त्वक्चक्षुर्घ्राणजिह्वानां श्रोत्रस्य च तथैव हि ।
इन्द्रियार्थाश्च मनसा भवन्ति ह्यनुभाविनः ॥ ८१ ॥
न वेत्ति ह्यमनाः किंचिद्विषयं पञ्चहेतुकम् ।
मनसस्त्रिविधो भावो विज्ञेयोऽभिनयं प्रति ॥ ८२ ॥
ईष्टोऽनिष्टश्च मध्यश्च तस्याभिनय उच्यते ।
प्रह्लादनेन गात्रस्य तथा पुलकितेन च ॥ ८३ ॥
वदनस्य विकाशेन कुर्यादिष्टनिदर्शनम् ।
इष्टे शब्दे तथा रूपे स्पर्शे घ्राणे तथा रसे ॥ ८४ ॥
इन्द्रियैर्मनसि प्राप्तैः सौमुख्यं संप्रदर्शयेत् ।
परावृत्तेन शिरसा नेत्रनासा विविक्त(क्ति)तैः ॥ ८५ ॥
चक्षुषश्चाप्रदानेन ह्यनिष्टमभिनिर्दिशेत् ।
तानि हृष्टेन मनसा न चात्यन्तजुगुप्सया ॥ ८६ ॥
मध्यस्थेनैव भावेन मध्यस्थमभिनिर्दिशेत् ।
तेनेदं तस्य वापीदं स एवं प्रकरोति च ॥ ८७ ॥
परोक्षाभिनयो यस्तु मध्यस्थ इति स स्मृतः ।
आत्मानुभावी योऽर्थः स्यादात्मस्थ इति स्मृतः ॥ ८८ ॥
परार्थवर्णनायां च परस्थ इति स स्मृतः ।
प्रायेण सर्वभावानां कामान्निष्पत्तिरिष्यते ॥ ८९ ॥

---

१. '°न्द्रियाणां च' का. २. '°ऽनुभावजाः' का. ३. 'च' का. ४. 'इन्द्रियार्थश्च मनसा भाव्यते ह्यनुभावितः ।' इति का. ५. 'इष्टोनिष्टस्तथा चैव मध्यस्थश्च तथैव च ।' इति का. ६. 'गात्रप्रह्लादनेनेह' का. ७. 'आननप्रक्रियाभिश्च सर्वमिष्टं निरूपयेत् ।' इति का. ८. 'गन्धे रसेऽपि वा' का. ९. 'इन्द्रियैः' (!) मु., 'इन्द्रियैर्मनसा प्राप्तै.' का. १०. '°ऽप्रदानेन च चक्षुषः' का. ११. 'नेत्रनासाश्रिततया' का. १२. 'न चातिमात्रहृष्टस्तु' का. १३. 'न चा–' का. १४. 'वा' का. १५. 'आत्मानुभावा' मु. १६. 'स्यात् स आत्मस्थ' का. १७. 'परस्य वर्णनीयस्य परस्थः स तु संज्ञितः ।' इति का.

स चेच्छागुणसंपन्नो बहुधा परिकल्पितः ।
धर्मकामोऽर्थकामश्च मोक्षकामस्तथैव च ॥ ९० ॥
यैस्तु स्त्रीपुंसयोर्योगः समो योग इति स्मृतः ।
सर्वस्यैव हि लोकस्य सुखदुःखनिबर्हणम् ॥ ९१ ॥
भूयिष्ठं दृश्यते कामः सुखदो दुःखदेष्वपि ।
यः स्त्रीपुरुषसंयोगो रतिसंभोगकारकः ॥ ९२ ॥
स शृङ्गार इति ज्ञेय उपचारकृतः शुभः ।
सर्वः प्रायेण लोकोऽयं सुखमिच्छति सर्वदा ॥ ९३ ॥
सुखस्य च स्त्रियो मूलं नानाशीलधराश्च ताः ।
देवतासुरगन्धर्वरक्षोनागपतत्रिणाम् ॥ ९४ ॥
पिशाचयक्षव्यालानां नरवानरहस्तिनाम् ।
मृगमीनोष्ट्रमकरखरसूकरवाजिनाम् ॥ ९५ ॥
महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ।
स्निग्धाङ्गोपाङ्गनयना स्थिरा मन्दनिमेषिणी ॥ ९६ ॥
अरोगा दीप्त्युपेता च सत्यार्जवदयान्विता ।
अल्पस्वेदा समरता स्वल्पशुक्रतलप्रिया ॥ ९७ ॥
गन्धपुष्परता हृष्टा देवशीलाङ्गना स्मृता ।
अधमा शाठ्यनिरतस्थिरकोपातिनिष्ठुरा ॥ ९८ ॥
मद्यमांसप्रिया नित्यं [18] कोपना चातिमानिनी ।

---

१. 'काम दृश्यते' का. २. 'धर्मकामार्थकामस्य' मु. ३. 'स्त्रीपुंसयोस्तु संयोगो यः कामः स तु संस्मृतः ।' का. ४. श्लोकोऽयं का-पुस्तके नास्ति. ५. '°संयोगे रतिसंभोगकारक.' का. ६. 'उपचारहृत.' का. ७. '९६' का. ८. 'सुखमिच्छति नित्यशः' का. ९. 'नानाशीलाश्च ताः पुनः' का. १०. 'पिशाचयक्षव्यालानां' का. ११. 'खरसूकराणाम्' का. १२. 'स्निग्धा चाङ्गोपाङ्गेषु' का. १३. 'स्थिरमन्द' का. १४. 'दानदयार्जवसंनिरता' का. १५. 'स्वल्पगुह्य सुरतप्रिया' का. १६. 'गन्धपुष्पादिभिरता हृष्टा देवाङ्गना स्मृता ।' का. १७. 'अधमैः शाठ्यनिरता' का. १८. 'कोपना चातिमानिनी' का.

चपला चातिनिर्लुब्धा परुषा कलहप्रिया ॥ ९९ ॥
ईर्ष्याशीलाथ निःस्नेहा शीलमासुरमाश्रिताः ।
क्षिप्रापरा चारुनेत्रा नखदन्तैः सुपुष्पितैः ।
तन्वङ्गी सितभाषा च मन्दापत्या रतिक्रि(प्रि?)या ॥ १०० ॥
नृत्ते गीते च वाद्ये च रता हृष्टा मृजावती ।
गान्धर्वशीला विज्ञेया स्निग्धत्वक्केशलोचना ॥ १०१ ॥
बृहद्व्यायतसर्वाङ्गी रक्तविस्तीर्णलोचना ।
खररोमा दिवास्वमस्वर्भावोत्फुल्लभाषिणी ॥ १०२ ॥
नखदन्तक्षतंकरी क्रोधेर्ष्याकलहप्रिया ।
निशाविहारशीला च राक्षसं शीलमास्थिता ॥ १०३ ॥
तीक्ष्णनासाग्रदशना सुतनुस्ताम्रलोचना ।
नीलोत्पलसवर्णा च स्वप्नशीलातिकोपना ॥ १०४ ॥
तिर्यग्जनिश्चलारम्भा बहुविम्बातिमानिनी ।
गन्धमाल्यातिनिरता नागसत्त्वाङ्गना स्मृता ॥ १०५ ॥
अत्यर्थं मदिरासा च तीक्ष्णशीला रतिप्रिया ।
सुरासवक्षीररता बह्वपत्या फलप्रिया ॥ १०६ ॥
नित्यं श्वसनशीला [ च सदो ] द्यानरतिप्रिया ।
जनाधिकाङ्गुलिः क्रूरा रात्रौ निष्कुटचारिणी ॥ १०७ ॥
यालोद्वेजनशीला च पिशुना क्लिष्टभाषिणी ।

१. 'चातिलुब्धा च' का. २. चलस्नेहा' का. ३. 'चासुरशीलमास्थिता' का. ४. 'अनेकारामभोग्या च' का. ५. 'सिताभिभाषिणी तन्वी मन्दचारा रतिप्रिया' इति का. ६. 'गीते वाद्ये च नृत्ते च नित्यं हृष्टा' का. ७. 'बृहदायतसर्वाङ्गी' का. ८. 'निवृतात्युच्चभाषिणी' का. ९. '°क्षतकरी' का. १०. 'सत्त्वमाश्रिता' का. ११. 'नासाग्रदशना' का. १२. 'स्वप्नोद्देशा' का. १३. 'तिर्यग्गति.' का. १४. 'बहुसत्त्वाभिनन्दिनी' का. १५. 'गन्धमाल्यादिनिरता' का. १६. 'अत्यन्त व्यावृतास्या च' का. १७. 'तीक्ष्णा शीला' मु. १८. 'सरित्प्रिया' का. १९. 'क्षीररसा' का. २०. '···तिष्ठेद्यौनरतिप्रिया' मु. 'च सदोद्यानवनप्रिया' का. २१. 'जनाधिका-' इत्यादि पद्यद्वयी का. मु.—पुस्तके नास्ति ।

सुरते कुत्सिताचारा रोमशाङ्गी महास्तना ।
पिशाचसत्त्वा विज्ञेया मद्यमांसरतिप्रिया ॥ १०८ ॥
स्वप्नप्रस्वेदनाङ्गी च स्थिरशय्यासनप्रिया ।
मे[1]धाविनी भ········मद्यगन्धामिषप्रिया ॥ १०९ ॥
चिरे[2]दृष्टे तु हर्षं च कृतज्ञत्वादुपैति या ।
अ[3]दीर्घगमना या च ज्ञेया यक्षान्वयाङ्गना ॥ ११० ॥
मा[4]नापमानयोस्तुल्या परुषा कटुकाक्षरा ।
शठानृतोद्धतकथा पिङ्गदृक् (ग्?) व्या[5]लवंशजा ॥ १११ ॥
आर्जवाभिरता नित्यं दक्षात्यन्तगुणान्विता ।
विभक्ताङ्गी कृतज्ञा च गुरुदेवार्चने रता ॥ ११२ ॥
धर्मकामार्थनित्या च[6] वश्याहङ्कारवर्जिता ।
सुहृत्प्रिया सुशीला च मानुषं हेतुमा[7]श्रिता ॥ ११३ ॥
सह[8]तालपतनुर्धृष्टा पिङ्गरोमा फलप्रिया ।
प्रगल्भा चपला तीक्ष्णा वृक्षाग(रा?)मर[9]तिप्रिया ॥ ११४ ॥
स्व[10]ल्पमप्युपकारं तु नित्य या बहु मन्यते ।
अ[11]संह्यरतिशीला च कपिस[12]त्त्वं समाश्रिता ॥ ११५ ॥
महाहनुर्ललाटा च श[13]रीरोपचयान्विता ।
पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्यास[14]र्वप्रिया ॥ ११६ ॥
कोपना स्थिरसत्त्वा च ज[15]लोद्यानवनप्रिया ।
मधुराभिरता चैव हस्तिसत्त्वा प्र[16]कीर्तिता ॥ ११७ ॥

---

१. 'एतत्पद्यार्धं का- मु पुस्तके नास्ति ।' २. 'चिर इष्टेषु हर्षं च क्रमज्ञत्वादुपैति या ।' मु. ३. 'अदीर्घशायिनी चैव ज्ञेया यक्षाङ्गनान्वया ।' का-मु. ४. 'तुल्यमानापमाना च परुषलक् खरस्तना ।' का. ५. 'व्यालसत्त्वाथ पिङ्गदृक्' का. ६. 'अहंकारविवर्जिता' का. ७. 'सत्त्वमाश्रिता' का. ८. 'हंसबाल्पतनुर्हृष्टा' मु, 'सहतालपतनुर्धृष्टा' का. ९. 'वृक्षागमरतिप्रिया' मु., 'वृक्षारामवनप्रिया' का. १०. 'माल्पमधुपकारं तु नित्यं या च कुमन्यते । (?) मु., ११. 'असह्य' का. १२. 'वानरं सत्त्वमाश्रिता' का. १३. 'मांसलोपचयान्विता' का. १४. 'गन्धमाल्याश्रयप्रिया' मु. १५. 'जलौघनयन-प्रिया' मु. १६. 'रतप्रिया' का.

स्वल्पोदरी म(भ?)ग्ननासा तनुजङ्घा वनप्रिया।
चैल[1]विस्तीर्णनयना चपला शीघ्रगामिनी ॥ ११८ ॥
परित्रासपरा[2] भीरू रोमशा[3] गीतलोभिनी।
कोपना य(च?)लसत्त्वा[4] च मृगसत्त्वाङ्गना स्मृता ॥ ११९ ॥
दीर्घपीनोन्नतोरस्का[5] चपलातिनिमेषिणी[6]।
बहुभृत्या बहुसुता मत्स्यसत्त्वा जलप्रिया ॥ १२० ॥
लम्बोष्ठी स्वेदबहुला किंचिद्विकटगामिनी।
कृशोदरी पुष्पफलवर्णांशुकबहुप्रिया[7] ॥ १२१ ॥
उद्बद्धकटिपार्श्वा च खरनिष्ठुरभाषिणी।
अत्युन्नतकटिग्रीवा[8] भवेदुष्ट्री वनप्रिया ॥ १२२ ॥
स्थूलशीर्षाञ्चितग्रीवा[9] दारितास्या महास्तना।
ज्ञेया मयूरसत्त्वा[10] च क्रूरा मत्स्यगुणैर्युता ॥ १२३ ॥
स्थूलजिह्वोष्ठवदना[11] रूक्षत्वक् कटुभाषिणी।
रतियुद्धप्रिया[12] हृष्टा नखदन्तक्षतप्रिया ॥ १२४ ॥
सपत्नीद्वेषिणी दक्षा चपला शीघ्रगामिनी।
सरोषा बह्वपत्या च खरसत्त्वा प्रकीर्तिता ॥ १२५ ॥
दीर्घपृष्ठोदरमुखी रोमशाङ्गी बलान्विता।
सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया ॥ १२६ ॥
कृष्णदन्तोत्कटमुखी पीवरोरुशिरोरुहा।
हीनाचारा बह्वपत्या सौकरं सत्त्वमाश्रिता ॥ १२७ ॥
स्थिरा विभक्तपार्श्वोरुकटिपृष्ठशिरोधरा।
सुरूपा[13] दानशीला च ऋजुस्थूलशिरोरुहा[14] ॥ १२८ ॥

१. 'रक्तविस्तीर्णनयना' का. २. 'परित्रासपरा' का. ३. 'भीरुर्गीतवादा' का. ४. 'कोपना स्थिरसत्त्वा' का. ५. '°न्नतोरस्यु'(?) मु. ६. 'निर्निमेषिणी' का. ७. 'फुल्लफललवणाम्लकटुप्रिया' का. ८. 'अभ्युन्नतखरग्रीवा उष्ट्रसत्त्वाटवीप्रिया।' का. ९. 'स्थिरग्रीवा' का. १०. 'मकरसत्त्वा' का. ११. 'जिह्वोष्ठरसना' का. १२. 'रतियुद्धकरी' का. १३. 'शु(सु?)भगा' का. १४. 'शिरोरुजा (हा') का.

कृशा च[1] चलचित्ता च स्निग्धवाक्[2] शीघ्रगामिनी ।
कामक्रोधपरा नित्यं हयसत्त्वा[3] [4]प्रकीर्तिता ॥ १२९ ॥
स्थूलपृष्ठास्थि[5]दशना स्निग्धत्वङ्मधुरा च या ।
खररोमाञ्चिता रौद्री[6] लोकद्विष्टा रतिप्रिया ॥ १३० ॥
किंचिदुन्नतवक्त्रा च जलक्रीडावनप्रिया ।
बृहल्ललाटा[7] सुश्रोणी माहिषं सत्त्वमाश्रिता ॥ १३१ ॥[8]
उद्बुद्धगात्रनयना विजृम्भणपरायणा ।
दीर्घान्तवदना[9] स्वल्पा[10] पाणिपादविभूषिता ॥ १३२ ॥
उच्चैःस्वराल्पनिद्रा[11] च कोपना बहुभाषिणी ।
हीनाचारा कृतघ्ना च श्वशीला[12] परिकीर्तिता[13] ॥ १३३ ॥
पृथु[14]पीनोन्नतश्रोणी तनुजङ्घा सुहृत्प्रिया ।
संक्षिप्तपाणिपादा च दृढारम्भा[15] प्रजाहिता ॥ १३४ ॥
पितृदेवार्चनरता शुचिसत्त्वा[16] गुरुप्रिया ।
स्थिरा परिक्लेशसहा गवां सत्त्वमुपाश्रिता[17] ॥ १३५ ॥
कृशातनुभुजोरस्को(स्का ?) निर्दम्प[18]तरलोचना ।
संक्षिप्तपाणिपादा च रूक्षा[19] रोमसमाञ्चिता ॥ १३६ ॥

---

१. 'मूढा चपलचित्ता च' का. २. 'तीक्ष्णवाक्' का. ३. 'चैव' का. ४. 'हय-सत्त्वाङ्गना स्मृता' का. ५. 'तनुपार्श्वोदरस्थिरा' का. ६. 'रौद्रा' का. ७. '°ललाट-सुश्रोणी' का. ८. इतोऽग्रे का. मु. पुस्तके—

'कृशा तनुभुजोरस्का विष्कम्पेतरलोचना ।
संक्षिप्तपाणिपादा च सूक्ष्मरोमसमाचिता ॥
भयशीला जडोन्मत्ता बह्वाशा वनप्रिया ।
चपला शीघ्रगमना ध्वजाशीलाङ्गना स्मृता ॥'

अग्रिमपद्यद्वयमेव. ९. 'दीर्घाल्पवदना' का. १०. 'स्वल्पपाणिपादविभूषणा' का. ११. 'उच्चैःस्वरा स्वल्पनिद्रा' का. १२. 'स्व(श्व)शीला' मु. १३. 'साश्वशीला प्रकीर्तिता' का. १४. 'मधु (?) पीनोन्नतश्रोणि°' मु. १५. 'दृढारम्भा' का. १६. 'नित्य-शौचा' का. १७. 'सत्त्वमुपाश्रिता' का. १८. 'विष्कम्पे°' का. १९. 'सूक्ष्मरोम-समाचिता' का.

भयशीला जलोद्विग्ना[1] बह्वपत्या घ(व?)नप्रिया[2]।
चञ्चला शीघ्रगमना ह्यजाशीलाङ्गना स्मृता ॥ १३७ ॥
विज्ञाय च यथासत्त्वं उपसर्पेद् यथा[3]गुणम्।
उपचारो यथासत्त्वं प्रयुक्तो[4] हर्षवर्धनः ॥ १३८ ॥
महा[5]नप्यन्यथा युक्तो नैव तुष्टिकरो भवेत्।
यथा सप्रार्थिता[6] बाह्यरतिः समुपजायते ॥ १३९ ॥
स्त्रीपुंसयोश्च रत्यर्थमुपचारो विधीयते।
धर्मार्थं[7] हि तपश्चर्या सुखार्थं[8] धर्म इष्यते ॥ १४० ॥
सुखस्य मूलं प्रमदास्तासु संभोग इष्यते।
कामोपभोगो द्विविधो नाट्यधर्मे विधीयते ॥ १४१ ॥
बाह्यश्चाभ्यन्तरश्चैव नारीपुरुषसंश्रयैः[9]।
आभ्यन्तरः पार्थिवाना कर्तव्यः स च नाटके ॥ १४२ ॥
बाह्यो वेश्याङ्गनानां तु स चैं[10] प्रकरणे भवेत्[11]।
त्रिविधा[12] प्रकृतिः स्त्रीणां नानासत्त्वसमुद्भवा ॥ १४३ ॥
बाह्या चाभ्यन्तरा चैव स्याद् बाह्याभ्यन्तरा परा।
कुलीनाभ्यन्तरा ज्ञेया बाह्या वेश्याङ्गनाकृते ॥ १४४ ॥
कृतशौचा[13] च या नारी सा बाह्याभ्यन्तरा स्मृता।
अन्त.पुरोपचा[रेषु[14][15] कुलजा कन्यकापि वा ॥ १४५ ॥
नहि राजोपचारेषु कुलजा कन्यकापि वा।
नहि राजोपचारेषु बाह्यस्त्रीभोग इष्यते ॥ १४६ ॥

---

१. 'जडोन्मत्ता' का. २. 'वनप्रिया' का. ३. 'ततो बुध' का. ४. 'स्त्रीणाम ल्पोऽपि हर्षद॰' का. ५. 'महानप्य (प्यु?) नया' मु ६. 'यथा सप्रार्थिताया' का. ७. 'सभव.' का. ८. 'स च कार्यस्तु' का. ९. 'वेश्याकृतश्चैव' का. १०. 'तु' का.
११. अत्र— 'तत्र राजोपभोगं तु व्याख्यास्याम्यनुपूर्वशः।
उपचारविधिं सम्यक् कामसूत्रसमुत्थितम् ॥'
इत्यधिकं का-पुस्तके. १२. 'विविधा' का. १३. 'स्मृता' का. १४. 'कृत' इति त्रुटितं मु. पुस्तके. १५. इत प्रभृति १५०॥ श्लोकपर्यन्तं कोष्ठनिबद्धः पाठ, का-पुस्तके.

आभ्यन्तरो भवेद् राज्ञो बाह्ये बाह्यजनस्य वा ।
दिव्यवेश्याङ्गनानां हि राज्ञा भवति संगमः ॥ १४७ ॥
कुलजानां मतं यच्च तज् ज्ञेयं कन्यकास्वपि ।
या चापि वेश्या साप्यत्र यथैव कुलजास्तथा ॥ १४८ ॥
इह कामसमुत्पत्तिर्नानाबीजसमुद्भवा ।
स्त्रीणां वा पुरुषाणां वा उत्तमाधममध्यमा ॥ १४९ ॥
श्रवणाद् दर्शनाद् रूपादङ्गलीलाविचेष्टितैः ।
मधुरैः संप्रलापैश्च कामः समुपजायते ॥ १५० ॥
ततः कामयमानानां नृणां स्त्रीणामथापि वा ।]
कामभावेङ्गितानीह तज्ज्ञः समुपलक्षयेत् ॥ १५१ ॥
[ रूपगुणादिसमेतं कलादिविज्ञानयौवनोपेतम् ।
दृष्ट्वा पुरुषविशेषं नारी मदनातुरा भवति ॥ १५२ ॥
ललिता चलपक्ष्मा च सास्रा मुकुलितेक्षणा ।
सस्रोत्तरपदा चैव काम्या दृष्टिर्भवेदिह ॥ १५३ ॥
पतितान्ता सलालित्यसस्मितैर्व्यञ्जितैः सदा ।
दृष्टिः सा ललिता नाम स्त्रीणामर्धविलोकने ॥ १५४ ॥
ईषत्संरक्तकण्ठश्च स्वेदबिन्दुविचित्रितः ।
प्रस्यन्दमानरोमाग्रो सुरतरागस्तु कामजः ॥ १५५ ॥ ]
काम्येनैवाङ्गविकारेण सकटाक्षनिरीक्षितैः ।
तथाभरणसंस्पर्शात् कर्णकण्डूयनादपि ॥ १५६ ॥
अङ्गुष्ठाग्रविलेखेन स्तननाभिप्रदर्शनात् ।
नखनिस्तोदनाच्चापि केशसंयमनादपि ।
एवंविधैर्विविधैर्भावैर्लक्षयेन्मदनातुराम् ॥ १५७ ॥

कुलजायास्तथा चैव प्रवक्ष्यामीङ्गितानि तु ।
प्रहसन्ती च नेत्राभ्यां प्र(प्रे)तनं च परीक्षयेत् ॥ १५८ ॥
स्मयते सा निगूढं च वाक्यं चाधोमुखी वदेत् ।
सितोचरा मन्दवाक्या खेदाकारनिगूहनी ॥ १५९ ॥
प्रस्पन्दिताधरा चैव चकिता च कुलाङ्गना ।
एवंविधैः कामलिङ्गैर्ज्ञाप्तसुरतोत्सवा ॥ १६० ॥
दशावस्थागतं कामं नानाभावं प्रदर्शय(ये)न् (त्) ।
प्रथमे त्वभिलाषः स्याद् द्वितीये चिन्तनं भवेत् ॥ १६१ ॥
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् ।
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ॥ १६२ ॥
उन्मादः सप्तमे ज्ञेयो भवेद् व्याधिस्तथाष्टमे ।
नवमे जडता चैवं मरणं दशमे भवेत् ॥ १६३ ॥
स्त्रीपुंसयोरेप विधिर्लक्षणं च विधीयते ।
व्यवसायात् समारब्धः संकल्पेच्छासमुद्भवः ॥ १६४ ॥
समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः ।
निर्याति विशति च मुहुः करोति चाकारमेव मदनस्य ॥ १६५ ॥
तिष्ठति च दर्शनपथे प्रथमस्थाने स्थिता कामे ।
केनोपायेन सामान्यैः [ कथं वा संभवेन्मम ॥ १६६ ॥
दूतीनिवेदितैर्भावैरिति चिन्तां विनिर्दिशेत् ।

---

१. 'विज्ञेयानी°' का. २. 'वै' का. ३. 'नेत्राभ्यां प्रततं च निरीक्षते' का. ४. 'स्मयते च निगूढं च' का. ५. 'चाधो' का. ६. 'सितास्त्वरा' का. ७. 'निगूहना' का. ८. 'अप्रास्त्वं (?)' मु. ९. 'देशस्थानगतं' मु. १०. 'नानाभावैः प्रकाशयेत्' का. 'नानाभावं प्रदर्शयन्' मु. ११. '°ष्टमः' का. १२. 'चैव' का. १३. 'दशमे मरणं' का. १४. निवोधत' का. १५. '°स्तत्कास्यस्य (?)' मु. १६. 'निर्गच्छति प्रविशति' का. १७. 'च' का. १८. 'स्थिते कामे' का. १९. 'संभ्रान्तिः' का. २०. '[ कथं वा–इत्यारभ्य, रसना ] इत्यन्तं पाठः कोष्ठान्तर्गतः क-पुस्तके त्रुटितः । २१. 'वाक्यैः' का.

आकेकरार्ध(क्षिं ?)विप्रेक्षितानि वलयरसना ] परामर्शः ।
नीवीनाभ्योः संदर्शनं च कार्यं द्वितीये तु ॥ १६७ ॥
मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः ।
प्रद्वेषस्त्वन्यकार्याणामनुस्मृतिरुदाहृता ॥ १६८ ॥
नैवासने न शयने धृतिमुपलभते स्वकर्मणि ।
विहस्ता न (?) चिन्तोपगतत्वात्तृतीयमेवं प्रयुञ्जीत ॥ १६९ ॥
अङ्गमल्यङ्गलीलाभिर्वाक्चेष्टाहसितेक्षणैः ।
नास्त्यन्यः सदृशस्तेनेत्येतत्स्याद्गुणकीर्तनम् ॥ १७० ॥
गुणकीर्तनोत्तु (ने तु) कुशलैरश्रुस्वेदापमार्जनैश्चापि ।
दूत्या विरहविश्रुम्भे (?) ऽभिनययोगश्चतुर्थे तु ॥ १७१ ॥
आसने शयने वापि न कुप्यति न हृष्यति ।
नित्यमेवोत्सुका यस्मात् उद्वेगस्थानमेव तु ॥ १७२ ॥
चिन्तानिश्वासस्वेदेन हृद्दाहाभिनयेन च ।
सदेव कुर्यादत्यन्तमुद्वेगाभिनयेन च ॥ १७३ ॥
इह स्थित इहासीन इहायापगते (?) मया ।
इति तैस्तैर्विलापेऽपि तैर्विलापं प्रयोजयेत् ॥ १७४ ॥
उद्विमात्यर्थमौत्सुक्यादरत्या च विलापिनी ।
ततस्ततश्च भ्रमति विलापस्थानमापि हि (?) ॥ १७५ ॥
..........................................................
प्रद्वेष्टि चापरान् पुंसो यत्रोन्मादः स उच्यते ॥ १७६ ॥
तिष्ठत्यनिमिषदृष्टिर्दीर्घं नि[ः]श्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥ १७७ ॥
सामघनादि (?) सांभोगैः काम्यैः सप्रेक्षणैरपि ।
सर्वैरवशीकरणाद्व्याधिः समुपजायते ॥ १७८ ॥

१. 'अपेकरार्धे' मु, 'आकेकराक्षि' का. २. 'रचना' का. ३. 'नीवीनाभ्यूरुस्तनस्पर्श. कार्यो' का. ४. 'तृतीयमेव' का. ५. "घनारिसंभोगै.' (?) स.

युध्यति (?) हृदयं क्वापि प्रयाति शिरसस्त्ववेदना तीव्रा।
न धृतिं चाप्युपलभते द्यष्टममेवं त्वभिनयेत् ॥ १७९ ॥
पृष्टा[1] न किंचित् प्रब्रूते न शृणोति न पश्यति।
हा कष्टाष्टमतूष्णीका जडतायां गतस्मृतिः ॥ १८० ॥
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका।
श्वासाग्रे स्याननासेव जडताभिनये भवेत् ॥ १८१ ॥
सर्वैः कृतैः प्रतीकारैर्यदि नास्ति समागमः।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥ १८२ ॥
एवं स्थानानि कार्याणि कामतन्त्रसमीक्षया।
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम् ॥ १८३ ॥
विविधैः पुरुषोऽप्येवं विप्रलम्भसमुद्भवैः।
भावैरेतानि कामस्य नानारूपाणि योजयेत् ॥ १८४ ॥
एवं कामयमानाना स्त्रीणां नृणामथापि वा।
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ॥ १८५ ॥
ललिता चलपक्ष्मा च साश्रुर्मुकुलितेक्षणा।
सस्तोत्तरे (र?) सुपक्रान्ता काम्या इ(इ)ष्टिर्भवेदिदम् ॥ १८६ ॥
ईषत्संरक्तगण्डस्तु सस्वेदलयचित्रितः।
प्रस्पन्दमानरोमाञ्चो युगराग इहेष्यते।
चिन्तातित्रासखेदेन हृद्दाहाभिनयेन च ॥ १८७ ॥
तथानुगुणना (नी?)यापि तथैवोर्ध्वनिरीक्षणात्।
आकाशवीक्षणाच्चापि तथा दीनप्रभाषणात् ॥ १८८ ॥
स्पर्शनान्मोटनाच्चापि तथा पापा समाश्रयेत्।
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ॥ १८९ ॥
कामस्थानानि सर्वाणि भूयिष्ठं सम्प्रयोजयेत्।
स्रजो भूषणगन्धान्य (?) गृहाण्युपय(व?)नानि चै ॥ १९० ॥

१. 'पृष्टा' ख.

कामाग्निना दह्यमाना [ ] शीतलानि निषेवते ।
मदह्यमानकामार्तो बहुस्थानसमन्वितः ॥ १९१ ॥
प्रेषयेत्कामदूतीं तु स्वावस्थादर्शनं प्रति ।
संदेशये (?) मे दूत्यास्तु मदद्यान्मदनाश्रयम् ।
तस्येय समयस्येति कथयेद्विनयेन सा ॥ १९२ ॥
अथ वेदितभावार्थे रत्युपाय विचिन्तयेत् ।
अथ विधिर्विधानज्ञै कार्य प्रच्छन्नकामिभि॰ ॥ १९३ ॥
विधि राजोपचारस्य पुनर्वक्ष्यामि तत्त्वत ।
अभ्यन्तरगत सम्यक् कामतन्त्रे समुपस्थितम् ॥ १९४ ॥
सुखद स्वकृतान् भावान् नानाशीलसमुत्थितान् ।
यान् यान् प्रकुरुते राजा तांस्ताल्लोका(को ?)ऽनुवर्तते ॥ १९५ ॥
न दुर्लभ॰ पार्थिवाना स्त्यर्थ(?)माज्ञाकृतो गुण ।
दाक्षिण्यात्तु समुद्भूत कामो रतिकरो भवेत् ॥ १९६ ॥
बहुमानेन देवाना वल्लभाना भयेन च ।
प्रच्छन्नकामिना राज्ञा कार्यं परिजन प्रति ॥ १९७ ॥
यद्यप्यस्ति नृपाणा तु कामतन्त्रमनेकधा ।
प्रच्छन्ने कामिन वक्तु तद्धि रमि(ति ?) कर भवेत् ॥ १९८ ॥
यद्वामामिनिवेशित्व यतश्चैव निवार्यते ।
दुर्लभत्व च यत्रार्या सा कामस्य रति परा ॥ १९९ ॥
राज्ञानन्त पुरजने दिवसा(स ?)भोग(?) इष्यते ।
वासोपचारो यश्चैव स रात्रौ परिकीर्तित ॥ २०० ॥
परिपाट्या फलार्थे वा न च प्रमद एव च ।
दु खे चैव प्रमादे च षडेते वासका स्मृता॰ ॥ २०१ ॥
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपै ।
वेश्यानामपि कर्तव्यमिष्टाना योगसर्पणम् ॥ २०२ ॥
तत्र वासकसज्ज्ञा वा विरहोत्कण्ठितापि वा ।
स्वाधीनपतिका वापि कलहान्तरितापि वा ॥ २०३ ॥

खण्डिता विप्रलब्धा या तथा प्रोषितभर्तृका।
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः॥ २०४॥
उचिते वासके या तु रतिसम्भोगलालसा।
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिता[1]॥ २०५॥
अनेककार्यव्यासङ्गाद् यस्या नागच्छति प्रियः[2]।
तस्यानुगमदुःखार्ता विरहोत्कण्ठिता मता॥ २०६॥
सुरतातिरसैर्बद्धो यस्याः पार्श्वगतः प्रियः।
सामोदे गुणसंयुक्ता भवेत्स्वाधीनभर्तृका॥ २०७॥
ईर्ष्याकलहविक्रान्तौ(तो) यस्या नागच्छति प्रियः।
आमर्षवेपसंतप्ता कलहान्तरिता भवेत्॥ २०८॥
व्यासङ्गादुचिते यस्या वासकेनाग(तः) प्रियः।
तदनागमनार्ता तु खण्डितेत्यभिधीयते॥ २०९॥
तस्माद्भूतां प्रियः प्राप्य गत्वा संकेतमेव वा।
नागतः कारणेनेह विप्रलब्धा तु सा मता॥ २१०॥
गुरुकार्यान्तरवशाद् यस्या विप्रोषितः प्रियः।
सा रूडा(ढा?)लककेशान्ता भवेत् प्रोषितभर्तृका॥ २११॥
हित्वा लज्जां समाकृष्टा मदेन मदनेन या।
अभिसारयते कान्तं सा भवेदभिसारिका॥ २१२॥
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रया [:]।
एतासां ये च (यच) वक्ष्यामि कामतन्त्रमनेकधा॥ २१३॥
चिन्तानिःश्वासखेदैश्च हृदयाभिनयेन च।
सखिना (?) संप्रलापैश्च आत्मावस्थावलोकनैः॥ २१४॥
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च।
निर्भूषणाङ्गी विमृजा दुःखेन रुदितेन च॥ २१५॥
खण्डिता विप्रलब्धा या कलहान्तरितापि या।

1. 'वासकन्नीसिता' ख. 2. 'प्रिया' इति का.

तथा प्रोषितकान्ता च भावैरेवं (व) प्रयोजयेत् ॥ २१६ ॥
विचित्रोज्ज्वलवेषा च प्रमोदोद्द्योतितानना ।
उदीर्णशोभातिशया कार्या स्वाधीनभर्तृका ॥ २१७ ॥
वेश्यायां कुलजा(टा)यां वा प्रेष्यायां वा प्रयोक्तृभिः ।
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ॥ २१८ ॥
सामदानादुपेष्टा ( ? ) च तथा परिजनावृता ।
नानाभरणचित्राङ्गी गच्छेद्वेश्याङ्गना शनैः ॥ २१९ ॥
संली वा (?) स्वेदगात्रेपु त्रस्ता विप्रेक्षितानना ।
अवगुण्ठनसंवीता गच्छेच्च कुलजाङ्गना ॥ २२० ॥
मदस्त्वमिनयालापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसंचारा गच्छेत्प्रेष्याङ्गनानया ॥ २२१ ॥
स्वादयं शेपितो (?) व्यक्तं पश्येत्सुतं प्रियंवदा ।
प्रिया ययोत्थापयति तथा वक्ष्याम्यहं पुनः ॥ २२२ ॥
अलंकारेण कुल्जा वेश्या गन्धैस्तु शीतलैः ।
प्रेष्या नु (तु ?) वस्त्रव्यजनैर्बोधये(त्) स्वायिनं प्रियम् ॥२२३॥
कुलाङ्गनानामेवायं प्रोक्तः कामाश्रयो विधिः ।
सर्वावस्थानुभावं तु यस्माद् भवति नाटकम् ॥ २२४ ॥
भयकामभयेता (?) या क्रुद्धा वा वामनागमे ।
सत्यादेशैरुपायैस्तु ना(वा?)सकं समकल्पयेत् ॥ २२५ ॥
नानालङ्कारमाल्या(ल्या)भिधूपगन्धाम्बराणि च ।
नित्यं सुखान्युदात्तानि सेवेत मदनान्वितः ॥ २२६ ॥
न तथा भवति विशेषो मदनवशः कामिनीमलभमानः ।
द्विगुणोपजातहर्षो भवति यथा सगत. प्रियया ॥ २२७ ॥
विलासभावेमङ्गम(?)वाक्यलीलाविशेषमाधुर्यगुणोपपन्नः ।
परस्परप्रेमनिरीक्ष (क्षि ?) तेन समागमः कामकृतस्तु कार्यः ॥२२८॥

१. 'सलीना' स. २. 'शपितो' ख. ३. 'सत्यादेशै' ख

ततः प्रवृत्ते मदने उपचारसमुद्भवे।
वासोपचारः कर्तव्यो नायकागमनं प्रति ॥ २२९ ॥
गन्धमाल्यं गृहीत्वा तु चूर्णद्वारस्तथैव च।
स्थापयेन्नायककृते कुर्याच्चात्मप्रसाधनम् ॥ २३० ॥
वासोपचारे नात्यर्थः (र्थं) भूषणग्रहणं भवेत्।
रसनानूपुरप्रायं स्तनवच्च प्रशस्यते ॥ २३१ ॥
नाम्बरग्रहणं रङ्गे नानुरङ्गे विलेपनम्।
नाञ्जनं नानुरागं च न च केशोपसंग्रहम् ॥ २३२ ॥
नानावृत्तानेकवस्त्रा न रागमधरस्य तु।
उत्तमा मध्यमा वापि प्रकुर्यात् प्रमदा क्वचित् ॥ २३३ ॥
अधमानां भवेदेवं विधिः प्रकृतिसंभवः।
तासामपि ह्यसभ्यं यत्तत्कार्यं प्रयोक्तृभिः ॥ २३४ ॥
प्रमदाभिर्नरैर्वापि नानाभावं तु नाय(ट ?)के।
भूषणग्रहणं कार्यं पुष्पाणां ग्रहणं तथा ॥ २३५ ॥
गृहीतमण्डना किंचित् प्रतीच्छेत प्रियागमम्।
लीलया मण्डनं शेषं कुर्याद् यत्र विरुध्यते ॥ २३६ ॥
वीक्ष्य (क्ष ?) माणा प्रियापत्यं (?) शृणुयान्नालिकाध्वनि [म्]।
श्रुत्वा तु नालिकानादं नायकागमविक्लवा।
वेपन्ती (?) त्रस्तहृदया तोरणाभिमुखी व्रजेत् ॥ २३७ ॥
वामेन तोरणं आद्यं कवाटं दक्षिणेन तु।
हस्तेन संमुखीभूय उदीक्षेत प्रियागमम् ॥ २३८ ॥
वेमां(?) शङ्कां भये चैव कुर्यात्तोरणसंस्थितम्।
अइन्द्रारमणं (?) सूर्यविपर्स्तां (?) तु क्षणे भवेत् ॥ २३९ ॥
दीर्घं चैव विनिःश्वस्य नयनाम्बु निपातयेत्।
सत्र (त्र ?) च हृदयं कृत्वा विसृजेदङ्गमासने ॥ २४० ॥

१. '°चारो' ख. २. 'नानावृता' ख. ३. 'मण्डने' ग.

व्याक्षेप्याद्विमृशेचापि नायकागमनं प्रति ।
तैस्तैर्विचारणैश्चापि शुभाशुभसमुत्थितैः ॥ २४१ ॥
गुरुकार्येण मित्रैर्वा (मन्त्रैर्वा ?) मन्त्रिणां राज्यचिन्तया ।
अनुबद्धः प्रियः किंतु धृतो वल्लभयापि वा ॥ २४२ ॥
उत्पातान्निर्दिशेच्चैव शुभाशुभसमुत्थितान् ।
निमित्तै राज्यसंस्थैस्तु स्फुरितैर्भेदितैस्तथा ॥ २४३ ॥
शोभनेषु तु कार्येषु निमित्तं वा मतः प्रिया (यम्) ।
दुरुक्तेषु कार्येषु निमित्तं दक्षिणं भवेत् ॥ २४४ ॥
सव्यं नेत्रं ललाटं भ्रूरधरोष्ठस्तथैव च ।
ऊरुर्बाहुः स्तनश्चैव स्फुरेद् यदि समागमम् (:) ॥ २४५ ॥
अतोऽन्यथा स्पन्दथाने दुरितं दक्षिणे भवेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत् क्षणं ततः ॥ २४६ ॥
अप्राप्तेऽथैव कर्तव्यः (?) प्रिये गण्डार्पितं (त:) करः ।
भूषणे चाप्यवज्ञानं रोदनं च समाचरेत् ॥ २४७ ॥
ततश्च शोभनं पश्यन्निमित्तं वै प्रियागमे ।
सूच्यो नायिकयासन्नो गत्वा प्राणेन नायकः ॥ २४८ ॥
दृष्ट्वा चोत्थाय हृष्टाङ्गी प्रत्युद्गच्छेद्धि नायकम् ।
यदि स्यादपराद्धस्तु ततस्तैस्तैरुपक्रमैः ॥ २४९ ॥
उपालम्भकृतैर्वाक्यैरभिभाष्यस्तु नायकः ।
मानापमानसंमोहैरवहित्थैर्यथाक्रमम् ॥ २५० ॥
वचनस्य समुत्पत्तिः स्त्रीणां गाथाकृता भवेत् ।
विश्रम्भस्नेहरागेषु संदेहे प्रणये तथा ॥ २५१ ॥
परितोषे च हर्षे च दाक्षिण्याक्षेपसान्त्वने ।
धर्मार्थकामयोगेषु प्रच्छन्नवचनेषु च ॥ २५२ ॥
हास्ये कुतूहले चैव संभ्रमव्यसने तथा ।
हास्योपस्थानसंप्राप्तौ दोषोपक्षेपनिह्नवे ॥ २५३ ॥

अनाभाष्योऽपि संभाष्यः प्रियेयेतिस्तु (तु) कारणैः ।
यत्र स्नेहो भयं तत्र यत्रेर्ष्यति च मन्मथः ॥ २५४ ॥
चतस्रो योनयस्तस्याः कीर्त्यमाना न (नि ?)बोधत ।
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च ॥ २५५ ॥
एतेषां च समुत्पत्तिः प्रयोगं च निबोधत ।
निद्राखेदालसगतिं सचिह्नं सरसव्रणम् ॥ २५६ ॥
एवंविधं प्रियं दृष्ट्वा वैमनस्यं भवेत् स्त्रियाः ।
तीव्रा सूचितवचनाद् रोषा (द्) बहुशः प्रकम्पमानोष्ठी
साध्विति सुष्ठिति वाक्यैः शोभनमित्यभिनयं युञ्ज्यात् ॥ २५७ ॥
बहुशो वार्यमाणोऽपि प्रत्यस्मिन्नेव इष्यते ।
सहर्षाचत्र मात्सर्याद् व्यलीकं तु भवेत् स्त्रियाः ॥ २५८ ॥
कृत्वोरसि वामकरं दक्षिणहस्तं रुषा विधुन्वाना ।
चरणविनिक्षेपणरसित्न कुर्वीत साभिनयम् (?) ॥ २५९ ॥
जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं च मे प्रिया ।
उक्त्वैवं योऽन्यथा कुर्यात् तद्विप्रियमिति स्त्रियाः ॥ २६० ॥
दूतीलेखप्रतिवचनभेदनक्रोधहसितरुदिते च ।
विप्रियकरणेऽभिनयः सशिरःकम्पः प्रयोक्तव्यः ॥ २६१ ॥
प्रतिपक्षविकाशात्तु यः सौभाग्यविकत्थनः ।
उपसर्पेत्सुचिह्नस्य पर्युत्सत्र भवेत् स्त्रियाः ॥ २६२ ॥
वलयपरिवर्तनेन च सशिथिलमुपक्षेपणेन रसनयोः ।
मेधुरभिनेतव्यः (?) सशङ्कितं चास्य मोक्षेऽस्य ॥ २६३ ॥
दृष्ट्वा स्थितं प्रियतमं साशङ्कं सापराधमतिलज्जम् ।
ईर्ष्यावचनसमुत्थैः खेदयितव्यो ह्युपालम्भैः ॥ २६४ ॥
न च निष्ठुरमतिभाष्यो न चास्य (त्य ?) तिक्रोधनस्तु परिहार्यः ।
बाष्पोन्मिश्रैर्वचनैरात्मोपन्याससंयुक्तैः ॥ २६५ ॥

---

१. 'मन्युः' इति भवेत् । २. 'मन्युरभिनेतव्य.' इति भवेत् ।

मध्याङ्गुल्योष्ठाग्रविप्पवात् (?) पाणिना ह्युरःस्थेन ।
उद्वर्तितनेत्रभावैरभिवीक्षणैश्चापि ॥ २६६ ॥
कटिहस्तनिविष्टस्य विच्छिन्नतया तथाङ्गुलैः करणात् ।
मूर्धभ्रमणनिकुञ्चितनखादिसंदर्शनाच्चापि ॥ २६७ ॥
अवहित्थवीक्षणेन च सोङ्गुलिभङ्गेन वर्जनैर्ललितैः ।
एभिर्भावविशेषैरस्याभिनयः प्रयोक्तव्यः ॥ २६८ ॥
शोभसे साधु दृष्टोऽसि गच्छ त्वं किं विलम्बसे ।
मा मां स्प्राक्षीः प्रियां याहि तव या हृदि संस्थिता ॥ २६९ ॥
गच्छेत्युक्त्वा परावृत्त्ये(त्य ?) विनिवृत्तोत्तरेण तु ।
केनचिद् व्यसनार्थेन प्रहर्षे योजयेत् पुनः ॥ २७० ॥
रभसग्रहणाच्चापि वस्त्रे हस्तेऽथ मूर्धनि ।
कार्यं प्रणमनं न (ना)र्या ह्यपराधं समीक्ष्य तु ॥ २७१ ॥
हस्ते वस्त्रेऽथ केशान्ते नार्याप्यथ गृहीतया ।
कान्तमेवोपसर्पन्त्या कर्तव्यं मोक्षणं शनैः ॥ २७२ ॥
गृहीतयाथ केशान्ते हस्ते वस्त्रेऽथवा पुनः ।
यथा प्रियो न पश्येद्धि स्पर्शो माद्यस्तथा स्त्रिया ॥ २७३ ॥
पादाग्रस्थितया नार्या तथैवाकुञ्चिताङ्गया ।
अथ कान्तेन कर्तव्यं केशाना मोक्षणं शनैः ॥ २७४ ॥
विमुच्यमाने केशान्ते संजातस्वेदलेशया ।
हुं हुं मुञ्चापसर्पेति वासःस्पर्शोल्लसाङ्गया ॥ २७५ ॥
गच्छेति रोषवाक्येन गत्वात्र विनिवृत्य च ।

१. 'मूर्धभ्रमणनिदृयन विदल- संदर्शनायापि ।' मु. २. 'अवहित्थवीक्षणैरप्यङ्गुलिभङ्गैश्च' का. ३. 'एभिर्भवविशेषैरन्यैर्वतैरस्याभिनयः कार्यः ।' मु. ४. 'शोभने' का. ५. 'दृष्टोऽसि'. ६. 'कस्माद्विलम्बसे' मु. ७. 'प्रिया य‥‥‥यत्र' मु. ८. 'पादयोश्च प्रनयः प्रतिनिलय च' मु. ९. 'वचनार्थेन प्रहर्षे संप्रयोज' मु. १०. वचनार्थेन येद्' मु प्रहर्षे संयोजयेद् मु. ११. 'हस्ते वस्त्रे च मूर्धनि' मु. १२. 'कार्यं प्रणामनं नार्या अपराधं समीक्ष्य च' मु. १३. 'अमुच्यमाने' का. १४. 'ऊं ऊं' का. १५. 'वाक्यैः' का. १६. 'प्रतिनिवृत्य च' का.

केनचिद्वचनार्थेन स्त्रीलापं संप्रयोजयेत् ॥ २७६ ॥
विधूननेन हस्तस्य हुंकारं संप्रयोजयेत् ।
स चावधूनने कार्यः शपथे व्याज एव च ॥ २७७ ॥
अक्ष्णोः संवरणं कार्यं मृष्टतल्पोपगूहनम् ।
नार्यास्त्वपह्नुते वस्त्रे दीपच्छादनमेव च ॥ २७८
तादृशे दयितव्येस्तु(तु)ययेत् (यावत्) पादगतो भवेत् ।
ततश्चतुर(रण ?)योः पाते कुर्याद्दूतीनिरीक्षणम् ॥ २७९ ॥
स्पर्शस्य ग्रहणं कृत्वा नायिका नायकं ततः ।
उत्थाप्य विधिना हृष्टा शयनाभिमुखी भवेत् ॥ २८० ॥
एतद्गीतविधानेन सुकुमारेण योजयेत् ।
यदा शृङ्गाररसंयुक्तरतिसंभोगकारणम् ॥ २८१ ॥
यदा चकाशं पुरुषं(?) परस्ववचनाशयम् ।
नयेत्कार्ये तदाप्येष तथाद्येष(?) कर्तव्योऽभिनयः स्त्रियाः ॥२८२॥
यदन्तःपुरसंबद्धं कार्यं नाटकसंश्रयः ।
शृङ्गाररससंयुक्तं तदाप्येष विधिर्भवेत् ॥ २८३ ॥
न कार्यं शयनं रङ्गे नाट्यधर्मं विजानता ।
केनचिद्वचनार्थेन छेदमत्रं प्रयोजयेत् ॥ २८४ ॥
यदा स्वपेदर्थवशादेकाकी सहितोऽपि वा ।
चुम्बनालिङ्गनादीनि रङ्गमध्ये न कारयेत् ॥ २८५ ॥

१. 'चालाप योजयेत् पुमान्' का. २. 'विधूनन च' का. ३. 'स्त्री प्रयोजयेत्' का. ४. 'शपथैर्वाच्य एव च' का. ५. 'शृष्टतल्पोपगूहनम्' का. ६. 'नीवीच्छादनमेव च' का. ७. 'तावत्स्वेदयितव्यस्तु यावत्पादहतो भवेत्' का. ८. 'ततश्चरणयोः' का. ९. 'तयाप्यालिङ्गयेदेनं' का. १०. 'उत्थाय' क. 'रतिभोगहता भृङ्गा' का. ११. '°संयुक्तो' का. १२. 'सयोग' का. १३. 'काशपुरुषं' का. १४. 'भवेत्कार्यं' का. १५–१६. 'प्येष' इति भवेत्. १७. 'संबन्धं' का. १८. 'कार्यं भवति नाटके' का. १९. 'तत्राप्येष' का. २०. 'रङ्गे' का., 'रङ्गैः' मु. २१. 'अङ्गच्छेदो' का. २२. 'न विश्वसेदविश्वस्तम्' इतिवदयाकथंचित्साधु. २३. 'चुम्बनालिङ्गनं चैव तथा गुह्यं च यद्भवेत्' का.

दन्तं नखक्षतं छेद्यं नीवीश्रं(स्रं)सनमेव च ।
स्तनाधरविमर्दं च रङ्गमध्ये न कारयेत् ॥ २८६ ॥
भोजनं सलिलक्रीडां तथा न(ल)ज्जाकरं तु यत् ।
एवंविधं भवेद्यद्यत्तद्रङ्गे न कारयेत् ॥ २८७ ॥
पितृपुत्रस्नुषाश्वश्रूदृश्यं यस्मात्तु नाटकम् ।
तस्मादेतानि सर्वाणि वर्जनीयानि यत्नतः ॥ २८८ ॥
वाक्यैः सातिशयैर्हृद्यैर्मधुरैर्न तु निष्ठुरैः ।
हितोपदेशसंयुक्तैः प्राज्ञः कुर्वीत नाटकम् ॥ २८९ ॥
ऐवमन्तःपुरगतः कार्यस्त्वभिनयो बुधैः ।
समागमेऽथ नारीणां वाच्यानि मदनाश्रये ॥ २९० ॥
प्रियेषु वचनानीह यानि तानि निबोधत ।
प्रियः कान्तो विनीतश्च नाथः स्वाम्यथ जीवितम् (त) ॥ २९१ ॥
नन्दनश्चेत्यभिजनि(?)वर्चनानि भवन्ति हि ।
दुःशीलोऽथ दुराचारः शठो वामो विकत्थनः ।
निर्लज्जो निष्ठुरश्चेति प्रियं क्रोधेऽभिनिर्दिशेत् ॥ २९२ ॥
यो विप्रियं न कुरुते नार्नां(न चा ?)युक्तं प्रभाषते ।
तथार्जवसमाचारः प्रिय इत्यभिधीयते ॥ २९३ ॥
अन्यनारीसमुद्भूतं चिह्नं यत्र प्रदृश्यते ।
अधरे वा शरीरे वा स कान्त इति भाष्यते ॥ २९४ ॥
संक्रुद्धो(ष्टो)ऽपि हि यो नार्या नोत्तरं प्रतिपद्यते ।
परुषं वा न वदति विनीतः सोऽभिधीयते ॥ २९५ ॥

---

१. 'भाव्ये' का. २. 'नातिनिष्ठुरै.' का. ३. '°जनने' का. ४. 'तज्ज्ञे. कार्यं तु नाटकम्' का. ५ एतत्पद्यार्धं का-पुस्तके नास्ति. ६. 'जीवितम्' का. ७. '°त्वभिप्रेतो' का. ८. 'वेदनानि' रा. ९. 'विरूपक' का. १०. 'अथ. क्रोधेऽभिधीयते' का. ११. 'नचायुक्तं' का. १२. 'प्रिय इत्युच्यते बुधै' का. १३. 'यस्य न दृश्यते' का. १४. 'भाष्यते' क. 'भण्यते' का. १५. 'नोत्तरोत्तरमायतम्' का.

हितैषी[1] रक्षणे[2]स्तु(श ?)क्तो न मानी न च मत्सरी।
सर्वकार्येष्वसंमूढः स[3] नाथ इति संज्ञितः॥ २९६॥
सामदानार्थसंभोगैस्तथा लालनपालनैः।
नारीं[4] निषेवते यस्तु स स्वामीत्यभिधीयते॥ २९७॥
नारीस्थितै[5]रभिप्रायैर्निपुणं शयनक्रियाम्।
करोति यस्तु संभोगैः[6] स जीवित[7] इति स्मृतः॥ २९८॥
कुलीनो धृतिर्मान्[8]दक्षो दक्षिणो वाग्विशारदः[9]।
श्लाघनीयः सखीमध्ये नन्दनः[10] सोऽभिधीयते॥ २९९॥
एते वचनविन्यासा रति[11]प्रीतिकराः स्मृताः।
तथा चाप्रीति[12]वाक्यानि गदतो मे निबोधत॥ ३००॥
निष्ठुरश्चासहिष्णुश्च[13] मानी धृष्टो विकत्थनः।
अनवस्थितचित्तश्च[14] दुःशील इति कथ्यते[15]॥ ३०१॥
ताडनं बन्धनं चापि यो विमृश्य समाचरेत्।
तथा परुषवाक्यश्च दुराचारः स उच्यते[16]॥ ३०२॥
वाचैव मधुरो यस्तु कर्मणा नोपपादयेत्।
योषितां[17] कंचिदप्यर्थं स शठः परिकीर्तितः॥ ३०३॥
वार्यते यत्र यत्रार्थे तं तमेव करोति यः।
विपरीतनिषेवी[18] च स च वाम इति स्मृतः॥ ३०४॥
सरसव्रणचिह्नो यः स्त्रीसौभाग्यविकत्थनः।
अभिमानी तथा स्तब्धो[19] विकत्थन इति स्मृतः॥ ३०५॥

---

१. 'हितैषी' इत्यादिपद्यं स्वामिलक्षणत्वेन 'सामदानार्थ' इत्यादिपद्यस्याग्रे वर्तते का-पुस्तके. २. 'शक्तो' का. ३. 'यः स स्वामीति कीर्तितः' का. ४. 'नारीं संभजते यस्तु सनाथ इति संज्ञित.।' का. ५. 'नारीप्सितैः' का. ६. 'सभोगे' का. ७. 'जीवितः सोऽभिसंज्ञितः' का. ८. 'नीतिमान्' का. ९. 'वा विशारदः'. १०. 'नन्दनो नाम संज्ञित.' का. ११. 'रतिस्मृतिकराः' का. १२. 'च प्रीतिवाक्यानि(?)' का. १३. 'चा सहिष्णुर्यो' का. १४. 'उत्तरोत्तरमानी च' का. १५. 'स्मृत.' का. १६. 'संज्ञितः' का. १७. 'योषितं' का. १८. 'भवेदभिनिषेवी च स' का. १९. 'स्तब्धः स विरूप इति स्मृतः' का.

वार्यमाणो दृढतरं यो नारीमुपसर्पति ।
सचिह्नः सापराधश्च स निर्लज्ज इति स्मृतः ॥ ३०६ ॥
सापराधस्तु रभसा नारीं सेवितुमिच्छति ।
अप्रसादनबुद्धिश्च निष्ठुरः सोऽभिधीयते ॥ ३०७ ॥
एते वचनविन्यासाः प्रियाप्रियविभाविताः ।
नर्तकीसंश्रिताः कार्या बहवोऽन्येऽपि नाटके ॥ ३०८ ॥
एष गीतिविधानेन सुकुमारविधिर्भवेत् ।
शृङ्गाररससंभूतो रतिसंभोगखेदजम् ॥ ३०९ ॥
यश्चैवाकाशपुरुषपरस्ववचनाश्रयम् ।
शृङ्गार एवमेवं स्याचत्राप्येष क्रमो भवेत् ॥ ३१० ॥
यद्वा पुरुषसंबद्धं काव्यं भवति नाटकम् ।
शृङ्गाररससंयुक्तं तत्राप्येष विधिर्भवेत् ॥ ३११ ॥
एवमन्तःपुरगतं(गतः) प्रयोज्योऽभिनयो बुधैः ।
दिव्याङ्गनानां तु विधिं व्याख्यास्याम्यनुपूर्वशः ॥ ३१२ ॥
नित्यमेवोज्ज्वलो वेषो नित्यं प्रमुदितं मनः ।
सुखकालः सदा नित्यं देवीनां ललिताश्रयः ॥ ३१३ ॥
ईर्ष्या लिप्सा न च क्रोधो नासूया न प्रसादनम् ।
ईर्ष्यते देवपुंसा हि शृङ्गारे योषितां(तं) प्रति ॥ ३१४ ॥
यदा मानुषसंयोगो दिव्यानां योषितां भवेत् ।
सर्वे एव तदा कार्या भावा मानुषसंश्रयाः ॥ ३१५ ॥

---

१. 'अभिसर्पति' का. २. 'स विलज्ज इति संज्ञित.' का. ३. 'विभूषिता.' का. ४. 'नानावस्थां समासाद्य विपरीतान् समाचरेत्' का. ५. 'गीतविधाने तु' का. ६. 'सुकुमारो विधिर्भवेत्' का. ७. 'शृङ्गारे' ख. 'शृङ्गाररस–'इत्यादिपद्यद्वयं का. पुस्तके नास्ति. ८. 'शृङ्गाररसवाच्य. स्यात्' का. ९. 'एवमन्त.पुरगते प्रयोज्याभिनयो' मु. १०. 'नित्यमेव सुख' काल.' का. ११. 'न चेर्ष्यानैव च क्रोधो' का. १२. 'प्रसादनम्' का. १३. 'ईर्ष्यते' मु. १४. 'तदा सर्वे प्रकर्तव्या ये भावा मानुषाश्रयाः ।' का.

शापभ्रंशात्तु दिव्यानामङ्गनानां यदा भवेत् ।
मानुषैः सह संयोगस्तद्देवमुपसर्पणम् ॥ ३१६ ॥
पुष्पैर्भूषणजैः शब्दैरदृश्यो विपुलो(ला ?) भवेत् ।
पुनः संदर्शनं दत्त्वा क्षणादन्तर्हिता भवेत् ॥ ३१७ ॥
वस्त्राभरणमाल्यैस्तु लेखसंप्रेक्षणैरपि ।
ईदृशैरभ्युपगमैः समुन्मादस्तु नाटकः(के ?) ॥ ३१८ ॥
उन्मादनात्समुत्पन्नः कामो रतिकरो भवेत् ।
स्वभावोपगतो यस्तु नानारत्यर्थभावकः ॥ ३१९ ॥
ये भावा मानुषाणां स्युः स्वजनं यच्च चेष्टितम् ।
तत्सर्वं मानुषात्प्राप्य कर्तव्यं दैवतैरपि ॥ ३२० ॥
एवं राजोपचारो हि कर्तव्यो ह्यन्तराश्रयः ।
बाह्यमप्युपचारं च व्याख्यास्याम्यथ कै(वै)शिकैः ॥ ३२१ ॥
इति भारतीये नाट्यशास्त्रे सामान्याभिनयो नामाध्यायो द्वाविंशतितमः ।

---

त्रयोविंशोऽध्यायः ।

विशेषयेत् कलाः सर्वा यस्मात्तस्मात्तु वैशिकः ।
वेश्योपचरणाद्वापि वैशिकः स उदाहृतः ॥ १ ॥
यो हि सर्वकलोपेतः सर्वशिल्पविचक्षणः ।
स्त्रीचित्तग्राहकश्चैव वैशिकः स भवेत् पुमान् ॥ २ ॥
गुणास्तस्य तु विज्ञेयाः स्वशरीरसमुद्भवाः ।
आहार्याः सहजाश्चैव त्रयस्त्रिंशत्समासतः ॥ ३ ॥
शास्त्रविच्छिल्पसंपन्नो रूपवान् प्रियदर्शनः ।

---

१. 'शापाद्भ्रंशस्तु' का. २. 'कार्यो मानुषसंयोगस्तथा चैवोपसर्पणम्' का. ३. 'अदृश्याश्चापि' का. ४. 'नाटके' का. ५. 'तु तद्गतं' का. ६. 'तत्सर्वं मानुषं प्राप्य कार्यं दिव्यैरपि द्विजा ।' का. ७. 'तु' का. ८. 'वैशिके' का. ९. 'नाम चतुर्विंशोऽध्यायः ।' का. १०. 'के(वै ?)शिके' इति क. ११. 'वेश्योपचारतो वापि वैशिकः परिकीर्तितः' इति ख. १२. 'वसुतैर्यकलोपेतः' का. १३. 'सर्वशिल्पप्रयोजकः' इति क. १४. 'शीलसंपन्न.' इति क.

विक्रान्तो धृति[1]मांश्चैव वयोवेषै[2]गुणान्वितः ॥ ४ ॥
सुरभिर्मधुरस्त्यागी सहिष्णुरविकत्थनः ।
[3]अशङ्कितः प्रियाभाषी चतुरः सुभगः शुचिः ॥ ५ ॥
कामोपचारकुशलो दक्षिणो देशकालवित् ।
[4]अदीनवाक्यः स्मितवाग् वाग्मी [5]दक्षः प्रियंवदः ॥ ६ ॥
अलुब्धः संविभागी च श्रद्दधानो [6]दृढव्रतः ।
गम्यासु चाप्यविस्रम्भी मानी [7]चेति स वैशिकः ॥ ७ ॥
अनुरक्तः शुचि[8]र्दान्तो दक्षिणः प्रतिपत्तिमान् ।
भवेच्छिद्राभिशा(धा ?)यी च [9]वयस्यास्तस्य [10]षड्गुणाः ॥ ८ ॥
प्रतिवेश्या सखी दासी कुमारी [11]कारुशिल्पिका ।
धात्री पाखण्डिनी चैव दूत्यस्त्वी[12]क्षणिका तथा ॥ ९ ॥
[13]न जडं रूपवन्तं च नार्थवन्तं न चातुरम् ।
दूतं वापि हि दूतीं वा बुधः कुर्यात् कदाचन ॥ १० ॥
[14]प्रोत्साहनेषु कुशला मधुरकथा दक्षिणा च कालज्ञा ।
स्फुटहा संवृतमन्त्रा दूतीत्येभिर्गुणैः कार्या ॥ ११ ॥
तथा प्रोत्साहनं कार्यं नानादर्शनकारणम् ।
यथोक्तकथनं चैव तथा भावप्रदर्शनम् ॥ १२ ॥
कुलभोगधनाधिक्यं कार्यं चैव विकत्थनम् ।

---

१. 'धृतिमांश्चैव' इति क. २. 'कुलान्वितः' इति क. ३. 'अशङ्कितः' क. ४. 'अदीनवाक्यः' का. मु. ५. 'वशः' क. ६. 'दृढः स्मृतः' इति क. ७. 'चैव हि' क. ८. 'दक्षो' क. ९. 'च्छिद्राविघाती च' क. १०. 'प(व ?)यस्यस्य गुणा मताः' क. ११. 'कारुशिल्पिनी' का. १२. 'त्वीक्षणिकास्तथा' क.

१३. 'मृजारूपवयो येन मयावन्तं (?) जडं तथा ।
दूतं दूतीं वा......न कुर्याद्वैशिकाश्रये ॥' इति क.

१४. क-पुस्तके तु—
'प्रोत्साहनेषु कुशलो मधुरकथो दक्षिणो च कालज्ञाम् ।
स्फुटहो संवृतमन्त्रो......कृतामेवंविधां कुर्यात् ॥'

१५. 'अनुरागानुकीर्तनम्' इति क.

दूतीनिवेदनं कार्यमर्थानां चैव भाषणम् ॥ १३ ॥
न च कामप्रवृत्तायाः क्रुद्धाया वा समागमः ।
नानोपायैः प्रकर्तव्यो दूत्या हि पुरुषाश्रयः ॥ १४ ॥
उत्सवे रात्रिसंचारे उद्याने ज्ञातिवेश्मनि ।
धात्रीगृहे सखीगेहे तथा चैव निमन्त्रणे ॥ १५ ॥
व्याधितव्यपदेशेन शून्यागारसमाश्रये ।
एवं समागमः कार्यो नृणां प्रथमसंगमे ॥ १६ ॥
एवं समागमं कृत्वा नानोपायविधानजम् ।
स्वभावभावातिशयैर्या नारी मदनार्दिता ॥ १७ ॥
करोत्यनिभृतं लीलां ज्ञेया सा मदनातुरा ।
गुणाः(णान् ?) सखीनामाख्याति स्वधनं प्रददाति च ॥ १८ ॥
संपूजयति मित्राणि द्वेष्टि शत्रुजनं तथा ।
समागमं प्रार्थयते दृष्टा हृष्यति चाधिकम् ॥ १९ ॥
तुष्यत्यस्य कथाभिश्च सस्नेहं च निरीक्षते ।
सुप्ते च पश्चात् स्वपिति प्रथमं प्रतिबुध्यते ।
परिक्लेशांश्च सहते चुम्बिता प्रतिचुम्बति ॥ २० ॥
समा दुःखे सुखे च स्यात्क्रोधमुपयाति च ।
एवंविधैर्गुणैर्युक्ता यानुरक्ता तु सा भवेत् ॥ २१ ॥

---

१. 'निवेदयेत्' का. २. 'नवकामप्रवृत्ताया.' क. ३. 'दूत्याभिपुरुषाश्रये' क. ४. 'धात्रीक्षये' क. ५. 'सूच्यागारनिवेशने' इति क. ६. 'कार्य. समागमो नृणामेव प्रथमसंगमे ।' क. ७. 'एवं स संगमं कृत्वा' क. ८. 'मदनातुरा' क. ९. 'गुणान् सखीमुखदले' क. १०. 'पूजयन्नपि मित्राणि शत्रुपक्षं च निन्दति' क. ११. 'दृष्टं चैव हि हृष्यति' क. १२. 'तुष्यन् यस्य कथाभिस्तु सस्नेहं च निरीक्षिते ॥' का. १३. काशीमुद्रितपुस्तके तु—

'सुप्ते च पश्चात् स्वपिति चुम्बिता प्रतिचुम्बति ।
उत्तिष्ठत्यपि पूर्वं च तथा क्लेशसहापि वा ॥'

१४. 'तत्क्रोधमुपयाति च' क. १५. 'रक्ता ज्ञेया हि पे(वे ?)शिकी' क.

विरक्तायास्तु लिङ्गानि चुम्बितास्यं प्रमार्जति ।
अनिष्टा च कथा ब्रूते प्रियमुक्तापि कुप्यति ॥ २२ ॥
मित्राणि चास्य प्रद्वेष्टि शत्रुपक्षं प्रशंसति ।
शेते पराङ्मुखी चैव शय्यायां पूर्वशायिनी ॥ २३ ॥
सुमहत्युपचारेऽपि न तुष्यति कथंचन ।
न क्लेशं सहते चापि तथा कुप्यत्यकारणे ॥ २४ ॥
[ न च चक्षुर्ददात्यस्य न चैनमभिनन्दति ।]
यस्मा(या स्या?)देवंप्रकारा तु विरक्तां तां विनिर्दिशेत् ॥ २५ ॥
हृदयग्रहणानि स्युर्व्यापारस्य विचेष्टितम् ।
अर्थप्रदर्शनं चैव तथा सद्भावदर्शनम् ॥ २६ ॥
अर्थोपन्यास एवं स्यादुपन्यासस्तथैव हि ।
व्याधितो यः परित्यागो भावोपक्षेप एव च ॥ २७ ॥
दारिद्र्याद्व्याधितो दुःखात् पारुष्यादश्रुतात् तथा ।
प्रवासगमनोन्मादादतिलोभादतिक्रमात् ॥ २८ ॥
अतीवाभिगमाच्चैव तथा विप्रियसेवनात् ।
एभिः स्त्री पुरुषो वापि कारणैस्तु विरज्यते ।
भावग्राहीणि नारीणां कार्याणि मदनाश्रये ॥ २९ ॥
येन कुप्यति वा नारी शुद्धा वापि प्रसीदति ।
लुब्धामर्थप्रदानेन कलाज्ञानेन पण्डिताम् ॥ ३० ॥
चतुरां चैव चातुर्यैरनुवृत्त्या तु भामिनीम् ।

१ 'प्रमार्ष्टि हि' फा. २. 'करोत्यनिष्टां च कथां' फ. ३. 'प्रद्वेष्टि चास्य मित्राणि तस्य शत्रु प्रशंसति ।' फा. मु ४. 'शय्यायां पूर्वशायिनी' फा. ५ 'उपकारेऽपि' फ. ६ 'अकारणात्' फ. ७. एतदर्धं फा. मु पुस्तके न । ८. 'व्यापार॰ चेष्टितम्' मु. ९. 'च' मु. १०. 'एवं' फा. ११. 'अर्थदानं तथैव च' फा. १२ 'व्याधिताना' फा. १३. 'व्याधितो' फा. १४. '॰गमनान्मानाद' फा. १५. 'अतिवेगगमनाच्च' फा. १६. 'या न च प्रीयते नारी प्रसूयते पुनरेव' फा. १७. 'वीरजनेन' फा. १८. 'मानिनीम्' फा. १९. श्लोकोऽयं 'भूयसमदनाचापि परस्पुरुषगो भवेत् ।' इत्यधिकम् फा. पुस्तके ।

पुरुषद्वेषिणीमिष्टैः कथायोगै[1]रुपक्रमेत् ॥ ३१ ॥
बाला[2] तामपि क्रीडन् वै भीरुमाश्वासवाचु ( चाटु ? )भिः ।
[3][ गर्वितां नीचसेवाभि- ] रुदाचां शिल्पदर्शनैः ॥ ३२ ॥
सर्वासामेव नारीणां त्रिविधा प्रकृतिः स्मृता[4] ।
उत्तमा मध्यमा चैवं[5] तृतीया चाधमा स्मृता ॥ ३३ ॥
या विप्रियेऽपि निष्टम्भं न वदत्यप्रियं प्रियम्[6] ।
न[7] चिरं क्रोधमायाति दोषान् प्रच्छादयत्यपि ॥ ३४ ॥
काम्यते पुरुषैर्या तु कुलशोभा[8]धनाधिकैः ।
कुशला कामतन्त्रेषु दक्षिणा रूपधारिणी[9] ॥ ३५ ॥
गृह्णाति कारणाद् रोषं गतेर्ष्या[10] प्रब्रवीति च ।
कार्यकालविशेषज्ञा सुभगा सा स्मृतोत्तमा ॥ ३६ ॥
पुंसः कामयते या तु पुरुषैर्या तु काम्यते ।
कामोपचारकुशला प्रतिपक्षाभ्यसूयिनी[11] ॥ ३७ ॥
ईर्ष्यातुरा वा[12] ( चा ? ) निभृता क्षणक्रोधा च[13] गर्विता ।
क्षणं[14] प्रसाद्यते या च सा नारी मध्यमा स्मृता ॥ ३८ ॥
अस्थाने कोपमा[15]याति दुःशीला चातिमानिनी ।
परुषा[16] प्रतिकूला च दीर्घरोषाधमा स्मृता ॥ ३९ ॥
सर्वासां नारीणां यौवनलाभा भवन्ति[17] चत्वारः ।
नेपथ्यरूपवेषै[18]र्गुणैस्तु शृङ्गारमासाद्य ॥ ४० ॥

---

१. 'चेष्टकयाभि. परिसान्त्वयेत् ।' का. २. 'उपक्रीडनकैर्बाला सीतामाश्वासनेन च ।' का. ३. क-ख. पुस्तकयो पाठस्त्रुटितः । ४. 'मता' का. ५. 'नीचा वेश्यानां तु निबोधत ।' का. ६. 'त्वप्रियप्रियम्' का. ७. 'अदीर्घरोषा च तथा कलाशिल्पविचक्षणा ।' का. ८. 'कुलभोगधनादिके' का. ९. 'रूपशालिनी' का. १०. 'गतेऽप्यपि (?) प्रवीति च' क-ख. 'गतेर्ष्या प्रनवीति च' का. ११. 'भ्यसूयिका' का. १२. 'चानिभृता' का. १३. 'क्षणक्रोधाभिगर्विता' का. १४. 'क्षणप्रसादा या नारी' का. १५. 'कोपना या तु' का. १६. 'चपला परुषा चैव' का. १७. 'यौवनलीलाश्रतस. स्युः' का. १८. '°चेष्टागुणैस्तु' का.

पीनोरुगण्डजघनस्तनाधरं कर्कशं रतिमनोज्ञम् ।
सुरतं प्रति सोत्साहं प्रथमं तद् यौवनं विद्यात् ॥ ४१ ॥
गात्रे पूर्णावयवं पीनौ [ चै ? ] पयोधरौ नतं मध्यम् ।
कामस्य भा ( सा ? ) रभूतं यौवनमेतद् द्वितीयं तु ॥ ४२ ॥
सर्वश्रीसंपूर्णं रतिकरमुन्मादनं बहुगुणाढ्यम् ।
कामार्योर्पितशोभं यौवनमेतत्तृतीयं तु ॥ ४३ ॥
नवयौवने व्यतीते तदा ( था ? ) द्वितीये तृतीयके चापि ।
शृङ्गारशत्रुभूतं यौवनमेतच्चतुर्थं तु ॥ ४४ ॥
निर्मांसगण्डजघनाधरस्तनं शुष्कलम्बितकपोलम् ।
कामे च निरुत्साहं यौवनमेतच्चतुर्थं तु ॥ ४५ ॥
नात्यर्थं क्लेशसहा नैव कुप्यति न हृष्यति प्रतिस्त्रीषु ।
सौख्यं ( ख्य ? ) गुणेष्वासक्ता नारी नवयौवना ज्ञेया ॥ ४६ ॥
किंचित् करोति मानं किंचित् क्रोधं च मत्सरं चैव ।
क्रोधे च भवति तूष्णीं यौवनभेदे द्वितीये तु ॥ ४७ ॥
रतिसंभोगे दक्षा [ प्रतिपक्ष- ] सूयिका गुणाढ्या च ।
अनिभृतगर्वितचेष्टा नारी ज्ञेया तृतीये तु ॥ ४८ ॥
पुरुषग्रहणसमर्था कामाभिज्ञा ह्यमत्सरोपेता ।
अविरहने( मि ? )च्छति [ नित्यं नारी ज्ञेया चतुर्थे तु ] ॥ ४९ ॥
[ यौवनलम्भा ह्येते विज्ञेया नाटके तु चत्वारः ।
पुनरेव तु पुरुषगुणान् ] कामिनं(त°) तथे प्रवक्ष्यामि ॥

---

१. '°जघनाधरस्तनकर्कशम्' २. 'स्रेयम्' का. ३. 'च' इति त्रुटितं क-ख. पुस्तकयोः । ४. 'कुर्या' का. ५. 'कामाप्यायितशोभम्' का. ६. 'नवमे यौवने'(?) मु. ७. 'तथा' का. ८. 'तृतीयजे' का. ९. 'अम्ललगण्डजघनाधरस्तनशेयगात्रलावण्यम् ।' का. १०. 'न कुप्यति न हृष्यति प्रतिस्त्रीषु' का. ११. 'सौख्यं गुणेष्वाधरस्य(?)' मु. 'सौख्यगुणेष्वाश्रय' का. १२. 'समत्सरं चैव' का. १३. 'यौवनमेतद्द्वितीयं तु' का. १४. 'प्रतिपक्षापहनिनी' का. १५. '°त्वमत्सरोपेता' का. १६. 'श्लोकार्धः पाठ-त्रुटितः क-ख. पुस्तकयोः । १७. 'प्रलितरूपे' का.

चतुरोन्तामो(त्तमौ ?) सम ( मध्यमः ) स्तथाधमः संप्रवृत्तक(द्धकः)
श्चैव( श्च ) । स्त्रीणां प्रयोगविषये ज्ञेयाः पुरुषास्त्वमी पञ्च ॥
दुःखक्लेशसहिष्णुः प्रियवदनः प्रसादने कुशलः ।
रत्युपचारे निपुणो दक्षश्चतुरः स बोद्धव्यः ॥ ५० ॥
यो विप्रियं न कुरुते धीरोदात्तः प्रियंवदो मानी ।
अज्ञातहृदयतत्त्वो ज्ञेयः स्मृतिमान् स तु ज्येष्ठः ॥ ५१ ॥
मधुरस्त्यागी रागं न याति मदनस्य नापि वशमेति ।
अपमानितश्च नार्या विरज्यते स च भवेज्ज्येष्ठः ॥ ५२ ॥
सर्वार्थं मध्यस्थो भावग्रहणं करोति नारीणाम् ।
किंचिद्दोषं दृष्ट्वा विरज्यते मध्यमध्यमोऽयमिति ॥ ५३ ॥
अपमानितोऽपि नार्या निर्लज्जैः समुपसर्पणे( ति ? ) तथैव ।
अभिवर्क्षते ( अभिनवकृते ? ) व्यलीके प्रत्यक्षं रज्यते दृढतरं यः ५४
सुहृदापि धार्यमाणो विज्ञेयः सोऽधमो नाम ।
अपि( वि ? ) गणितभयामर्षो ( मूर्खः ? ) प्रत्यक्षमसक्तनाशश्च ॥५५॥
एकान्तदृढता ( दार्ढ्य ? ) हीनो निर्लज्जः कामतन्त्रेषु ।
रतिकलहसंप्रहारेषु कर्कशः क्रीडनीयकः स्त्रीणाम् ॥ ५६ ॥
एवंविधो विधिज्ञैः प्रवृत्तकोया( य ? )मपि ज्ञेयः ।
नानाशीलाः स्त्रियो ज्ञेया गूढार्थहृदयाश्च ताः ॥ ५७ ॥

---

१. 'चतुरोत्तमो मध्यमस्तथाधम. सम्प्रवृद्धश्च ।' का. २. 'विज्ञेया. पुरुषास्त्विमे पञ्च' का. ३. 'समदु.ख· क्लेशसह प्रणयक्रोधप्रसादने कुशल. ।' का. ४. 'च' का. ५. 'याति च' का. ६. 'अपमानितश्च' का. ७. 'सर्वार्थे.' का. ८. 'यो नार्या.' का. ९. 'कंचिद्दोषं' का. १०. 'मध्यम· पुरुष' का. ११. 'अत्र का. पुस्तके—

'काले दाता ह्यवमानितोऽपि न क्रोधमतितरामेति ।
दृष्ट्वा व्यलीकमात्रं विरज्यते मध्यमोऽयमपि ॥' इत्यधिक. श्लोकः ।

१२. 'अवमानितोऽपि' का. १३. 'निर्लज्जतयोपसर्पति य एनाम्' का. १४. 'अभिनवकृते' का. १५. 'मित्रैर्निवार्यमाणोऽपि सोऽधमो नाम विज्ञेयः ।' का. १६. 'अविगणितभयामर्षो' का. १७. 'मूर्ख. प्रकृतिप्रकृष्टभावश्च' का. १८. 'एकान्तदृढग्राही' का. १९. 'विज्ञेय. सम्प्रवृद्धः स्यात्' का.

विच्चेदे ( विज्ञाय ? ) च यथातत्त्वमुपसर्पेत्ततश्च ताः ।
भावाभावौ विदित्वा तु ततस्तैस्तैरुपक्रमैः ॥ ५८ ॥
पुमानुपचरेन्नारीं कामतन्त्रं समीक्ष्य तु ।
सामयोर्थप्रदानं च दण्डो भेदस्तथैव च ॥ ५९ ॥
उपेक्षा चैव कर्तव्या नारीणां विषयं प्रति ।
तवास्मि मम दैवेत्वं ( चैन त्वं ? ) दासोऽहं त्वं च मे प्रिया ॥ ६० ॥
आत्मोपक्षेपणकृतं तत्सामेति हि सञ्ज्ञितम् ।
काले काले प्रदातव्यं धनं विभवमात्रया ॥ ६१ ॥
निमित्तान्तरसंभूतं प्रदानं नाम तत् स्मृतम् ।
भेदः स्यात् तत् प्रियस्येष्टं प्रदानं कोपदर्शनम् ॥ ६२ ॥
बन्धनं ताडनं वापि दण्ड इत्यभिधीयते ।
मध्यस्था( स्थां ? ) मानयेत् साम्ना लुब्धायां च प्रदानतः ॥ ६३ ॥
अन्यायबद्धभावां च भेदेन प्रतिपादयेत् ।
दुष्टाचारे समारब्धे स्वैन्यभावसमुत्थिते ॥ ६४ ॥
दण्डः पातयितव्यो हि मृदुबन्धनताडनैः ।
सामादीनां प्रयोगे तु परिक्षीणे यथाक्रमम् ॥ ६५ ॥
न भवेद्वशगापन्ना तामुपेक्षेत बुद्धिमान् ।
गुमरो(रा?)गेणं नेत्राभ्यां विज्ञेयः स्मरचेष्टितैः ॥ ६६ ॥
द्वेष्यो वापि प्रियो वापि मध्यस्थो वापि योषिताम् ।
अर्थहेतोस्तु यस्तेषां ( वेश्यानां ? ) प्रियो वा यदि वा प्रियः ॥ ६७ ॥
गम्य एव नरो नित्यं गुर्वी( यत्वा ? ) दिव्यनृपस्त्रियः ।

---

१. 'विज्ञाय च तथा तत्त्वमुपसर्पेत्तु ता बुधः ।' पा. २. 'च' पा. ३. 'चैव प्रदानं च' पा. ४. 'चैव त्वं' पा. ५. 'तत्सामेत्यभिधीयते' पा. ६. 'धनिमित्तान्तरं कृतं' पा. ७. 'कोपार्थं दोषदर्शनम्' पा. ८. 'मध्यस्थां' पा. ९. 'लब्ध्वापर्यन्तप्रदानतः' पा. १०. 'मध्यमाते समुत्थिते' पा. ११. 'प्रारब्धे तु' पा. १२. 'यथायोगं तु' पा. १३. 'गुणरागेण' पा. १४. 'स्मरचेष्टितैः' पा. १५. 'वैरस्यानमितो वा यदि प्रिय' पा. १६ 'दन्तो हि पुरुषो नित्यं' पा. १७ 'गुण्या' पा.

द्वेष्यं तु प्रियमित्याहुः प्रियं प्रियतरं तथा ॥ ६८ ॥
दुःशीलं च सुशीलेति निर्गुणं गुणवानिति ।
अहसन्ती च (वः) नेत्राभ्यां यं दृष्टोत्फुल्लतारका: (काः) ॥ ६९ ॥
प्रसन्नमुखरागा च लक्ष्यते भावरूपणैः ।
भावाभावौ विधायैवं सततैस्तैरुपक्रमैः ॥ ७० ॥
उपसर्पेत्तथा नारीं कामतन्त्रं समीक्ष्य तु ।
उपयाख ( उपचारफ ? ) ल्लाच विप्रलम्भकृतेन च ॥ ७१ ॥
तासु निष्पद्यते कामः काष्ठादग्निरिवोत्थितः ।
योषितामुपचारोऽयं यथोक्तो वैशिकाश्रयः ॥ ७२ ॥
कार्यः प्रकरणे वापि यथायोगं च नाटके ।
एवं विशेषाचारोऽयं तज्ज्ञैः कार्यो द्विजोत्तमाः ।
अतः परं प्रवक्ष्यामि प्रकृतीनां तु लक्षणम् ॥ ७३ ॥

इति भारतीये नाट्यशास्त्रे वैशिकनामाध्यायस्त्रयोविंशः ।

चतुर्विंशोऽध्यायः ।

समासतस्तु त्रिविधा प्रकृतिः परिकीर्तिता ।
स्त्रीणां च पुरुषाणां च उत्तमाधममध्यमाः ॥ १ ॥
नाट्ये चत्वार एवैते नायकाः परिकीर्तिताः ।
तत्रोत्तमायां प्रकृतौ नानालक्षणलक्षिताः ॥ २ ॥
धीरोद्धतो धीरललितो धीरोदात्तस्तथैव च ।

१ 'प्रियमप्यप्रियं तथा' का. २. 'सुशीलं च' का. ३. 'प्रहसन्तीव' का. ४. 'स्फुल्लतारका' का. ५. पद्यमेतत् काशीमुद्रितपुस्तके नास्ति । ६. 'उपचारफलत्वाच्च' का. ७. 'चापि' का. ८. 'एवं वेश्योपचारोऽयम्' का. ९. 'अत ऊर्ध्वं प्रवक्ष्यामि चित्रस्याभिनयं प्रति' का. १०. 'इति भारतीये नाट्यशास्त्रे बाह्योपचारो नाम पञ्चविंशोऽध्यायः ।' का. ११. चतुस्त्रिंशत्तमोऽध्याय:, इति मुद्रितपुस्तके पाठः । काशीमुद्रितपुस्तकेऽपि सोऽयमध्यायश्चतुस्त्रिंशत्तम. । १२. 'अत ऊर्ध्वं प्रवक्ष्यामि प्रकृतीनां च लक्षणम् । नायकानां च सर्वेषां चतुर्णामपि तत्त्वत. ॥' इत्यधिको मुद्रितपुस्तके पाठः । १३. 'विविधा' मु. १४. 'मध्यमाधमा.' मु. १५. 'मध्यमोत्तमायां' मु.

धीरप्रशान्तश्चैवेति नायका नाटकाश्रयाः ॥ ३ ॥
देवा धीरोद्धता ज्ञेयाः स्युर्धीरललिता नृपाः ।
सेनापतिरमात्याश्च धीरोदात्ताः प्रकीर्तिताः ॥ ४ ॥
ब्राह्मणा वणिजश्चैव प्रोक्ता धीरप्रशान्तकाः ।
एतेषां च पुनर्ज्ञेयाश्चत्वारोऽथ विदूषकाः ॥ ५ ॥
एते तु नायका ज्ञेयाः काव्यबन्धेषु सर्वदा ।
नायिकाश्चैव वक्ष्यामि चतस्रः पुनरेव तु ॥ ६ ॥
दिव्या च नृपपत्नी च कुलस्त्री गणिका तथा ।
एतास्तु नायिका ज्ञेया नानाप्रकृतिलक्षणाः ॥ ७ ॥
धीरा च ललिता चैव उदात्ता निभृता तथा ।
दिव्या राजाङ्गना ह्येता गुणैर्युक्ता भवन्ति हि ॥ ८ ॥
उदात्ता निभृता चैव भवेत्तु कुलजाङ्गना ।
गणिका शिल्पकारी च उदात्तललिते स्मृते ॥ ९ ॥
प्रेष्या चैव हि विज्ञेया संकीर्णप्रकृतावपि ।
नपुंसकश्च विज्ञेयः संकीर्णोऽधम एव च ॥ १० ॥
संकरे स्थविरश्चैव ये चान्येऽप्यधमा नराः ।
संकीर्णास्तेऽपि विज्ञेया नाटकेषु द्विजोत्तमाः ॥ ११ ॥
एते ज्ञेयाः प्रकृत्या तु पुरुषस्त्रीनपुंसकाः ।
एतेषां चैव वक्ष्यामि विभागं शीललक्षणैः ।
सर्वासां प्रकृतीनां तु प्रकारो द्विविधः स्मृतः ॥ १२ ॥
तत्र राजोपचारो यो भवेदभ्यन्तरस्तु सः ।
योऽन्योपचारो यस्तस्माद्विज्ञेयो बाह्य एव सः ॥ १३ ॥
तस्माद्राजोपचारेषु पुनरभ्यन्तराश्रयम् ।
स्त्रीविभागं प्रवक्ष्यामि उपचारं तथैव च ॥ १४ ॥
महादेवी तथा देवी स्वामिनी स्थायिनी तथा ।

१. 'नाटकाधिगाः' ख.ग. २. 'धीरललिताश्रया.' ख. ग. ३. 'दासदथैव चेटश्च' मु.
४. अयमर्धश्लोकः ख-ग-पुस्तकयोर्नास्ति । ५. अयमर्धश्लोको मुद्रितपुस्तके नास्ति ।

एवं ज्ञेया वैण[व?]वाद्यविधाने तु धातवस्तज्ज्ञैः।
वक्ष्याम्यत.परमहं निगीतविधानसमवायम् ॥ ८१ ॥
आश्रावणा तथारम्भो वक्त्रपाणिस्तथैव च।
संखोटता(ना?) तथा कार्या मुनेश्च परिदेवनम् ॥ ८२ ॥
मार्गासारितमन्यैस्त्वालीलाकृतमथापि च।
आसारितानि च तथा त्रिप्रकारकृतानि तु ॥ ८३ ॥
एतानि च बहिर्गीतान्यादौ योज्यानि योक्तृभिः।
*सत्त्वान्यलपतालानि चित(त्र?)वृत्तौ स्मृतानि च ॥ ८४ ॥*
प्रयोजनं च तज्ज्ञेयं पूर्वरङ्गविधौ मया।
एतेषां संप्रवक्ष्यामि दर्शनानि यथाक्रमम् ॥ ८५ ॥

तेषां(त्रा?)श्रावणा नाम—

विस्तारधातुविहितैः करणैः प्रविभागशो द्विरभ्यस्तैः।
द्विस्थपि(?)सनिवृत्तैः करणोपचयैः (पचयै.?) क्रमेण स्यात् ॥ ८६ ॥
गुरुणात्य(रूणित्वा?)दावेकादशं च सचतुर्दशं सपञ्चदशम्।
संचतुर्विंशकामय(कमेव?)द्विगुणीकृतमेतदेव स्यात् ॥ ८७ ॥

---

स्थान पात्र वा स्यात् तन्त्रिषु विभावयेत् समं गानम्।
तच्चौघतुल्यकरणं वाद्यं कार्यं विपञ्च्यास्तु।
सप्ततन्त्री भवेच्चित्रा विपञ्ची नवतन्त्रिका।
विपञ्ची कोणवाद्या स्यात् चित्रा चाङ्गुलिवादना ॥
इत्यानधिक पाठ।

१. 'एव वेद्या तज्ज्ञैर्नानाकरणाश्रया विपञ्ची तु।
अत ऊर्ध्वं व्याख्यास्ये लक्षणयुक्तं बहिर्गीतम् ॥' इति का.
२. 'आश्रवणारम्भविधी' का. ३. 'परिघट्टना च विज्ञेया तथा संघोटनैव च।' का. ४ 'पुनश्च परिघट्टना' इत्यभिमग्रन्थानुसारी पाठ। ५ '°मेव स्यात्' का. ६. 'त्रिप्रमाणानि वै तथा' का. ७. 'चित्रदक्षिणवृत्तानि च' का. ८. 'हि पूर्वोक्त' का. ९. 'तेषां चैव च वक्ष्यामि लक्षणं सनिदर्शनम्।' का. १० 'तत्राश्रवणा' का. ११ 'विश्वापि (?)' का. १२. 'करणोपचये' का. १३. 'गुरुणि तादावेकादशकचतुर्दशकसपञ्चदशकम्।' का. १४. 'सचतुर्विंशकमेव' का.

लघुगुरुणी च ततः स्याद् (अष्ट) तथाष्टमं गुरु भवेत्तथा च पुनः ।
षट् च लघूनि तथान्त्यं गुरु चाद्याश्रावणायां तु ॥ ८८ ॥

(?)त्रिःशम्योपरिपाणौ पित्वोवनाममेव चैककवान् ।
(?)समपाणौ द्वे साम्य(शम्ये ?)तालै(ला)वाम्ये(वप्ये)वमे वाथ (भूयय)(?) ८९
[ भूयः ? ] शम्या तालवचयाणापुत्वर(नुगुणादुत्तरः ?) तथा चैव ।
(?)वचतुरस्तथा······सादेवं (देव?)ह्याश्रावणातालः ॥ ९० ॥

अत्रोदाहरणम्—

(?) कुंदु जगति यवलितकजम्बुकर्करतितिसलरुचसलवादिर्दिगणपति । पशुपति फत्तुकदिद्देपरमुञ्जदिगिनिगिवादिगिवादिगिवादिगिगिनि च पशुपति ति च ॥

अथारम्भः—

दीर्घाण्यादावष्टौ द्वादश च लघूनि नैधनं चैव ।
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घे च ॥ ९१ ॥
लघुसंज्ञानि चतुर्थो निधनद्विगुणीकृतानि दीर्घ(र्घो)ऽन्ते ।
अष्टौ लघूनि नैधनमित्यारम्भेऽक्षरविधानम् ॥ ९२ ॥

यथा—

कार्यं त्रिपर्वविहितैरुद्वहनैरप्यधःसमवरोहैः ।
तलरिभि तद्वाद(द्भिद ?)युतैः करणैर्विस्तारभूयिष्ठैः ॥ ९३ ॥

---

१. 'स्याताभथाष्टमं' का. २. 'तदा च' का.
३. 'त्रि शम्योपरिपाणौ तालोऽपि ह्येष निर्दिष्टः ।
समपाणौ द्वे शम्ये तालवच्येवमेव स्यात् ॥' इति का.
४. 'भूयः शम्यातालानुगुणादुत्तरस्तथा द्विकलश्च ।
घटपरस्तथा च युक्तैः स्यादेव ह्याश्रावणातालः ॥' इति का.
५. 'अत्रोदाहरणम्' इत्यायारभ्य 'पशुपतिति च' इति पर्यन्तं का. पुस्तके पाठो नास्ति । ६. 'दिगिनि च' ग. ७. 'द्वादश' का. ८. 'च चत्वारि द्विगुणीकृतानि दीर्घे द्वे' का. ९. 'यथा' इति का. पुस्तके नास्ति ।
१०. 'अस्य तु यारं कार्यं त्रिपर्वहीनैरुपरहनैः ।
रयसवारोह सुलरहितगुरुयुक्तैः (?) करणैर्विस्तारभूयिष्ठैः ॥' इति का.

अपचययुक्तैर्द्विस्त्रिस्तथा निवृत्तैस्तथा द्विरभ्यस्तैः।
आरम्भोऽस्य(स्या ?)वतरणत्रिपर्वयुक्तैश्च कर्तव्यः॥ ९४॥

[ अस्योदाहरणम्— ]

ऋंजें दुडु जगति अवलिनकदिगिवा दिंजेतितिनिकालकुचकुशजम्बुकं नितिनिवा। आगणपति पशुपति [ वा आगणपति पशुपति ] वा॥

अस्य तु वाद्यम्—

तालस्त्रिकलस्त्वादो(स्त्वादौ ?) शम्येककला कलाद्वये तालः।
द्विकला च पुनर्व्यञ्जनधातुविधिर्वक्रपाणौ तु॥ ९५॥
द्विकालमद्रके यत्र शम्यातालादि योजितम्।
तत्सर्वं वक्रपाणौ तु कार्यमष्टकलान्वितम्॥ ९६॥

---

१. 'द्विः कृत्वा तु निवर्तितैर्द्विरभ्यस्तै।'
आरम्भे मार्गविधिः कार्यस्त्वेवं प्रयोगज्ञै॥' इति का.

२. ऋजं दुडुजगति"इत्यादिगद्यभाग' का. पुस्तके नास्त्येव। ३. 'अस्य तु वाद्यं' इति का. पुस्तके श्लोकांशत्वेन निर्दिष्टम्।

४. 'तालस्त्रिकलस्त्वादौ शम्येककलता तालं द्वयमेताल।
पुनश्शम्यातालो द्विकलश्च कर्तव्य॥ इति' का.

५. '०स्त्वादौ' इति भवेत्।

६. 'द्विकालमद्रके यत्र शम्यातालादि योजितम्।
तत्सर्वं वक्रपाणौ तु कार्यमष्टकलान्वितम्॥' इति का.
गुरूणि पञ्च ह्रस्वानि षट् गुरूणि चतुर्ग्रेण।
गुरुणी द्वे लघु ह्येक चत्वार्येव गुरूणि च॥
चत्वार्येव लघूनि स्युस्त्रीणि दीर्घाणि चैव हि।
लघून्यष्टौ च दीर्घं च वक्रपाणौ विधीयते॥
द्विकले मद्रके यत्तु शम्यातालनिपातनम्।
तत्सर्वं वक्रपाणौ तु मुख्ये ह्यष्टौ कलाः स्मृताः॥
शम्यातालौ तालशम्ये तेषु कुर्यात् क्रमेण तु।
तालं शम्या च तालं च सन्निपातं तथैव च॥
तस्याधस्तात्ततः कार्यं पञ्चपाणिचतुष्टयम्।
वक्रपाणेरयं तालो मुखप्रतिमुखाश्रयः॥

अथवा—

द्विकले मद्रके यत्र शम्यातालादियोजितम् ।
तत्सर्वं वक्रपाणौ तु कार्यमष्टकले मुखे ।
तस्याधस्तात्पुनः कार्यं पञ्चपाणिचतुष्टयम् ॥ ९७ ॥

---

अतिदण्डां हस्ताभ्यां वीणामुपदक्षिणाङ्गुल्या ।
अङ्गुष्ठाभ्यां च सदा कार्यं संघोटनावाद्यम् ॥
संघोटने स्वराणां संवादिविवादिनश्चापि ।
संघोटनात् त्वभिहिता······शेषादिभिश्चैव ॥
विस्तारधातुकरणैस्त्रिभिश्च चित्रैस्तथा निवृत्तैश्च ।
त्रिस्ताभ्यस्तोपचयैर्वदन्ति···घोटजावाद्यम् ॥' इत्याद् पाठः ।

१. का. पुस्तके त्वत्र—

'अथ वक्रपाणिः—

'आविद्धकरणयुक्तो द्व्यङ्गः स्यादेककः प्रवृत्ते·षा ।
अर्धंव्यञ्जनधातुर्वाद्येऽप्यथ वक्रपाणिस्तु ॥
गुरूणि पञ्च ह्रस्वानि पद गुरूणि चतुर्गुणः ।
गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि च ॥
चत्वार्यथ लघूनि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ च दीर्घं च वक्रपाणौ विधीयते ॥' इत्यधिकमत्र ।

२. 'द्विकले मद्रके यत्तु शम्यातालनिपातनम् ।' इति का. ३. 'मुख्ये त्वष्टौ कलाः स्मृताः ।' इति का. ४. अत्र का. पुस्तके—

'शम्यातालौ तालशम्ये तेषु कुर्यात् क्रमेण तु ।
तालं शम्या च तालं च सन्निपातं तथैव च ॥' इत्यधिकम्.

५. 'ततः' का. ६. 'इतोऽग्रे का. पुस्तके—

'वक्रपाणेरयं तालो मुखप्रतिमुखाश्रयः ।
अतिदण्डां हस्ताभ्यां वीणामुपदक्षिणाङ्गुल्या ॥
अङ्गुष्ठाभ्यां च सदा कार्यं संघोटनावाद्यम् ।'
संघोटने स्वराणां संवादिविवादिनश्चापि ।
संघोटनात् त्वभिहिता···शेषादिभिश्चैव ॥
विस्तारधातुकरणैस्त्रिभिश्च चित्रैस्तथा निवृत्तैश्च ।
त्रिस्ताभ्यस्तोपचयैर्वदन्ति [ सं ? ]घोटजा ( ना ? ) वाद्यम् ॥

इत्यधिकम् ।

अथ संखोटना[ना]सु—

गुरुणी लघून्यथा[1]ष्टौ दीर्घं द्विगुणं[2] तथा च कर्तव्यम् ।
लघुदीर्घे लघु च पुनश्चतुर्गुणं [3]संमकर्तव्य [म्?] ॥ ९८ ॥
पुनरष्टौ ह्रस्वा[4]नि स्युरिह[5] तथा नैधनं च कर्तव्यम् ।
[6]संखोटनवस्तुविधौ ह्रस्वगुरुविधिः समुद्दिष्टः ॥ ९९ ॥

अस्य वाद्यविधिः—

अधिदण्डहस्तशम्या ताला······द्विकलश्च कर्तव्यः ।
द्विकलश्च संनिपातः पुनः पिता[7]पुत्रकम्पपपूर्वः (?) ॥ १०० ॥
[8]विश्वक्पुरस्तथा चेत्यारम्भे तालयोगस्तु ।
·········································· ॥ १०१ ॥

अथ वक्रपाणिः—

गुरू[9]णि पञ्च ह्रस्वानि पद् स्वरश्च [च]तुर्गुणः ।
गुरुणी द्वे लघु त्वेकं चत्वार्यथ गुरूणि च ॥ १०२ ॥
चत्वार्यथ गु[10]रूणि स्युस्त्रीणि दीर्घाणि चैव हि ।
लघून्यष्टौ[11] च दीर्घं च वक्रपाणौ भवेद्विधिः[12] ॥ १०३ ॥

अत्रोदाहरण[13]म्—

दिद्धिःक्लंदुंजंबुकगजपतियाः न्नतुङ्गादिद्धेयेङुघिषि डुनकिदिइनादुंघट्ट-चट्टकिटिमटदु ॥

---

१. 'तथाष्टौ' का. २. 'द्वीर्घद्वितयं' का. ३. 'चतुर्गुणश्चापि कर्तव्यम् ।' का. ४. 'ह्रस्वाः स्युः' का. ५. 'स्वप गुरु निधनं तथा स्थर्यम् ।' का. ६. 'संघोटनं वस्तुविधौ विज्ञेयं गुरुलाघवविधानम् ।' का.

७. 'पिता पुत्रकश्च पद' का. ८. 'पूर्वश्चघलुटस्वस्याद्वास्मैस्तालसंयोगेस्तु (?) ॥' इति का. ९. 'आविद्धकरणयुक्तो धत्तः स्यादेकक: प्रवृत्ते वा । अर्धव्यञ्जनघातुर्वाद्येऽप्यथ वक्रपाणिस्तु ॥' इत्यधिकमत्र ।' १०. 'गुरूणि' का. ११. 'लघूनि स्युः' का. १२. 'विधीयते' का. १३. का. पुस्तके 'अत्रोदाहरणम्' इत्यादि—'वदन्ति संघोटनावाद्यम् ॥ १०५ ॥' इत्यन्तपाठस्य स्थाने—

अस्य वाद्यम्—

आविद्धकरणयुक्ताद्वाङ्गः स्यादेककः मॅवृत्तो वा ।
संखोटय स्वरं या(वा)दिना तु संवादिना तथाधिवलम् (?) ॥ १०४॥

समवायिभिश्च शेषा न तु वादिभिरल्पकैश्चांशैः ।
विस्तारकरणे चित्रद्वित्रिविभिपवर्ती वो (?) द्विरभ्यस्तैः ।
उपाश्रययुक्तौ च सदा वदन्ति सखोटनावाद्यम् ॥ १०५ ॥

अस्य लघुक्रिया—

गुरुणी लघून्यथाष्टौ दीर्घे द्विगुणे तथा च कर्तव्या ।
लघुदीर्घे लघु च पुनश्चतुर्गुणं सम्प्रवक्ष्यम् ॥ १०६ ॥

पुनरस्यैद्रस्वाणिस्यस्तुते (पुनरष्टौ ह्रस्वास्युस्त्वथगुरु(?)) नैधनं तथा कार्यम् ।
सखोटनवस्तुवि[धौ ?]प्रस्वमशोधवं (विज्ञेयं गुरुलाघवविधानम्)॥ १७० ॥

झंडं जगति यवलितकडुंडुडुंडुं महायोगिक्षुकक्रपलयाप्नुपतिगणपतिक ।
अस्यास्तानः—शीर्षकवपाणिविहितः (?) ।

अथ परिघट्टना—

······समुत्थं वाद्यं······ऊहस्तु वादनाकार्यम् ।
व्यञ्जनधातुसमुत्थ नानाकरणायोवत(श्रयोपेतम्?) ॥ १०८ ॥

दीर्घाण्यादावष्टौ लघूनि कुर्यात्पुनर्द्विगुणितानि ।
ह्रस्वान्यपि चत्वारि द्विगुणानि स्युः सदीर्घाणि ॥ १०९ ॥

---

१. 'अस्य लघुक्रिया' इति का. पुस्तके नास्ति । २. 'गुरूणि लघूनि तथाष्टौ दीर्घद्वितयं तथा च कर्तव्यम् ।' का. ३. 'चतुर्गुणश्चापि कर्तव्यम् ।' का. ४. 'पुनरष्टौ ह्रस्वा स्युरत्वथ गुरु निधन तथा कार्यम् । सघोटन वस्तुविधौ विज्ञेयं गुरुलाघवविधानम् ॥ इति का. ५. 'झडं जगति' इत्यारभ्य 'ऊहस्तु वादनाकार्यम्' इत्यन्तस्य पाठस्य स्थाने 'अस्यास्तालशीर्षकवत् पक्षपाणि विहित. । परिघट्टनासमर्थं वाद्यं तथास्ते लाघवात् कार्यम्' इति का. पुस्तके पाठः । ६. 'नानाकरणाश्रयोपेतम्' का. ७ 'लघुनी च द्वे गुरूण्यपि च कुर्यात्' का. ८. 'लघुनी द्वे सर्वाणि गुरूणि सदैव दीर्घेण ।' इति का.

[1]षोडश लघूनि च स्युः सह निधनगतेन वात्र कार्याणि।
[2]एष परिघट्टनायां गुरुलघुवस्तु(स्तु?)क्रमः प्रोक्तः ॥ ११० ॥
[3]वाद्यं चास्य तु तज्ज्ञैः सोद्वहनं हस्तलाघवात्कार्यम्।
व्यञ्जनधातुसमुत्थं नानाकरणाश्रयोपेतम् ॥ १११ ॥
[4]संपिष्टकवज्ञास्यास्तालः करणैस्तु धातुसंयुक्तैः।
[5]गुरुलघुयोगादेवं विहितं कार्यं बुधैर्नित्यम् ॥ ११२ ॥
[6]मार्गासारितपाद्यं* विस्ताराविद्धकरणसंयुक्तम्।
[7]तालैः सकलैरथ गुरुलघुसंचयस्यायम् ॥ ११३ ॥
[8]चत्वारि गुरूणि लघूनि च चत्वारि च गुणितानि।
ह्रस्वानि गुरूणि तथा स्युर्मार्गासारिते ह्येवम् ॥ ११४ ॥
[9]अत्रोदाहरणम्—
दिगलतसंटुं जगति पचतिनकदिहे संटुं।
अथ वा।
चत्वारि तु गुरूणि स्युर्ह्रस्वान्यष्टौ भवन्ति हि।
गुरुणि तव ह्रस्वाणि दीर्घमत्समथापि वा ॥ ११५ ॥
अत्राप्युदाहरणम्—
दिकंटुं जगति यवति यवलि। ऋंदुं तिति ऋल कुलतिति वा ॥

---

१. 'षोडश लघूनि स्युः सगुरुण्यन्ते तथैव कार्याणि।' इति का. २. 'एष स परिघट्टनाया गुरुलघुवस्तुक्रमः प्रोक्तः।' का. ३. पद्यमेतदत्र का-पुस्तके नास्ति। ४. 'सपिष्टकवज्ञायास्ताल.' का. ५. 'सकलैर्वाद्यं वाद्यं विस्ताराविद्धकरणसंयुक्तम्।' का. ६. * 'माद्यं' इति भवेत्. 'मर्गासारिगुरूणि स्युर्लघूनि चत्वार्यथ द्विगुणितानि।' का. ७. 'एतदर्धं' का-पुस्तके नास्ति। गुरूणि च लघूनि तथा स्युर्मार्गासारिते च वातूनि ॥' इति का. ८. 'गुरूणि लघूनि चाष्टावन्त्यं गुरु चेति कर्तव्यम्। ९. 'इत आरभ्याध्यायसमाप्ति का. पुस्तके—
'कनिष्ठासारितविधौ चास्य तालश्रवणमधुराणि लीलाकृतानि।
चाभिकृतपरिवृत्तानि तान्यप्यर्थवशादिह कर्तव्यानि प्रयोगज्ञैः ॥
अथासारितानि ज्येष्ठमध्यकनिष्ठानि तानि च तालप्रमाणानि निर्दिष्टानि।
तानि तालविधानेन यथाक्रमं व्याख्यास्ये ॥' इति पाठः।

बालसारितवश्चैव ताभौ(?)स्य परिकीर्तिता ।
................................. ॥ ११६ ॥

श्रवणमधुराणि लीलाकृतानि स्रुतपरिस्रुतेतरकृतानि ।
तान्यप्यर्थवशादिह कर्तव्यानि प्रयोगज्ञैः ॥ ११७ ॥

अथासारितानि ज्येष्ठमध्यकनिष्ठानि तत्प्रमाणनिर्दिष्टानि तानि च तालविधाने व्याख्या[स्या]मः—

एवमेतत्स्वरकृतं ज्ञेयं वीणाशरीरजम् ।
विपञ्च्याद्यनुवृत्तानि (!) करणानि निबोधत ॥ ११८ ॥
रूपं कृतप्रतिकृतं प्रतिभेदो रूपशेषमोघश्च ।
षष्ठी वै प्रतिशुष्का त्वेवं विज्ञेयं करणजातम् ॥ ११९ ॥
वीणावाद्यद्विगुणं गुरुलाघववादनं भवेद्रूपम् ।
(१) रूपमेवानुकृतप्रतिन्यूनमित्युच्यते वाद्यम् ॥ १२० ॥
युगपत्कृतेऽन्यविकरणं प्रतिमो(भेदो) दीर्घलाघवकृतः स्यात् ।
कृतमेकस्यान्त आ···प्रतिशुष्कं नाम विज्ञेयम् ॥ १२१ ॥
वीणावाद्यविरामेऽस्य विरतकरणं तु रूपशेषं स्यात् ।
आविद्धकरणयोगादुपर्युपरिपाणिकैश्चौघः ॥ १२२ ॥
कार्यं ध्रुवाविधानेन मार्गेण हि कोणवादनं तज्ज्ञैः ।
स्थानप्राप्त्यर्थे चेयत्त्व भ(द्र?)ेदयं नियमः ॥ १२३ ॥
सप्ततन्त्रीभवे चिन्ता विपञ्चीभिभवे तथा ।
कोणवाद्या विपञ्ची स्याच्चित्रा चाङ्गुलिवादनात् ॥ १२४ ॥
ततवाद्यविधानमिदं सर्वं प्रोक्तं मया समासेन ।
वक्ष्याम्यतश्च भूया.(यः?) शुषिरातोद्यस्य लक्षणम् ॥ १२५ ॥

इति भारतीये नाट्यशास्त्रे ततोद्यविजातिविधानो नामाध्याय एकोनत्रिंशत्तमः ।

---

१. 'स्वरगतं' पा. २. 'कृतप्रतिकृत' इति भवेत्. ३. ११८ पद्यस्योत्तरार्धत्वेन—'अत ऊर्ध्वं प्रवक्ष्यामि शुषिरातोद्यस्य लक्षणम्' पा. ४. 'ततोद्य' पा.

निशत्तमोऽध्यायः।

आतोद्यं शु(?)पिरं नाम ज्ञेयं वंशगतं बुधैः।
वैण एव विधिस्तत्र स्वरसाम्यसमाश्रयः॥ १॥
द्विकत्रिकचतुष्कास्तु ज्ञेया वंशगताः स्वराः।
कम्पमानार्धमुक्ताश्च व्यक्तमुक्तास्तथैव च॥ २॥
तत्रोपरि यथा ह्येकः स्वरो वैणः स्वरोत्तरे।
प्राप्नोत्यन्यत्वमेवाह तथा वंशगतोऽपि हि॥ ३॥
द्विकस्त्रिकश्चतुष्को वा श्रुतिसंख्या भवेत्स्वरः।
अनीरणात्तु रो(शे?)षाणां स्वराणां श्रुतिसंभवः॥ ४॥
अङ्गुलीवादनकृतस्तच्च मे संनिबोधत।
व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः॥ ५॥
कम्पमानाङ्गुलिश्चैव त्रिश्रुतिः परिकीर्त्यते।
द्विकार्धाङ्गुलिमुक्तः स्यादिति श्रुत्याश्रिताः स्वराः॥ ६॥
एते स्युर्मध्यमग्रामे भूयः षड्जाश्रिताः पुनः।
व्यक्तमुक्ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः॥ ७॥
धैवतश्चर्षभश्चापि कम्पमानाङ्गुलीकृतौ।
अर्धमुक्ताङ्गुलिश्चैव गान्धारोऽथ निषादवान्॥ ८॥
स्वरसाधारणं चापि स्यन्तरस्वरसंस्थया।
निषादगान्धारकृतौ षड्जमध्यमयोरपि॥ ९॥
विपर्ययः सनिकर्षे श्रुतिलक्षणसिद्धिदः।
वैणकं तु प्रवेशेन सिद्धाः कण्ठाश्रिताः स्वराः॥ १०॥
[15]येय गीता (यं यं गतः) स्वरं गच्छेचं तं वंशेन वादयेत्।
[16]शारीरवैणवंशानामेकीभावः प्रशस्यते॥ ११॥

१. 'कृत' का. २ 'कम्पिताद्यर्थं' का. ३. 'स्वरान्तरे' इति का. ४. 'स्वर स्याच्छ्रुति संख्यया' का. ५. 'स्वराणी(णि?) च श्रुतिसृतं' का. ६. 'त्रिश्रुतिश्च स्वरो भवेत्' का. ७. 'स्तु एव' का. ८. 'तु' का. ९. 'श्चर्षभश्चापि' का. १०. 'साधारणे' का. ११. 'काकल्यन्तरसञ्ज्ञके' का. १२. 'वंशाश्रिता' का. १३. 'सिद्धित' का. १४. 'वेणुदण्डप्रवेशेन' का. १५. 'यं य गता' इति भवेत्. 'यं यं गत' का. १६. 'वशवैणानां' का.

अविचलितमविकृतं[1] वर्णालंकारसंयुतं विधिवत्[2] ।
ललितं[3] मधुरं स्निग्धं वेणोरेवंविधं वाद्यम् ॥ १२ ॥
एवमेतत्स्वरकृतं[4] विज्ञेयं गानयोक्तृभिः[5] ।
अत ऊर्ध्वं प्रवक्ष्यामि तालवाद्यविकल्पनम्[6] ॥ १३ ॥

इति भारतीये नाट्यशास्त्रे शु(सु?)षिरातोद्याधिकारो नामाध्यायस्त्रिंशत्तमः[7] ।

---

एकत्रिंशोऽध्यायः ।

वाद्यं तूर्यायनं प्रोक्तं[8] कलापातलयान्वितः ।
कला[9][काल]स्तस्य[10] प्रमाणं हि विज्ञेयं तालयोगतः ॥ १ ॥
या लौकिकी कला काष्ठा निमेषश्च[11] स्मृतो बुधैः ।
न सा तालकला ज्ञेया ह्यन्यैषा तालजा कला ॥ २ ॥
[12]निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् ।
ततः कलाकालकृतो लय इत्यभिसंज्ञितः ॥ ३ ॥
त्रयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः ।
यस्तत्र तु लयो[13] मध्यस्तत्प्रमाणकला स्मृता[14] ॥ ४ ॥
त्रिविधा सा च विज्ञेया त्रिमार्गनियमैर्बुधैः[15] ।
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा[16] द्विगुणा स्मृता ॥ ५ ॥
चतुर्गुणा दक्षिणे[17] स्यादित्येवं त्रिविधा कला ।
[18]कलाकालप्रमाणेन ताल इत्यभिसंज्ञितः ॥ ६ ॥

---

१. '॰विच्छित्तं' का. २. 'विधिवत्' इति नास्ति का. पुस्तके । ३. 'मन्दं विधिललितमधुरं वेणोरेव स्मृतं वाद्यम् ।' का. ४ 'सुषिरस्वरकृतं' का. ५. 'वंशयोक्तृभि.' का. ६. 'घनातोद्यविकल्पनम्' का. ७. 'सुषिरातोद्यविधानं नाम त्रिंशोध्यायः' का. [ निमेषा पञ्चमात्रा स्यात् मात्रायोगात् कला स्मृता ] का. ८. 'ताले घन इति प्रोक्तः' च. ९. 'कलापात' च. १०. 'कालस्तस्य' च. 'कालस्य तु प्रमाणं वै' का. ११. 'निमेषाश्च' का. १२. 'निमेषा॰ पञ्चमात्रा स्यात्' मात्रायोगात् कला स्मृता ।' इति समधिकमत्र च-पुस्तके. १३. 'मन्दोऽथ लय.' का. १४. 'भवेत्' का. १५. 'त्रिमार्गा नियता' का. १६. 'वार्तिके द्विगुणा तु सा' च. १७. 'दक्षिणा' का. १८. पद्यार्धमेतत् पञ्चमश्लोकस्य पूर्वार्धरूपमासीत् प्रथमसंस्करणे ग्रन्थस्यास्य ।

त्र्यस्रश्च चतुरस्रश्च स तालो द्विविधः स्मृतः।
द्विविधस्यापि तालस्य त्वेका प्रकृतिरिष्यते ॥ ७ ॥
तथा योनिद्वयं (तालौ) चान्या(स्त)कीर्त्यमानं निबोधत।
चच्चत्पुटस्तु विज्ञेया (यः) (ये) तथा चाच (प) पुटा(टो) बुधैः ॥८॥
चतुरस्रस्तु विज्ञेयस्तालश्चञ्चत्पुटो बुधैः।
त्र्यस्रश्चञ्चत्पुटश्चैव गुरुलघ्वक्षरान्वितः ॥ ९ ॥
आदौ द्वे गुरुणी यस्य लघ्वेकं प्लुतमेव च।
अक्षराणां निवेशेन स तु चच्चत्पुटस्तदा ॥ १० ॥
आदौ गुर्वक्षरं यत्र अन्ते लघुनि चैव हि।
त्र्यस्रः स खलु विज्ञेयस्तालश्चञ्चत्पुटाश्रयः ॥ ११ ॥
संनिपातस्ततः शम्या तालः शम्यामथापि वा।
संनिपातादिको ज्ञेयः शम्यादिश्च तथापरः ॥ १२ ॥

---

१. 'चतुरस्रश्च त्र्यस्रश्च तालो द्विविध एव हि।' का. २. 'त्वेका' काशीमुद्रितपुस्तके नास्ति। ३. 'चास्य कीर्त्यमान' का. ४. 'चच्चत्पुटस्तु विज्ञेयस्तथा चापपुटोऽपि चा' का. ५. 'चतुष्कलोऽथ द्विकलस्तालो यस्मात् प्रवर्तते' इत्यधिकमत्र का॰ पुस्तके। ६. 'चच्चत्पुटो' का. ७. 'काशीमुद्रितपुस्तके तु—

'प्रथमगुरुणी कृत्वा लघु चान्त्यं प्लुतं तथा।
कुर्यात् चच्चत्पुटस्यैव बुधश्चापपुटस्य तु।
आद्यं गुर्वक्षरं ज्ञेयं लघुनी गुरु चैव स।'

इति पाठो नवमश्लोकोत्तरार्धदशमश्लोकयोः स्थाने।
८. 'तालश्चापपुटो भवेत्' ९. का पुस्तके तु समधिकावनैव—

'अनयोर्मिश्रभावाच्च मिश्रस्तालः प्रकीर्तितः।'
षट्पिता पुत्रकश्चैव पञ्चपाणि स चेष्यते ॥
श्लोकैरभिनिष्पन्नः सप्तलघुगुरुप्लुतैः ॥

सप्तदशाष्टादशौ श्लोकौ।
१०. 'समासयोगात्तालोऽयं त्रिविधः परिकीर्तितः।
शम्यातालौ द्विरभ्यस्तौ तालः शम्या तथापि वा ॥
संनिपातादिकान्येयः शम्यादिश्च तथापरः ॥'

इति सार्धश्लोकोऽस्ति का॰पुस्तकेऽस्य पद्यस्य स्थाने।

[1]तालादिश्च त्रिभिर्भेदैः पुनश्चच्चपुटो भवेत् ।
शम्यादिकस्तु विज्ञेयस्तज्ज्ञैरासारि[2][3]तादिषु ॥ १३ ॥
तालादिकस्तथा प्रोक्तो विद्वद्भिः पाणिकादिषु ।
[4]चच्चत्पुटस्य ये भावाः संनिपातादयस्तु ये ॥ १४ ॥
त एव भेदा विज्ञेया बुधैश्चा[5]च्चपुटस्य च ।
[6]संनिपातादिकः स्वस्य बलवानेतरस्तथा ॥ १५ ॥
[7]षट्कलोऽष्टकलश्चैव तालो ह्यस्मात्प्रवर्तते ।
द्विप्रकारः पुनश्चायं निःशब्दः शब्दवांस्तथा ॥ १६ ॥
अनयोर्मिश्रभावं तु मिश्रस्तालः प्रकीर्तितः ।
शम्यातालप्रवेशेन अन्योन्ये[8]पि(?) (न्यस्तोऽन्योऽपि ?) विधीयते १७
षट्पितापुत्रककृतः पञ्चपाणिरुदाहृतः ।
आद्यं प्लुतं द्वितीयं च लघु यत्राक्षरं भवेत् ॥ १८ ॥
तृतीयं च चतुर्थं च गुरू[9]णि (रुणी ?) पञ्चमं[10] लघु ।
प्लुतान्तः षट्पितापुत्रो गुरुलाघवसंयुतः ॥ १९ ॥
पञ्चपाणिः स विज्ञेयः षट्पातस्तु षडक्षरः ।
[11]संनिपातस्ततस्तालः शम्या तालस्तथैव च ॥ २० ॥
शम्या चैव हि तालश्च षट्पातस्तस्य कीर्तितः ।
तालादिरुयस्तभेदोऽन्ये[12]ः संपक्केष्ट[13]कसंज्ञितः ॥ २१ ॥

---

१. 'तथा तालादिभिर्भावैर्युग्मच्चत्पुटो भवेत् ।' का. २. 'संनिपातादिके नाट्ये चतुरस्रो भवेदयम् ।' इत्यधिकमत्र का-पुस्तके । ३. '०ासादिदेषु च' का. ४. 'चच्च-त्पुटस्य ये भेदाः संनिपातादयस्त्रयः ।' का. ५. 'चापपुटे पृथक्' का. ६. 'संनिपाता-दिकस्तेस्य बलवानितरेऽपि च ।' का. ७. 'षोडशमेतत् पद्यमथ सप्तदशश्लोकपूर्वार्धं च का-पुस्तके न स्तः । ८. 'न्यस्तोऽन्येऽपि' का. ९. 'गुरुणी' का. १०. 'पद्यार्धमेतत् का-पुस्तके नास्ति ।

११. 'अस्यादौ संनिपातः स्यात्तालशम्येतरः परः ।
तालशम्ये च तालश्च षट् पाताश्च प्रकीर्तिताः ॥' इति का-पुस्तके ।

१२. '०भेदेऽन्य.' का. १३. 'संपक्वेष्टाकसंज्ञितः' का.

गुरुपञ्चाक्षराद्यन्तप्लुतमात्रासमन्वितः ।
त्र्यस्रं सर्वगुरुं कृत्वा निष्कामं सर्वत्र योजयेत् ॥ २२ ॥
शम्याद्वयं ततस्तेषु उद्घट्टः कथितो बुधैः ।
व्युदस्य युग्मतो ये च पञ्चताला भवन्ति हि ॥ २३ ॥
मिश्रा गीताङ्गसंयुक्ता ज्ञेया क्षुद्रद्रकादयः ।
कलाः पञ्च तथा सप्त पुनर्नव च कीर्तिताः ॥ २४ ॥
दशैकादश चैवैते संकीर्णाः समुदाहृताः ।
न ह्येषामुपयोगोऽस्ति सप्तरूपे ध्रुवासु च ॥ २५ ॥
प्रवृत्तादिषु कर्तव्या एते भूयः प्रयोक्तृभिः ।
यथाक्षरोऽथ द्विकलस्तथैवं च चतुष्कलः ॥ २६ ॥
त्रयो भेदा हि तालस्य लस्यार्थं(?) ( द्विगुणा ? ) द्विगुणाः स्मृताः ।
चतुरस्रस्त्रिभिर्भेदैस्तालस्तु परिकीर्तितः ॥ २७ ॥
चतुःकलो ह्यष्टकलः कलाः षोडश चैव हि ।
त्र्यस्रतालस्तु षड्भेदस्त्रिकलः षट्कलस्तथा ॥ २८ ॥
कला द्वादश चैवास्याश्चतुर्विंशतिरेव च ।
चत्वारिंशचथाष्टौ च तथा षण्णवतिः कलाः ॥ २९ ॥
तालो नवविधश्चायं समासात्परिकीर्तितः ।

---

१. 'का-पुस्तके तु—

'गुरुसर्वाक्षरो यस्तु प्लुतादन्तः प्रकीर्तितः ।
सनिपातस्ततः शम्या तालशम्यैकतालक- ॥'

इति प्रथमस्य श्लोकार्धस्य स्थाने ।

२. 'तत्र' का. ३. 'ततस्तेष उद्घट.' का. ४. 'इतोऽग्रे सार्धपद्यद्वयी का पुस्तके नास्ति । ५. 'एवमेककलो ह्येयः शुद्धश्च[ प्र? ]त्पुटादिकः । का. ६. 'तथा चैव' का. ७. 'द्विगुणा द्विगुणा-' का. ८. 'कलषोडशकः पुनः' का. ९. 'त्र्यस्रस्तालस्तु' का.

१०. 'कला द्वादश चैवास्याश्चतुर्विंशतिरेव च ।
चत्वारिंशत्तथाष्टौ च तथा षण्णवतिः कला ॥' इति का.

११. 'नवविधि-' का. १२. 'श्चतुरस्रः परिकीर्तितः' का.

तत्र चावापनिष्क्रामौ विक्षेपोऽथ प्रवेशनम् ॥ ३० ॥
चतुर्द्विकल इत्येवं निःशब्दः परिकीर्तितः ।
शम्यातालो ध्रुवश्चैव संनिपातस्तथापरे ॥ ३१ ॥
इतिशब्देन संयुक्तो विज्ञेयस्तु चतुर्विधः ।
एतेषां चैव वक्ष्यामि हस्ताङ्गुलिविकल्पनम् ॥ ३२ ॥
[ लक्षणं च प्रमाणं च यथावदनुपूर्वशः । ]
उत्तानाङ्गुलिसंकोच आला(वा ?)प इति संज्ञितः ।
निष्क्रमोऽधोगतस्य(तानां?) स्यादङ्गुलीनां प्रसारणात् ॥ ३३ ॥
तस्य दक्षिणतः क्षेपो विक्षेप इति संज्ञितः ।
निवर्तनं च हस्तस्य प्रवेशोऽधोमुखस्य तु ॥ ३४ ॥
यदा चतुष्कलो योगस्तदा त्वेष विधिः स्मृतः ।
निष्क्रमश्च प्रवेशश्च द्विकले(लौ ?) परिकीर्तितौ ॥ ३५ ॥
एषामन्तरपातास्तु पातसंज्ञाः प्रकीर्तिताः ।
संहव्यहस्तनिपातस्तु सम्यन(ता ?)लश्च वामतः ॥ ३६ ॥

१. का-पुस्तके तु—
'द्विप्रकारस्त्वयं तालो निःशब्दः शब्दवांस्तथा ।
प्रयोगं द्विविधं चास्य कीर्त्यमानं निबोधत ॥
तत्रावापोऽथ निष्क्रामो विक्षेपश्च प्रवेशकः ।
चतुर्विकल्पं इत्येवं निःशब्दः कथितो बुधैः ॥'.
२. 'चात्माथ' क-ख. ३. 'ध्रुवश्चेति' का. ४. '°परः' का. ५. 'च' का. ६. 'चतुर्विधम्' का. ७. '°मथ' का. ८. एतदर्धमधिकमत्र का. पुस्तके । ९. 'सर्वाङ्गुलिसमाक्षेप आवाप इति संज्ञितः ।' का. १०. '°धोगतः सव्यादङ्गुलीनां-प्रसारणम् ।' का. ११. 'क्षेपात् विक्षेपः परिकीर्तितः ।' का. १२. 'च' का. इतोऽग्रे का. पुस्तके—
'कृत्वाङ्गुलीनामाक्षेपं निष्क्रामं च भवेदथ ।
विक्षेपश्च पुनः कार्यः पुनश्चैव प्रवेशनम् ॥' इत्यधिकमत्र ।
१३. 'भवेत्' का. १४. का. पुस्तके तु—
'शम्यातालश्च विज्ञेयः संनिपातस्तथैव च ।
शम्या दक्षिणहस्तः स्यात्तालः पातस्तु वामतः ॥'
इति पूर्णः श्लोकोऽर्धस्यास्य स्थाने ।

हस्तयोस्तु समः पातः संनिपात इति स्मृतः ।[1]
कला[2] या त्रिविधा प्रोक्ता तस्याः पातो ध्रुवः स्मृतः ॥ ३७ ॥
यथाक्षरस्य तालस्य स रा (तु ?) गुर्वक्षरे[3] स्मृतः ।
यथाक्षरकृतैः पातैस्ताले[4] ज्ञेयो यथाक्षरैः[5] ॥ ३८ ॥
गुर्वक्षरैस्तु[6] विश्लिष्टैः स नैव[7] (एव ?) द्विकलः स्मृतः[8] ।
द्विर्भावो[9] द्विकलस्यात्र[10] विज्ञेयस्तु चतुष्कलैः[11] ॥ ३९ ॥
त्र्यस्रश्च चतुरस्रश्च षट्कलोऽष्टकलस्तथा ।
ध्रुवाणां तु भवेत्तालैस्तं[12] मे[13] वक्ष्यामि तत्त्वतः ॥ ४० ॥
कनिष्ठाङ्गुलिनिष्कामः स(श?)म्या चैवं[14] ततो भवेत् ।
कनिष्ठानामिकाभ्यां तु निष्कामोऽतो[15] विधीयते ॥ ४१ ॥
ततश्च तालैः[16] कर्तव्या (व्यः ?) शम्या चैव तु पञ्चमी ।
प्रवेशो षष्टमो[17] (मः ?) षष्ठः कर्तव्यस्तर्जनीकृतः ॥ ४२ ॥

---

१. 'ध्रुवं तु मात्रिकं पातः रागमार्गप्रयोजक- ।' इत्यधिकमत्र । २. 'कलायास्त्रिविधा [?] प्रोक्ता तासां पातो ध्रुवः स्मृतः ।' का. ३. 'गुर्वक्षरः' का. ४. 'तालो' का. ५. 'यथास्थितः' का. ६. 'च' का. ७. 'एव' का. ८. 'भवेत्' का. ९. 'द्विर्भावो' का. १०. 'द्विकलस्यैव' का. ११. अत्र का. पुस्तके—

'यदाक्षरकृतैः पातैः सर्वैरेव प्रकीर्तिताः ।
चचत्पुटस्य विज्ञेयस्तथा चापपुटस्य च ॥
पञ्चपाणेश्च विहिता भेदा ह्येवे त्रयः स्मृताः ।
ष्युदस्य युगराजं तु पञ्चताला भवन्ति हि ॥
मिश्रा गीताङ्गसंयुक्तात् ज्ञेया हुडुक्कादयः ।
कला[:] पञ्च तथा सप्त पुनर्नव च कीर्तिताः ॥
दश चैकादशैते च संकीर्णाः समुदाहृताः ।
न ह्येषा सुप्रयोगोऽस्ति सप्तरूपे ध्रुवास्वपि ॥
प्रवृत्तादिषु कर्तव्या एते गानप्रयोक्तृभिः ॥' इत्यधिकः पाठः ।

१२. 'तालं' का. १३. 'संप्रवक्ष्यामि' का. १४. 'शम्याथैव' का. १५. 'निष्कामो तो (?)' का. १६. 'तालस्तु कर्तव्य-' का. १७. 'मध्यमाङ्गुष्ठे' का.

निष्काम[.?] संनिपातान्ते नित्यमष्टकलो भवेत् ।
एष युग्मे कलापातविकल्पोऽङ्गुलिभिः कृतः ॥ ४३ ॥
कनिष्ठाङ्गुलिनिष्कामः प्रथमे तु कलो(ला ?) भवेत् ।
शम्यापातो द्वितीया च तृतीया ताल एव च ॥ ४४ ॥
शम्या तत्र चतुर्थी च पञ्चमी तर्जनीक्रमात् ।
षष्ठ्यां संनिपातः स्यादेष वै षट्कलो विधिः ॥ ४५ ॥
एष त्र्यस्रे कलापाते विकल्पोङ्गुलिभि कृतः ।
कनिष्ठाङ्गुलिनिष्कामे प्रवेशश्च तथा भवेत् ।
कनिष्ठानामिकास्थाने तालो ज्ञेयस्तृतीयके ॥ ४६ ॥
शम्यापातश्चतुर्थी स्यान्निष्कामो मध्यमाकृतः ।
षष्ठतालस्तथा ज्ञेयो निष्कामस्तर्जनीकृत. ।
शम्याष्टमी ततस्तालो नवमी तु कला स्मृता ॥ ४७ ॥
कनिष्ठिकां भवे(दे ?)शस्तु दशमी तु कला भवेत् ।
निष्कामश्चैव तर्जन्यास्तदनन्तरमिष्यते ॥ ४८ ॥
संनिपातस्तथांते(न्ते?) च कलाद्वादशकं भवेत् ।
एषतो वांत(त्त्वावाप ?) विक्षेपव्यवधानैश्च पण्डितैः ।
विधिश्चतुष्कलो ज्ञेयः प्रागुक्ताङ्गुलिभि कृतः ।
द्विकलश्चतु'कलश्च पादभागः प्रकीर्तित. ॥ ४९ ॥
चत्वारः पादभागाश्च मात्रे (?) हि परिनाट्यते ।
चञ्चत्पुटस्य तालस्य तथा चच्चपुटस्य च ॥ ५० ॥

१ 'निष्काम संनिपातेऽन्त्ये' का. २ कलोपेतो' का. ३ 'विकल्पाङ्गुलिभि ' का. ४. 'प्रवेशश्च तथा भवेत्' का. ५ का. पुस्तकेऽत्र—'कनिष्ठानामिकास्थाने ततस्तालस्तृतीयक । शम्यातालश्चतुर्थी च निष्कामो मध्यमा कृत । कनिष्ठाङ्गुलिनिष्काम प्रथमानुकल्पो भवेत् ॥' इत्यधिकं सार्धं पद्यम् । ६. 'द्वितीये तु तृतीये' का. ७. 'तु' का. ८. 'षष्ठस्य' का. ९. 'एष त्र्यस्रे' इत्यादिश्लोकद्वयी का. पुस्तकेऽत्र नास्ति । १०. 'षष्ठस्तालस्ततो ज्ञेयो' का. ११ 'प्रदेशस्तु' का. १२. 'च' का. १३. 'तर्जन्या' का. १४. 'तथान्ते च' का १५. 'कलाद्वादशके विधे ' का. १६ 'एष त्ववाप' का. १७. 'व्यवधानेन' का. १८. एतदर्धमयामिमं सार्धं पद्यं च का. पुस्तके न स्त. ।

पञ्चपाणेश्च विज्ञेया भेदा ह्येते पृथक् पृथक्।
एवमेष[1] मया तालः समासात् परिकीर्तितः[2] ॥ ५१ ॥
आसारिते वर्धमाने गीतेष्वपि[3] हि यः स्मृतः।
[4]अथासारितकानां तु संप्रवक्ष्यामि लक्षणम् ॥ ५२ ॥
[5]भेदो च( द्श्च ? )च्चत्पुटस्यादौ तथा गुरुलघुप्लुतैः।
पञ्चपाणिं ततः कुर्याद्द्विरभ्यस्तं[6] प्रयोगवित् ॥ ५३ ॥
यथाक्षरं तु सर्वत्र[7] यथावद्विनिवेशयेत्।
शम्यातालः पुनश्चैव शम्यातालमथापि च[8] ॥ ५४ ॥
अधिक्षरे संनिपातं[9] पञ्चबाण( पाणे ? )श्च[10] यो भवेत्।
तालं [11]शम्यां च तालं च शम्यातालो ततः परम्।
एष एव द्वितीयेऽपि पञ्चबाणो ( पाणौ ? ) [12]विधिः स्मृतः ॥५५॥
द्रुतं[13] छेदेऽपि तस्येष्टः संनिपातः प्रयोक्तृभिः।
एवं यथाक्षरं ज्ञेयं कनिष्ठासारितं बुधैः ॥ ५६ ॥
[14]यथाक्षरस्याक्षरैश्च तालपातान्निबोधत।
चकारे तु भवेच्छम्या द्वितीये [15]तोल एव च।
प्रकारे तु भवेच्छम्या टकारे ताल एव च ॥ ५७ ॥
एवं चच्चत्पुटे[16] ज्ञेयं पञ्चपाणेरतः[17] परम्।
[18]षडारे संनिपातः स्यात् विकारे ताल एव च ॥ ५८ ॥
तकारे तु भवेच्छम्या एकारे ताल एव च।

---

१. 'एवमेव' का. २. 'समुदाहृतः' का. ३. 'गीताङ्गेषु च यः स्मृतः' का. ४. एतदर्धं का. पुस्तके नास्ति। ५. 'ज्ञेयं चच्चत्पुटस्यादौ कृत्वा तु गुरुलाघवम्।' इति का. ६. 'द्विरभ्यस्तप्रयोगवित्' का. ७. 'पूर्वेन' का. ८. 'वा' का. ९. 'संनिपातः' का. १० 'पञ्च पाणे(णे ? )श्च योजयेत्' का. ११. 'शम्यातालं च तालं च शम्यातालमतः परम्' का. १२. 'पञ्चपाणौ' का. १३. 'द्रुतस्यान्ते कृतस्येष्टः' का. १४. 'यथाक्षरं चाक्षरैश्च वामपातान्निबोधत।' का. १५. 'द्वितीयस्ताल' का. १६. 'एवं चचत्पुटो ज्ञेयः' का. १७. 'पञ्चपाणिरतः परम्' का. १८. 'पडारे संनिपातः' इत्यादि पद्यद्वयं का. पुस्तके नास्ति।

त्रकारे तु भवेच्छम्या ककारे ताल एव च ॥ ५९ ॥
द्वितीयेऽप्येवमेव स्यात् सनिपातस्ततः परम् ।
गुर्वक्षराणां विश्लेषादेवमेव तु मध्यमम् ॥ ६० ॥
विश्लेषितानामेषां तु द्विर्भावे या कला भवेत् ।
पातान्ते सा प्रयोक्तव्या यथावदनुपूर्वशः ॥ ६१ ॥
द्विर्भावान्मध्यमस्येव ज्येष्ठमित्यभिधीयते ।
मध्यमस्य विधानेन न्यसेच्च द्विगुणाः कलाः ॥ ६२ ॥
संनिपातैर्निपातैश्च तेषां वस्तु प्रकीर्तितम् ।
समानलक्षणाश्चैव गदतो मे निबोधत ॥ ६३ ॥

---

१. 'विक्षेपात्' का. २. पद्यमेतत् का. पुस्तके नास्ति । ३. 'विभावो मध्यमस्येव' का. ४. 'ज्येष्ठ इत्यभिधीयते' का. ५. 'मध्यमव्यवधानेन' का. ६. 'संनिपातनिपातैश्च' का. ७. एतदर्धं का. पुस्तके नास्ति । ८. का. पुस्तकेऽत्र—'अत परं प्रवक्ष्यामि लयान्तरितलक्षणम् ।' इत्यादिश्लोकादि 'मुखं प्रतिमुखं चैव' इत्यादि ८५ श्लोकपर्यन्त पाठस्थाने १२५ श्लोका कुहचन कुहचन सवदन्तोप्यधिकास्ते यथा—

'अत परं प्रवक्ष्यामि लयान्तरितलक्षणम् ।
तालो यस्य कनिष्ठ. स्यात् स लयान्तरितः स्मृत. ॥
कला कलान्तरकृत्ता केवलं तु कलान्तरम् ।
अयमेव तालयोगो विशेषसिद्धिस्तु पूर्वनिर्दिष्ट ॥
भवन्ति हि लयान्तरिते चन्दाद् भेदो लयाश्चेव ।
द्विगुणोक्षरसयोगादन्यमार्गप्रयोजनात् ॥
वृत्तेर्विशिष्टकलाच्च लयादन्यलयान्तरम् ।
एवं तालविधानं तु कनिष्ठस्ते लयान्तरे चैव ॥
मध्यासारितताल पुनरेव सम्प्रवक्ष्यामि ।
द्विगुणान्तरस्वरया हस्वेन तु मध्यम विधातव्यम् ॥
प्रस्तारेण कलना शम्या तालान्तरोपेतम् ।
उत्तरताल प्रथमे वस्तुन्यादौ कलात्रय सशल्ला ॥
कार्या मध्ये नित्यं द्वौ परिवृत्तौ च सपूर्णौ ।
पूर्वं शम्या कार्या द्विकलस्ताल क(ला?)द्वये गम्या ॥
पुनरेककलस्तालस्त्रिकलस्य सन्निपातश्च ।
त्रिकलोऽथ पुनस्ताल शम्ये(म्यै?)ककलद्वये तालम् ॥

द्विकला कार्याणामनुस्मृतिरुदाहृता।
नैवासने शयने धृतिमुपलभेत स्वकर्मणि विहीना॥
तच्चित्तोपहृत्वात् तृतीयमेवं प्रयुञ्जीत।
अङ्गप्रत्यङ्गलीलाभिः या चेष्टाहसितेक्षितैः॥
नास्त्यन्यः सदृशस्तेनेत्येवंस्मात् गुणकीर्तनम्।
गुणकीर्तनोल्लसनैरास्रखेदप(प्र?)मार्जनाद्यपि॥
दूत्यविरहविसंभैरभिनययोगश्चतुर्थे तु।
आसने शयने चापि न तुष्यति न हृष्यति॥
नित्यमेवोत्सुका च स्यात् उद्वेगस्थानमेव तत्।
चिन्तानिःश्वासखेदैश्च हृत्तापाभिनयेन च॥
कुर्यात्तदेवमत्यर्थमुद्वेगाभिनयेन च।
इहास्थित इहासीन इह चोपगतो मया॥
इति तैस्तैर्विलपितैः विलापस्त्वभिदर्शितः।
उद्विग्नात्यर्थमौत्सुक्यात् रत्या चापि विलापिनी॥
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता।
तत्स्वभयकथायुक्ता सर्वावस्थागतापि हि॥
पुंसः प्रद्वेषिता चैव स्यादुन्मादः प्रकीर्तितः।
विह्वलनिमिषदृष्टिर्दीर्घं निःश्वसिति गच्छति ध्यानम्॥
रोदिति विहारकाले नाट्यमिदं स्यात्तदोन्मादे।
समदनार्थसम्भोगैः काम्यैः सप्रेक्षणैरपि॥
सर्वैर्निराकृतैः पश्चात् व्याधिः समुपजायते।
मुह्यति हृदयं दह्यत्यङ्गं शिरसश्च वेदना तीव्रा॥
न धृतिं चाप्युपलभते ह्यष्टममेवं प्रयुञ्जीत।
पृष्टा न किंचित् प्रब्रूते न शृणोति न पश्यति॥
तूष्णीं हा कष्टभावा च नष्टचित्ता जडा स्मृता।
अकाण्डे दत्तहुंकारा तथा प्रशिथिलाङ्गिका॥
श्वासप्रम्लानना चैव जडताभिनयो भवेत्।
प्रतीकारैः कृतैः सर्वैर्यदि नास्ति समागमः॥
कामाग्निना प्रदीप्ताया भवेत्तु मरणं तु तत्।
एवं स्थानानि कार्याणि कामतन्त्रं समीक्ष्य तु॥
अप्राप्तौ यानि कामस्य वर्जयित्वा तु नैधनम्।
विविधैः पुरुषोऽप्येवं विप्रलम्भानुपूर्वकैः॥

भावैरेतानि कामस्य नानारूपाणि कारयेत् ।
एवं भावयमानानां नृणां स्त्रीणामथापि वा ॥
सामान्यगुणयोगेन युञ्जीताभिनयं बुधः ।
चिन्तानि श्वासखेदेन देहस्यायासनेन च ॥
तथानुगमनाच्चापि तथा चैव निरीक्षणात् ।
आकाशवीक्षणाच्चापि तथा दीर्घप्रभाषणात् ॥
स्पर्शनान्मोदनाच्चापि तथा चोपश्रयाश्रयात् ।
एभिर्नानाश्रयोत्पन्नैर्विप्रलम्भसमुद्भवैः ॥
कामस्थानानि सर्वाणि भूयिष्ठं सम्प्रयोजयेत् ।
वासोभूषणगन्धांश्च शय्यापुपवनानि च ॥
भूयिष्ठं दह्यमानो हि शीतलानि निषेवते ।
प्रसह्यमानः कामार्तो बहुस्थानसमर्दितः ॥
प्रेषयेत् कामतो दूतीमात्मावस्थाप्रदर्शिनीम् ।
सन्देशं चैव दूत्यास्तु प्रदद्यान्मदनाश्रयम् ॥
इयं तस्या व्यवस्थेति निवेद्य प्रश्रयादिभिः ।
अथावेदितभावार्थैः स्त्युपायं विचिन्तयेत् ॥
अयं विधिर्विधानज्ञैः कार्यः प्रच्छन्नकामिते ।
विधिं राजोपचारस्य पुनर्वक्ष्यामि तत्त्वतः ॥
अभ्यन्तरगतान् सम्यक् कामतन्त्रैः समुत्थितान् ।
सुखदुःखकृतान् भावान् नानाशीलसमुत्थितान् ॥
यान्यान् प्रकुरुते राजा तांस्ताल्लोकोऽनुवर्तते ।
न दुर्लभा नृपाणां तु स्त्रियो ह्याज्ञाकृता गुणाः ॥
दाक्षिण्यात्तु समुद्भूतः कामो रतिकरो भवेत् ।
बहुमानेन देवीनां वल्लभानां भयेन च ॥
प्रच्छन्नकामितं राज्ञः कार्यं परिजनं प्रति ।
यद्यप्यस्तु नृपाणां तु कामतन्त्रमनेकधा ॥
प्रच्छन्नकामितं यत्तु तद्वै रतिकरं भवेत् ।
यद्वामाभिनिवेशित्वं यतश्चैव निवार्यते ॥
दुर्लभत्वं च नार्याः सा कामस्य रतिः परा ।
राज्ञामन्तःपुरजने दिवासम्भोग इष्यते ॥
वाह्योपचारो यत्रैव स रात्रौ परिकीर्तितः ।
परिपाट्यां फलार्थे वा नवप्रसव एव वा ॥

दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः।
उचिते वासके स्त्रीणामृतुकालेऽपि वा नृपैः॥
द्वेष्यानामथवेष्टानां कर्तव्यमुपसर्पणम्।
तत्र वासकशय्या वा विरहोत्कण्ठितापि वा॥
स्वाधीनभर्तृका चैव कलहान्तरितापि च।
खण्डिता विप्रलब्धा च तथा प्रोषितभर्तृका॥
तथाभिसारिका चैव इत्यष्टौ नायिकाः स्मृताः।
उचिते वासके या तु रतिसम्भोगलालसा॥
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका।
अनेककार्यव्यासङ्गाद् यस्या नागच्छति प्रियः॥
अनागमनदुःखार्ता विरहोत्कण्ठिता तु सा।
सुरतैश्चरितैर्बद्धो यस्याः पार्श्वे तु नायकः॥
सामोदगुणसम्प्राप्ता भवेत् स्वाधीनभर्तृका।
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्छति प्रियः॥
सामर्षवशसम्प्राप्ता कलहान्तरिता भवेत्।
व्यासङ्गादुचिते यस्या वासके नाऽऽगतः प्रियः॥
तस्यानागमदुःखार्ता खण्डिता साभिधीयते।
यस्या दूती प्रियं प्रेष्य दत्त्वा सङ्केतमेव वा॥
नागतः कारणेनेह विप्रलब्धा तु सा स्मृता।
नानाकार्यार्थसम्पत्तेर्यस्या विप्रोषितः प्रियः॥
सारूढालकशोभान्ता भवेत् प्रोषितभर्तृका।
हित्वा लज्जां समाकृष्टा मदनेन मदेन वा॥
अभिसारयते कान्तं सा भवेदभिसारिका।
आस्ववस्थासु विज्ञेया नायिका नाटकाश्रयाः॥
एतासां चैव वक्ष्यामि यथा योज्यं प्रयोक्तृभिः।
चिन्तानि श्वासखेदेन हृद्दाहाभिनयेन वा॥
सखीनां सम्प्रलापैश्च आत्मावस्थाविलोकनैः।
ग्लानिदैन्याश्रुपातैश्च रोषस्यागमनेन च॥
निर्भूषणमृजात्वेन दुःखेन रुदितेन च।
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा॥
तथा प्रोषितकान्ता च भावैरेवं प्रयोजयेत्।
विचित्रितोज्ज्वलवेषा तु प्रमदोद्योतिताननाः॥

उदीर्णशोभाऽतिशया भार्या स्वाधीनभर्तृका ।
वेश्यायाः कुलजातायाः प्रेष्याया वाऽथवा नृपैः ॥
एभिर्भावविशेषैस्तु कर्तव्यमभिसारणम् ।
समागदितयथारा गच्छेत्प्रेष्या समुद्धतम् ॥
गत्वा सा पदवि व्यक्तं पश्येत्सुप्तं प्रियं ततः ।
अनेन तु प्रकारेण कुर्याद्वै प्रतिबोधनम् ॥
निर्भरस्तनपरः प्रायस्तथा स्वपनपेशलम् ।
निष्ठुरं मधुरं चैव सखीनामपि जल्पनम् ॥
नवप्रथमप्रवृत्तायाः क्रुद्धाया वा समागमे ।
सापदेशैरुपायैस्तु वासकं प्रतियोजयेत् ॥
नानालङ्कारवस्त्राणि गन्धमाल्यानि चैव हि ।
नित्यं सुगन्धयुक्तानि निषेवेत मुदान्विता ॥
न तथा भवति मनुष्यो मदनवशः कामिनीमलभमानः ।
द्विगुणोपचारहर्षो भवति यथा सङ्गतः प्रियया ॥
विलासभावेङ्गितवाक्यलीला विशेषमाधुर्यगुणोपपन्ना ।
परस्परप्रेमनिरीक्षितेन समागमः कामगतस्तु कार्यः ॥

वासोपचारं कृत्वैव नायिका नायकागमम् ।
शृणुयान्नायिका घोषं तत्प्रतीक्षासनस्थिता ॥
श्रुत्वा तु नायिका घोषं नायकागमविश्रवा ।
वेपन्ती सन्नहृदया तोरणाभिमुखी भजेत् ॥
वामेन तोरणं गृह्य कवाटं दक्षिणेन तु ।
हस्तेनाधोमुखीभूय प्रतीक्षेत प्रियागमम् ॥
शङ्काचिन्ता भयश्चैव प्रकुर्यात् कारणाश्रिता ।
अदृष्ट्वा रमणं नारी विषण्णा च क्षणं भवेत् ॥
दीर्घश्चैव विनि श्वस्य आस्यश्चैव विपानयेत् ।
सन्नच हृदयं कृत्वा विमुञ्चेदङ्गमासने ॥
व्याक्षेपात् विमृशेच्चापि नायकागमनं प्रति ।
तैस्तैर्विचारणैश्चैव शुभाशुभसमन्विते ॥
गुरुकार्यैश्च मित्रैर्वा मन्त्रिणां राज्यचिन्तया ।
अनुबद्ध प्रिय किंतु धृतो वल्लभयापि वा ॥
आकारं दर्शयेदेवं शुभाशुभसमुत्थितम् ।
निमित्तैरात्मसस्थैस्तु स्फुरितै स्पन्दितैस्तथा ॥
शोभनेष्वथ कार्येषु निमित्तं वामत स्त्रियः ।
अनिष्टेष्वथ सर्वेषु निमित्त दक्षिणं भवेत् ॥
सव्यनेत्रललाट च भ्रूरथोष्ठं तथैव च ।
ऊरुबाहुस्तनं चैव स्फुरेद्यदि समागम ॥
अथोऽन्यथास्पन्दमानमनिष्टं चापि निर्दिशेत् ।
दर्शने दुर्निमित्तस्य मोहं गच्छेत् क्षणं तत॰ ॥
अनागमे नायकस्य हस्तो गण्डाश्रितो भवेत् ।
प्रसाधनेऽप्यवज्ञानं रोदनच समाचरेत् ॥
ततश्च शोभनं पश्येन्निमित्ते नायकागमे ।
सूच्यो नायिकयाऽऽसन्नो गन्धाघ्राणेन नायक ॥
दृष्ट्वा चोत्थापनं हृष्टा प्रत्युद्गच्छेत्तु नायक. ।
तत कान्तं निरीक्षेत प्रहर्षोत्फुल्ललोचना ॥
सखीहस्तार्पितकरा कृत्वा स्थानकमायतम् ।
दर्शयेत्तु तत॰ कान्तं सचिह्नं सरसमणम् ॥
यदि स्यादपराधस्तु ततस्तैरुपक्रमैः ।
उपालम्भैस्तैर्वाक्यैरुपालभ्यस्तु नायक॰ ॥

मानावमानसम्मानैरवहित्थैर्यथाक्रमम् ।
अवहित्थप्रयोगेषु प्रच्छन्नवचनेषु च ॥
हासे कुतूहले चैव सम्भ्रमे व्यसने तथा ।
हास्योपस्थानसम्प्राप्ते दोषोपक्षेपनिह्नवे ॥
अनाभाष्योऽपि सम्भाष्यः प्रिय एभिस्तु कारणैः ।
यत्र स्नेहो भयं तत्र यत्रेर्ष्या मदनस्ततः ॥
चतस्रो योनयस्तस्याः कीर्त्यमाना निबोधत ।
वैमनस्यं व्यलीकं च विप्रियं मन्युरेव च ॥
एतेषां सम्प्रवक्ष्यामि लक्षणानि यथाक्रमम् ।
निद्राखेदालस्यगतिं सचिन्हं सरसव्रणम् ॥
एवंविधं प्रियं दृष्ट्वा वैमनस्यं विधीयते ।
ग्रीवासूयितवदना रोषात् चक्षुषः प्रवेपमानाङ्गी ॥
साधिति सुष्ठिति वाक्यैः शोभनमित्येवमभिनेयः ।
बहुशोऽवधीर्यमाणोऽपि यस्तत्रैव हि तिष्ठति ॥
संहर्षाचात्र मात्सर्यात् व्यलीकमुपजायते ।
कृत्वोरसि वामकरं दक्षिणहस्तं तथा विधुन्वाना ॥
चरणविनिष्टम्भेन च कार्योऽभिनयो व्यलीके तु ।
जीवन्त्यां त्वयि जीवामि दासोऽहं त्वं मे प्रिया ॥
उक्त्वैवं योऽन्यथा कुर्यात् एतद्वै विप्रियं भवेत् ।
दूतीक्षेपप्रतिवचनभेदनैः क्रोधसहितरुदितैश्च ॥
विप्रियकरणाभिनयः सशिरःकम्पैश्च कर्तव्यः ।
प्रतिपक्षसकाशात्तु यः सौभाग्यविकत्थनः ॥
उपसर्पेत् सचिह्नश्च मन्युस्तत्रोपजायते ।
वलयपरिवर्तनैरथ सशिथिलमुत्क्षेपणेन रशनायाः ॥
मन्युस्त्वभिनेतव्यः सशङ्कितं बाष्पपूर्णाक्ष्या ।
दृष्ट्वा स्थितं प्रियतमं शङ्कितं सापराधमतिलज्जम् ॥
ईर्ष्यावचनसमुत्थैरथ खेदयितव्यो ह्युपालम्भेन ।
मध्याङ्गुल्याङ्गुष्ठा न (?) विध्यात् पाणिना तुरःस्थेन ततः ॥
उद्वर्तितनेत्रतया तथा प्रततवीक्षणाच्चापि ।
कटिहस्तनिविष्टतया विच्छिन्नतया तथा च ॥
पुनरप्यसाम्याद्धितालो द्विकलश्च कर्तव्यः ।
त्रिकलश्च सन्निपातो भूलयो (भूयो?) विधिरेव कर्तव्यः ॥

द्वादशकलस्तृतीये तस्यान्ते संनिपातश्च ।
प्रथमस्त्वष्टकलः स्यात् द्वादशकलिकौ तथा स्मृतौ द्वौ च ॥
अन्त्यश्च संनिपाते मध्यः स्यात् चारितप्रोक्तम् ।
ये पूर्वमङ्गुलिकृता प्रवेशनिक्षेपनिष्क्रमा गदिताः ॥
ते सर्वे कर्तव्या मध्ये त्वाशारिते तज्ज्ञैः ।
अथ ज्येष्ठे च कर्तव्यं शम्यातालयात्मकम् ॥
शरीरं हि बुधैर्नित्यं पञ्चपाणिकल्यन्वितम् ।
तस्यावापोऽथ निष्क्रामो निक्षेपश्च निवेशनम् ॥
अङ्गुलीनां प्रकर्तव्यं कलामानं चतुष्कलम् ।
ज्येष्ठं चतुष्कलं स्यादावापैः संयुक्तं सविक्षेपैः ॥
यस्त्वन्यतत्र स्यात् सप्तदशकलं तु शम्यादि ।
पूर्वं शम्या कार्या चतुष्कलो वै भवेत् तालः ॥
शम्या चतुष्कला स्याद् द्विकलस्तालस्ततः कार्यः ।
कार्यश्च संनिपातः षट्कलिकस्पर्शकलश्च तालः स्यात् ॥
द्विकला च पुनश्शम्या चतुष्कलः स्यात् पुनस्तालः ।
शम्या चतुष्कला स्यात्तालो द्विकलश्च कर्तव्यः ॥
पुनरेव संनिपातः षट्कलः संविधातव्यः ।
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि संनिपातान्ते ॥
पुनरेवैषामङ्गुलिविक्षेपं सम्प्रवक्ष्यामि ।
आवापः सह शम्यायां निष्क्रामश्च ततः परम् ॥
विक्षेपश्च ततः कार्यः तालश्चावाप इष्यते ।
अनामिका वा निष्क्रामो विक्षेपोऽनन्तरः स्मृतः ॥
शम्या वा सह आवापस्तालो विक्षेपणं पुनः ।
मध्यमयाङ्गुल्या प्रवेशश्च आवापश्च ततः कार्यः ॥
तर्जनीनिष्क्रमस्तथा विक्षेपश्च ततः कार्यः संनिपातान्त एव च ।
कलाः सप्तदश ह्येता संनिपातादनन्तरम् ॥
आवापश्च पुनः कार्यः मध्यमयाङ्गुल्या पुनः प्रवेशश्च ।
आवापश्च ततः कार्यं तर्जनीनिष्क्रमस्तथा ॥
विक्षेपः पञ्चदशकः शम्यया सह कीर्तितः ।
आवापश्चैव कर्तव्यः पुनस्तालप्रयोक्तृभिः ॥
विक्षेपश्च प्रवेशश्च पुनरावाप एव च ।
प्रदेशिन्या च निष्क्रामो विक्षेपश्च पुनः स्मृतः ॥

निहत्य दानवं[1] घोरं रुद्रेणामिततेजसा ।
नृत्तमुत्पादितं चित्रं पूर्वं ताण्डवसंज्ञितम्[2] ।
अथ भूतगणैः सर्वैस्तस्मिन् काले महात्मभिः ॥ ६४ ॥
वर्धमानमिदं दृष्टं[3] पिण्डीबन्धैर्विभूषितम् ।
परितुष्टश्च तद्दृष्ट्वा[4] सपत्नीको वृषध्वजः ।
प्रददौ तु[5] वरं श्रेष्ठं सह देवगणाधिपैः[6] ॥ ६५ ॥
लक्ष्यलक्षणसंपन्नो[7] मार्गयुक्तिविधिः(धि ?)क्रमैः ।
वर्धमानप्रयोक्तारो[8] यास्यन्ति शिवगोचरम्[9] ॥ ६६ ॥
एवमेतन्मया दृष्टं[10] पिण्डीबन्धनिमित्ततः[11] ।
अधुना तु प्रवक्ष्यामि[12] लक्षणं शृणुत द्विजाः ॥ ६७ ॥
वृत्तिदक्षिणचित्रेषु मार्गेषु विनियोजितम् ।

---

सन्निपातस्तथा यश्च चतुर्विंशतिको भवेत् ।
तृतीये सन्निपात स्यात् एष एव विधिः स्मृत. ॥
षट्कलसा द्वे ह्यज्येष्ठेषु द्वे चान्ये पूर्ववद् योजये ।
षट्कम्पमष्टपातं त्रिसन्निपातं त्रियत्तु चाप्येवम् ॥
सप्तदशायतनयुक्तं विद्यादासारितं सर्वम् ।
एवं ज्येष्ठस्य विज्ञेयस्तालोऽङ्गुलिविकल्पतः ॥
प्रथम· षोडशकलश्चतुर्विंशतिकः स्मृतः ।
द्वितीयश्च तृतीयस्तु सन्निपात· कलाधिकः ॥
प्रत्येकपतनं येषु दश सप्त भवन्ति हि ।
शम्यातालकृतानीह सन्निपातकृतानि च ॥
अष्टौ तालास्तु षट् शम्या· सन्निपाताश्चयास्तथा ।
आसारिते विधौ ह्येव एकैकस्मिन् प्रकीर्तितः ॥
आसारितानां वक्ष्यामि प्रस्तारं लघुलक्षणम् ।
मुखं प्रतिमुखं चैव देह· संहरणस्तथा ॥' इति ।

१. 'दारुणं' फा. २. 'चित्रताण्डव' फा. ३. 'दृष्टं' फा. ४. 'तं दृष्ट्वा' फा. ५. 'च' फा. ६. 'देव्या महासुर.' फा. ७. 'लक्ष्यलक्षणयुक्तं' फा. ८. 'वर्धमानं प्रयोक्तारो' फा. ९. शिवगौरवम्' फा. १०. 'पुष्प दृष्टं' फा. ११. 'पिण्डीबन्धाय सांप्रतं' फा. १२. संप्रवक्ष्यामि' फा.

द्विविधं वर्धमानं स्यात् स्वप्रमाणविनिर्मितम् ।
अतालं च सतालं च तत्प्रमाणं द्विजाः स्मृतम् ॥ ६८ ॥
चतस्रः कण्डिकाश्चैव तावन्त्यासारितानि तु ।
ध्रुवकेण कलाभिस्तु कण्डिका देवकल्पिता ॥ ६९ ॥
वर्धमानशरीरे तु क्रियते मार्गयोजना ।
आद्या नवकला तु स्यादष्टाभिस्त्वपरा स्मृता ॥ ७० ॥
दश षट् च तथा चैव तृतीया कण्डिकेष्यते ।
चतुर्थी कण्डिका चैव द्वात्रिंशत्कलिका स्मृता ।
कलाभिरेवं निर्दिष्टा कण्डिका वर्धमानके ॥ ७१ ॥
केवलं मार्गसंभूता साल्ययोपाङ्गवर्जिता ।
एकद्वित्रिचतुर्योगात्ताभिरासारितानि तु ॥ ७२ ॥
वर्धमाने प्रसूयन्ते मार्गतालाङ्गयोगतः ।
प्रथमां[1] कण्डिकां कृत्वा बालतालप्रयोजितम्[2] ॥ ७३ ॥
अन्तिमार्धकलाहीनं कुर्यादेवं[3] कनिष्ठकम् ।
द्वितीयां कण्डिकां[4] कृत्वा प्रथमा[5] सकला यदि ॥ ७४ ॥
योज्यते[6] पूर्वतालेन तदा तत्[7] स्याल्लयान्तरम् ।
वर्धमानं विना चित्रे नहि वृत्तौ लयान्तरम् ॥ ७५ ॥[8]
बहिर्या वर्धमाने या कनिष्ठां नहि दक्षिणे ।
द्विगुणक्षीर(णाक्षर ?)संयोगादन्यमार्गनियोजनात्[9] ॥ ७६ ॥
नृत्तं[10]कालविशेषाच्च बालैदन्यलयान्तरम्[11] ।
तृतीया स द्वितीया च प्रथमा चैव तैः[13]कला ॥ ७७ ॥[12]

१. 'प्रथमं कण्डिकां' का. २. 'प्रयोजितम्' का. ३. 'तालमासारितं तु तत्' का. ४. 'कर्णिकां' का. ५. 'प्रथमं' का. ६. 'पूज्यते' का. ७. 'यदा यत्तल्लयान्तरम्' का. ८. पद्यमेतत् का. पुस्तके नास्ति। ९. 'द्विगुणाक्षरसंयोगादन्यमाथ (?) प्रयोजनम्' का. १०. 'वृत्त°' का. ११. 'बालतालल्यान्तरम्' का. १२. इतोऽग्रे—
'कनिष्ठासारिते तालो यो मया परिकीर्तितः ।
स एव सर्वः कर्तव्यः प्रथमे कण्डिकाद्वये ॥' इत्यधिकमत्र का. पुस्तके।
१३. 'तद्वदेव' का.

द्विकलं योगमाश्रित्य मध्यमासारितं तु तत् ।
चतुर्थीमादितः कृत्वा चतस्रः कण्डिका यथा ॥ ७८ ॥
चतुष्कैलो(लैः?) न युच(ज्यः?)न्ते (?) ज्येष्ठमासारितं तु तत् ।
प्रयोगस्तु यदा त्वेषां पिण्डीबन्धैर्विकल्प(ल्प्य?)ते ॥ ७९ ॥
प्रत्येकं तु (त्व ?)ङ्गविन्यासस्तदा तेषां पृथक् पृथक् ।
मुखं प्रतिमुखं चैव देहसंहरणं तथा ॥ ८० ॥
अङ्गान्येतानि चत्वारि सर्वेष्वासारितेष्विह ।
उपोहनं मुखं तेषां युग्मं प्रतिमुखं भवेत् ॥ ८१ ॥
ओजःशरीरसंहारावेयमङ्गविधिक्रमः ।
इत्येवं चतुरङ्गानि ज्ञेयान्यासारितानि तु ॥ ८२ ॥
चतुर्भिसारितैर्बद्धं वर्धमानकमुच्यते ।
वर्णताललयग्रन्थवाद्याभिनयवर्धनात् ॥ ८३ ॥
पात्राणां वृद्धियोगाच्च वर्धमानकमुच्यते ।
वर्धमाने शरीरस्य भवेदासारितस्य च ॥ ८४ ॥
कार्यकारणभावेन परस्परविकल्पनम् ।
यथा वृक्षाद्भवेद्बीजो बीजाद्वृक्षस्य संभवः ॥ ८५ ॥
अन्योन्यहेतुसंयोगः प्रसर्तव्यस्तथैव तु ।

---

१. 'तथा' का. २. 'चतुर्थमादितः' का. ३. 'यदा' का. ४. 'चतुष्कयोगमाश्रित्य' का. ५. 'तथा' का. ६. का. पुस्तके तत्र—

'ज्येष्ठस्य सारिते तालो निःशब्दः शब्दवांस्तथा ।
त एव सर्वः कर्तव्यो बुधैश्चतसृणामपि ॥
संयोगे कण्डिकालोपः······परिकीर्तितः ।' इत्यधिकः पाठः ।

७. 'यथा' का. ८. 'पिण्डीबन्धैर्विकल्प्यते' का. ९. 'प्रत्येकं त्वङ्गविन्यासः सर्वेषां च पृथक् पृथक् ।' का. - १०. का. पुस्तके त्वियमेव सार्धपद्यद्वयी १९३, १९४ संख्यया वर्तते । तत्र च देहः संहरणस्तथा' इति पाठः । ११. 'सर्वेष्वासारितेषु च' का. १२. 'वेत्रमङ्गविधिक्रमः' का. १३. 'इत्येवं' का. १४. 'चतुरासारितैर्बद्धं' इत्यादि ८८ श्लोकमारभ्य 'तेषां संमुखतालं' इत्यादि ९८ श्लोकपर्यन्तः पाठः का. पुस्तके नास्ति ।

योगादेककलात्सूते कनिष्ठकलयान्तरे।
द्विकलान्मध्यमं चैव ज्येष्ठं चैव चतुःकलात् ॥ ८६ ॥
चञ्चत्पुटपरिवर्तः शम्यादि द्वौ च पञ्चपाणिकृतौ।
अन्ते च संनिपातः पातविधिरयं कनिष्ठस्य ॥ ८७ ॥
अयमेव तालयोगो विशेषसिद्धिश्च सूर्यवद्विद्या।
भवतीह लयान्तरिते शब्दाच्छेदो लयश्चैव ॥ ८८ ॥
उत्तरकालान्कलया त्वादौ विप्राः कलाः परित्यज्य।
एतत्पातविधानं मध्यमकासारिते प्रोक्तम् ॥ ८९ ॥
ज्येष्ठस्य भवति नियमादादावेका चतुःकला मात्रा।
मात्रा कुंदुगता स्यात्कृत्वौ तौ द्वौ च परिवर्तौ ॥ ९० ॥
चा(ता?)लं नवकलं वे(ये?)षां न तेषां साधु संमतम्।
सनिपाताङ्गविन्यासं कलानियमतः कृतम् ॥ ९१ ॥
तेषां संमुखतालं ध्रुवपातैरेव नियमतात्मानम्।
तस्य कलापाक्षरगुरुलघुवर्णस्थितिं वक्ष्ये ॥ ९२ ॥
ज्येष्ठस्य कला ह्यष्टौ मुखं भवेन्मध्यमस्य समूलकम्।
पडि(ष्टि?)कैयान्तरे स्यात्पश्चैव कलाः कनिष्ठस्य ॥ ९३ ॥
आदावन्ते गुरुणी मध्ये च लघूनि वालतः प्रभृति।
अष्टौ द्वादश षोडश विंशतिरपि चाक्षराणि स्युः ॥ ९४ ॥
आसारितोपवहनेष्वादावासारणानि युक्तानि।
तान्यक्षराणि वक्ष्ये यानि पुरा ब्रह्मगीतानि ॥ ९५ ॥

[यथा—] 'कूहुं जगति यदि गिनि गिजं हुं प्रथमे लयान्तरे चापि तितिजलकुचकलयमध्ये इति तिकुचवलितकज्येष्ठे।'

इत्यक्षरपतनकलागुरुलघुवर्णस्थितिमतिविभक्तः।
आसारितमुखसंज्ञे उपवहनविधिः समुद्दिष्टः ॥ ९६ ॥
एवमेतत्सविस्तारं कथितं परिमाणकम्।

१. 'सप्त मला' का. २. 'तु' का. ३. 'शायत' का. ४. 'चा' का. ५. 'एतदर्धं' का. पुस्तके नास्ति।

चत्वारस्तु गुणा युग्मे ओजे पद्दा(द् प)रिकीर्तिताः ॥ ९७ ॥
पञ्चपाणौ द्वितीये तु सोर्धपद् परिकीर्तिताः ।
कनीय एवं कर्तव्यमर्कैरो(क्षरैः)स्तालमानतः ॥ ९८ ॥

यथा—'देवं देवैः संस्तुतं नमितं दैत्यैर्यक्षै(क्षैः)र्नागैः पितृभिश्च नमितचरणं त्रैलोक्यहेतुमीशं रुद्रं शरणमस्म्यहमुपगतः ।'

अष्टावेव गणाः कार्याः पूर्वताले यथाविधि ।
द्वादशैव तु कर्तव्याः कथिताः पुत्रके गणाः ॥ ९९ ॥
अर्धत्रयोदशगणास्तृतीये चतुर्संज्ञिते ।
एवमक्षरविन्यासो मध्यमासारिते स्मृतः ॥ १०० ॥

यथा—'भूताधिपतिं भगनेत्रहरं देवैर्वन्द्यं सुरमरमथनं रौद्रं भयदं गजचर्मवृतं शंभुं त्र्यक्षं ज्वलननिमजटम् भुजगपरिकरं त्रिदशगणवृतं दैत्यैर्नित्यं परिपठितचरितममरपतिनमितमभिमतसुखदं शरणं सुरनुतचरणमहमुपगतः ।'

कार्याः षोडश युग्माख्ये ताले तु प्रथमे गणाः ।
चतुर्विंशतिरोजाख्ये द्वितीये वसु(स्तु?)संज्ञिते ॥ १०१ ॥
चतुर्विंशतिरर्धं च तृतीये वसुसंज्ञिके ।
ज्येष्ठेप्वाँसारिते कार्ये एवमक्षरसंचयः ॥ १०२ ॥

[ यथा—]'अमरप्रवरं मदनाङ्गहरं भुवनैकनाथमभयप्रदं त्रिपुरान्तकरं देवं

---

१. '°द्द परि°' का. २. 'र्धाः' का. ३. 'एव' का. ४. 'क्षरैः' का. ५. '°गीशं' का. ६. '°र्यै क्षैः प्रणमितचरणं' का. ७. 'द्वितं हरं शं शरणमहमुपगतः' का. ८. 'पद पिता पुत्रके' का. ९. 'तथा' का. १०. 'वसुसंज्ञिनि' का. ११. '°हरणगीशं देवं' का. १२. 'सुरमरमथनं' का. १३. 'गजचर्मपटं' का. १४. 'भुजगपरिकरं त्रिदशपरिगणं दैत्यैर्नित्यं परिपठितचरितममरपतिचरितम् ।

'अभिमतसुखदं रुद्रं पीतं त्रिभुवननिलयम् ।
गङ्गाङ्कवनगोभिजरं तं शरणं गतोऽस्मि वरदं च महेश्वरम् ॥' इति का.

१५. 'वसुसंज्ञिते' का. १६. '°त्यासारिते' का. १७. 'धर्मस्त्वेव°' का. १८. 'त्रिपुरान्तकरं' का.

तमहं प्रणतः सुरपितृगणनतचरणं पृथिवीसलिलज्वलनभैरवरूपं खड्वाङ्गकपालधरं पवनः सूर्यश्चन्द्रो य[3]जारमाप्योमाख्याः (?) कार्या मुनिभिर्यस्य प्रोक्तास्त्रैलोक्यगुरुं तमचिन्त्यमजं विद्यानिलयं भैरवरूपं खड्वाङ्गकपालधरं स्थित्युत्पत्तिप्रलयनिमित्तं च[6]न्द्रार्धधरं तिलकार्धधरं रसनार्धधरं बहुभिर्विकृतैर्विविधैर्विकटैर्विघति(?)विमुखैः प्रमथैः परिवृतमीशं सुखदं सततं प्रणतः ॥'

आसारितानां सर्वेषां ये भेदाः परिकीर्तिताः ।
य[10]थाक्षरं द्विसंख्यातं त्रिसंख्यातं यथापि वा ॥ १०३ ॥
तालच्छेदो[11] द्विगुणितैः समवर्णगणैः[12] कृतम् ।
अनिवृत्ताक्षरपदं यथाक्षरमिति स्मृतम् ॥ १०४ ॥
निवृत्त्या यत्समायुक्तं द्विसंख्यातं त[13]मु(दु?)च्यते ।
निर्वृत्तद्वयसं[14]पन्नं त्रिसंख्यातमितीष्यते ॥ १०५ ॥
चतुष्कादौ चतुर्मात्रा यथोक्तगुरुलाघवैः[15] ।
यथायोगं गणाः [16]कार्या गीतेष्वासारिते[17]षु च ॥ १०६ ॥
अक्षरैर्या चतुर्मात्रा द्विमात्रा वर्णतस्तु सा ।
चित्रे कला भवेद्या तु वृत्तौ सा द्विगुणा स्मृता ॥ १०७ ॥
वृत्तौ या वर्णमात्राभिश्चतुर्मात्राः (त्रा ?) प्रकीर्तिता ।
द्विगुण(णो?)द[क्षि?]णे सा तु कला ज्ञेया प्रयोक्तृभिः ॥ १०८ ॥
न मार्गभेदोऽक्षरेषु कश्चिदप्युपपद्यते ।

---

१. 'सुरगणपितृमुनिगणमहितं' का. २. 'पृथिवी सलिलानलपवनयज्ञाधिपति.' का. ३. 'सूर्यश्चन्द्रो व्योमाख्या.' का. ४. 'अष्टौ मुनिभिर्यस्य स्तुता.' का. ५. 'खड्वाङ्गधरं' का. ६. 'सूक्ष्माक्षमचिन्त्यं चन्द्रार्धधरम्' का. ७. 'निकलार्धधरं नेत्रार्धधरं मुखार्धधरं कान्तार्धधरं' का. ८. 'बहुभिर्विविधैर्विधृतैर्विकटैर्मुण्डैर्विषमैः प्रमथैः परिवृत्तमहमीशं सततं प्रणत.' का. ९. 'त्रयो भेदाः प्रकीर्तिता.' का. १०. 'यथाक्षरद्विसख्येति त्रिसंख्यातमथापि च' का. ११. 'तालच्छेदद्विगुणितै.' का. १२, 'समवर्ण[ः] गुणैः कृतः' का. १३. 'तदुच्यते' का. १४. 'निवृत्तित्रयसपन्नं' का. १५. '°गुरुलाघवः' का. १६. 'कला' का. १७. '°सारिते च' का. १८. 'स्वया' का. १९. 'वृत्ते' का. २०. 'वर्णमात्रा तु' का. २१. 'द्विगुणा दक्षिणे या तु' का.

वर्णमात्राद्विगुणिताद्वर्णभेदः प्रकीर्तितः ॥ १०९ ॥
यथाक्षरेषु भूयिष्ठं गीतेष्वासारितेषु च ।
विधिरेष समुद्दिष्टो वर्णतालपदाश्रयः ॥ ११० ॥
द्विसंख्याते निवृत्तिस्तु कार्याधस्तैर्धयोगतः ।
द्विसंख्यातार्धयोगेन त्रिसंख्यातेऽपि चेष्यते ॥ १११ ॥
न चित्रे द्वित्रिसंख्यातं कदाचिदपि योजयेत् ।
न च वृत्तित्रिसंख्यातं गीतेष्वासारितेषु च ॥ ११२ ॥
दक्षिणे स्यात्त्रिसंख्यातं द्विसंख्यातं च वार्तिके ।
चित्रे यथाक्षरं प्रोक्तमिति मार्गविनिश्चयः ॥ ११३ ॥
दक्षिणेनैव गत्वादौ निवृत्तौ वृत्तिवद्व्रजेत् ।
चित्रश्च यथान्यायं त्रिसंख्याते विधिः स्मृतः ॥ ११४ ॥
अनेनैव विधानेन द्विसंख्यातमपीष्यते ।
वृत्तौ वा दक्षिणो(णे?) वापि प्रयोगोऽस्य सदैव तु ॥ ११५ ॥
वस्ता(?)स्त्वा दौ वस्तु(स्तु?)मध्ये च वस्त(स्त्व?)न्ते वा निवृत्तयः ।
प्रयोक्तव्यैः (व्या?) प्रयोगज्ञैर्विचार्याक्षपलापलम् ॥ ११६ ॥
निवृत्तौ तु कला न्यूना यदा वस्तुवशाद्भवेत् ।
अकालपातनात्तस्या वर्णः कार्यो निवृत्तिमान् ॥ ११७ ॥
वर्णालंकारसौभाग्यं विच्छेदः करणस्य च ।
सत्त्वादीनां प्रयोगश्च निवृत्तीनां प्रयोजनम् ।
वर्णतालाक्षराणां तु संयोगोऽयं मया स्मृतः ॥ ११८ ॥

---

१. 'द्विगुणनात्' का. २. '°समाश्रयः' का. ३. 'कार्यो चार्धवियोगतः' का. ४. 'द्विसंख्यातत्रयोगेन' का. ५. 'न च वृत्तौ त्रिसंख्यातं' का. ६. 'न च वृत्तौ त्रिसंख्यातं' का. ७. '°मेषां' का. ८. 'दक्षिणेन तु गीतादौ' का. ९. 'दक्षिणे वापि' का. १०. '°स्यैव चेष्यते' का. ११. 'वस्त्वादौ वस्तुमध्ये च वस्त्वन्ते वा' का. १२. 'प्रयोक्तव्या' का. १३. 'वस्तुवद्भवेत् (?)' का. १४. 'काकलापतनात्तस्या' का. १५. 'विच्छेदकरणस्य च' का. १६. 'च' का.

आसारितेषु गीतेषु वर्धमानेषु चैव हि।
वर्धमानं तु विज्ञेयं (याः?) चतस्रः कण्डिका बुधैः॥ ११९॥
विशाला संगता चैव सुनदा(नन्दा?) सुमुखी तथा।
उपोहनं विशालायाः कला[ः] पञ्च भवेदिह॥ १२०॥
षडङ्ग(ट् संग)ताया विज्ञेयाः सुनन्दायाश्च सप्त च।
सुमुख्याश्चोपवहनं नित्यमष्टकलं भवेत्॥ १२१॥
आदौ गुरुद्वयं कार्यं चतुर्दश लघून्यथ।
उपोहनं विशालायाः पुनरन्ते गुरुः स्मृतः॥ १२२॥
यथा—ऋदुं जगति अवलितकदिगिनिगिकुचकृततिति वा।(?)
चतुर्भिरधिकैरेवं लघुभिर्गुरुसंस्तुतैः।
सुनन्दायाश्च विज्ञेयो ह्युपोहनविधिर्बुधैः॥ १२३॥

१. का. पुस्तके—
'आसारितानां संयोगो वर्धमानक इष्यते।
उत्पत्तिलक्षणं चास्य मदतो मे निबोधत॥' इत्यधिकमत्र।
२. पद्यार्धमेतन्नास्ति का. पुस्तकेऽत्र ३. का. पुस्तकेऽत्र 'निहल दारुणं घोरं' इत्यादि 'चतस्रः कण्टका ज्ञेया वर्धमाने प्रयोक्तृभिः।' इत्यन्तः पाठः समधिकः ४. 'समता' का. ५. 'सुनन्दा' का., 'सुनादा' ख. ६. 'का. पुस्तके त्वेवं—
'ततः पूर्वा नव कला द्वितीयाष्टकला स्मृता।
तृतीया षोडशकला द्वात्रिंशच्च तथोत्तरा॥
शम्यातालस्तथा शम्या पुनस्ताला यथा क्रमम्।
त्रिकलः संनिपातश्च विशाला याः प्रकीर्तितः॥
चच्चत्पुटस्तु द्विकलः संगतायाः प्रकीर्तितः।
उपोहनविधिस्तासामधुना तु मयोच्यते॥'
श्लोक १२४–१२७ श्लोकत्रयात्मकः पाठः।
७. 'कलापञ्चकमेव हि' का. ८. 'षट्कलाः संगतायाश्च सुनन्दायाश्च सप्तकम्।' का. ९. 'एतेषां चैव वक्ष्यामि गुरुलघ्वक्षरक्रमम्। इत्यर्धमधिकमत्र। १०. 'लघून्यपि' का. ११. 'विधिः' का. १२. 'एष गद्यभागः का. पुस्तके नास्ति। १३. 'अस्य श्लोकस्य स्थाने का. पुस्तके पद्यद्वयी—
'चतुर्भिरधिकैर्हस्वैर्गुरुद्वयसमन्वितम्।
संगतायाभिमुनिभिरुपोहनमिति स्मृतम्॥

यथा[1]—ऋंदुं जगति अवलितकदिगिति ऋलकुचलति विभो ।(?)

[2]षड्विंशतिर्लघूनि स्युः सुमुख्याश्च गुरू[3]णि च ।
उपोहनविधाने[4]न ज्ञेयानि मुनिसत्तमाः ॥ १२४ ॥

यथा[5]—ऋंदुं जगति अवलिकदिगिविगितितिऋलऋचकुलतिति जगति वा ।

उपोह्यन्ते श्च(स्व?)रा य[6]त्र येन गीतं प्रवर्तते ।
तस्मादुपोहनं प्रोक्तं शुष्काक्षरसमन्वितम् ॥ १२५ ॥

अथवा मो(वोपो?)ह्यते यस्मात्प्रयो[9]ग[ः]सूचनादिभिः ।
तस्मादुपोहनं ह्येतज्ज्ञे[7]('ज्ञा'?)नभाण्डसमाश्रयम् ॥ १२६ ॥

शम्याताली द्विरभ्यस्तौ संनिपातान्त्य एव च ।
उपोहनं विशा[लायां]स्तालोऽयं परिकीर्तितः ॥ १२७ ॥

द्विकलः संगतायाश्चे तालश्चपुटः स्मृतः ।
त्रिकलो युक्ता]लादि सुनन्दायास्तथैव च ॥ १२८ ॥

चञ्चत्पुटस्तु द्विकलः सुमुख्याः स्यादुपोहने ।
उपोहने द्विरभ्यस्तैस्ततः कार्या तु कण्डिका ॥ १२९ ॥

एतान्युपोहनानीह चत्वारि गदितानि हे (तु?) ।
आनुपूर्व्या प्रयोगं च कण्डिकाना निबोधत ॥ १३० ॥

---

चतुर्भिरधिकैरेव लघुभिर्गुरुसयुतम् ।
सुनन्दयो(न्दाया?)श्च निज्ञेय उपोहनविधिर्बुधैः ॥'

१. 'एतदुदाहरणगद्यमपि का. पुस्तके नास्ति । २. 'अष्टाविंशल्लघूनि स्युः' का. ३. 'गुरुत्रयम्' का. ४. 'तु ज्ञेय तु द्विजसत्तमाः' का. ५. एष गद्यभागोऽपि का. पुस्तके नास्ति । ६. 'यस्मात्तस्मात्' का. ७. 'ज्ञेयं स्थायिस्वरसमाश्रयम्' का. ८. 'अथवोपोह्यते' का. ९. 'प्रयोगः' का. १०. 'गानभाण्डसमाश्रयम्' का. ११. 'उपोहने' का. १२. स्त. पुस्तके त्रुटितः १३. '°श्च' का. १४. 'श्वापुटः (?)' का. १५. 'तस्यैव संनिपातोऽन्त्ये' का. १६. 'सुमुख्या' का. १७. 'सुकण्डिका' का. १८. 'तु' का.

शम्यातालो(लौ[1]) पुनः शम्या ततस्तालो यथाक्रमम् ।
त्रिकलः संनिपातश्च विशालायाः प्रकीर्तितः ॥ १३१ ॥
चञ्चत्पुटस्तु वि(द्वि[2])कलः संगताया अपि स्मृतः ।
चतुष्कलः सुनन्दायाः स एव गदितो बुधैः ॥ १३२ ॥
संनिपातद्वयोपेताद्विचित्रस्तु प्रयोक्तृभिः ।
कार्यश्चतुष्कलो युग्मः सुमुख्याश्च यथाक्रमम् ॥ १३३ ॥
वर्धमानस्य तालोऽयं कण्डिकानां पृथक्पृथक् ।
मया प्रोक्तो[3] मुनेश्चैव[4] सहतानां[5] निबोधत ॥ १३४ ॥
पूर्वं[6] विशाला कर्तव्या सगता तदनन्तरम् ।
सगतायां म(गृ[7])हं कृत्वा विशाला पुनरिष्यते[8] ॥ १३५ ॥
कनिष्ठासारिते[9] तालो यो यथा परिकीर्तितः ।
स एव सर्वः कर्तव्यः प्रथमे कण्डिकोद्भवे ॥ १३६ ॥

---

१ 'शम्या तालो' इत्यादि पद्यत्रयीस्थानेऽत्र का. पुस्तके—
'पूर्वं विशाला कर्तव्या चाचतालप्रयोजिता ।
अन्तिमात्र कलोपेता यस्मासारितं तु तत् ॥
सङ्गताया गृहं गत्वा विशाला सकला यदि ।
युज्यते पूर्वताले तु तदा स्यात्तत्रयान्तरम् ॥
सुनन्दा च ततः कार्या सङ्गता पुनरेव हि ।
विशालां च पुनश्चैव स (सु[?])मुखीं च प्रयोजयेत् ॥
सुमुखी च सुनन्दा च सङ्गता पुनरिष्यते ।
विशालाया समाप्तिस्तु ज्ञेया अथ निवृत्तय ॥' इति पद्यचतुष्टयी वर्तते ॥

२ 'कणिकायाः' का. ३. 'प्रोक्त' का. ४. 'पुनश्चैव' का. ५ 'सयुक्तानां' का.
६. 'का. पुस्तकीया पद्यत्रयी निर्दिष्टपूर्वा १ अङ्कटिप्पण्याम् । तत्र—
'पूर्वं विशाला कर्तव्या चाचतालप्रयोजिता ।
अन्तिमात्रकलोपेता यस्मासारितं तु तत् ॥' इति पूर्णमेतत्पर्यम् ।
७. 'सगताया गृहं' का. ८. 'सकला यदि' का. ९. 'कनिष्ठासारिते तालो' इत्यादि पद्यमारभ्य पद्यचतुष्कस्थाने का. पुस्तके—

सुनन्दा संगता चैव [विशाला च यथोदिता ।
सुनन्दायां ग्रहं कृत्वा ततश्चैव] प्रयोजयेत् ॥ १३७ ॥
मध्यमासारिते तालो यो मया परिकीर्तितः ।
शम्यात्रयस्य कर्तव्यः सुनन्दाद्यस्य पण्डितैः ॥ १३८ ॥
[2]सुमुखी च सुनन्दा च संगतप्रथमा तथा ।
सुमुख्यादौ ग्रहं कृत्वा यथोक्तं संप्रयोजयेत् ॥ १३९ ॥
[3]ज्येष्ठासारितके तालो निःशब्दः शब्दवांस्तथा ।
[4]स सर्व एव कर्तव्यो बुधैश्चतसृणामपि ॥ १४० ॥
[5]संयोगः कण्डिकानां तु तालोऽयं परिकीर्तितः ।
[6]एवमासां समायोगाद्वर्धमानकमिष्यते ॥ १४१ ॥

---

'प्रथमं कण्डिकां कृत्वा पातताप्रयोजिताम् ।
आधि(न्ति?)मार्धकलाहीना मध्मासारितं तु तत् ॥
द्वितीयां कण्डिकां कृत्वा प्रथमं सकला यदि ।
पूज्यते पूर्वतालेन यदा यत्तालयान्तरम् ॥
कनिष्ठासारिते का(ता?)लो यो यथा परिकीर्तितः ।
वर्धमानां तदा विप्रैर्न विस्तरेण योजयेत् ॥
स हि वर्धमाने वा कनिष्ठं न हि दक्षिणे ।
द्विगुणाक्षर अन्यमाध(?) प्रयोजनम् ॥
वृत्तकालविशेषाच्च पाततालयान्तरम् ।
कनिष्ठासारिते तालो यो मया परिकीर्तितः ॥
स एव सर्वः कर्तव्यः प्रथमे कण्डिकाद्वये ।
तृतीया सद्वितीया च प्रथमा चैव तद्भवेत् ॥
द्विकलं योगमाश्रित्य मध्यमासारितं तथा ॥' इति सार्धं पद्यपञ्चकम् ।

१. 'सोऽन्यत्र यस्य कर्तव्यः सुनन्दा न्यस्य योक्तृभिः' । का.

२. अस्य श्लोकस्य स्थाने—

'चतुर्थमादितः कृत्वा चतस्रः कण्डिका यदि ।
चतुष्कयोगमाश्रित्य ज्येष्ठमासारितं तथा ॥' इति श्लोकः ।

३. 'ज्येष्ठलं सारिते तालो' का. ४. 'स एव सर्वः कर्तव्यो' का. ५. 'संयोगे कण्डिकालोपः……परिकीर्तितः ।' का. ६. इत पूर्वं का. पुस्तके—

वालं न तु(नव?)कलं ज्ञेयं दशशब्दलयान्तरम्।
पञ्चषष्टि(ष्ठ?)कलं ज्येष्ठ त्रयस्त्रिंशत्तु मध्यमम्॥ १४२॥
कलाना वृद्धिमासाद्य त्वक्षराणां तु वर्धनात्।
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते॥ १४३॥
आसारितेषु गीतेषु वर्धमानेषु चैव हि।
द्विगुणस्तालयोगेन कार्यो ह्यक्षरजो विधि॥ १४४॥
समासायान्तरयिन (?) संनिपातो यदा भवेत्।
अन्त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभि॥ १४५॥
एवमेतन्मया प्रोक्तं वर्धमानस्य लक्षणम्।
आसारितानां वक्ष्यामि विस्तारं लघुलक्षणम्॥ १४६॥
अन्यूनाया कलाया तु ध्रुवं प्राज्ञो निवेदयेत्।

---

'प्रयोगस्तु यथा तत्र पिण्डबन्धैर्विकल्प्यते।
प्रत्येकं स्थानविन्यासं सर्वेषां च पृथक् पृथक्॥
बालं नवकलं ज्ञेयं दशसप्तलयान्तरम्।
पञ्चषष्टकलं ज्येष्ठं त्रयर्त्रि(स्त्रिं?)शच्च मध्यमम्॥
एतत्तालविधानं सर्वेष्वासारितेषु च।
एवमासारिते बद्धं वर्धमानकमुच्यते॥
वर्धतालतया प्रभवाद्याभिनयवर्धनात्।
प(पा?)त्राणां वृद्धियोगाच्च वर्धमानकमुच्यते॥
वर्धमानशरीरस्य भवेदासारितस्य च।
कार्यकारणभावेन परस्परविकल्पना॥
आसारितेषु सर्वेषु वर्धमानेषु चैव हि।
द्विगुणा(ण?)स्ताल योगेन कार्ये स स्वरजो विधि॥
समाप्तावन्तरहित संनिपातो यदा भवेत्।
अन्त्या कला द्विमात्रा तु तदा कार्या प्रयोक्तृभि॥'

'एवमासां समायोगात्' इत्याद्यारभ्य 'अन्त्या कला द्विमात्रा तु तदा ज्ञेया प्रयोक्तृभि।' इत्यन्तश्लोकचतुष्कस्थाने पद्यसप्तकम्। १ 'वर्धमानकलक्षणम्' क.। २ 'आसारितानां वक्ष्यामि विस्तारं लघुलक्षणम्।' १५१ इत्याद्यारभ्य, 'अत ऊर्ध्वं प्रवक्ष्यामि गीतानां षट्तुकेष्वपि॥ १८०॥' इत्यन्त २९ मूनत्रिंशत्पद्यानां स्थाने क. पुस्तके—

अथ तालाक्षरवशास्त्वेषां ये तांश्च योजयेत् ॥ १४७ ॥
प्लुते लघ्वक्षरे चैव ध्रुवे साम्यं न विद्यते[1]।
न विद्यते त्रिभिः पातैः समत्वमुपदिश्यते ॥ १४८ ॥
तालैश्च संनिपातैश्च शम्याभिश्च ध्रुवेण च ।
कनिष्ठासारितं कार्यं मध्यमं ज्येष्ठमेव च ॥ १४९ ॥
........................................ ।
द्विगुणोत्तरया वृद्ध्या ह्रस्वैव न मध्यमं विधातव्यम् ॥ १५० ॥
प्रस्तारेण कलानां शम्यातालान्तरोपेतम् ।
पूर्वं शम्या कार्या द्विकलस्तालः कलाद्वयं शम्या ॥ १५१ ॥
पुनरेककलस्तालस्त्रिकलः स्यात्संनिपातश्च ।
त्रिकलोऽन्यस्मिंस्तालः शम्यैकः.....कलाद्वये तालः ॥ १५२ ॥
द्विकला च पुनः शम्या तालः क.......... ।
.................................... ॥ १५३ ॥
त्रिकलश्च संनिपातो भूयो विधिरेष कर्तव्यः ।
द्वादश कलास्तृतीये तस्यान्ते संनिपातश्च ॥ १५४ ॥
प्रथमस्त्वष्टकलः स्याद्द्वादशकलिकौ तथापरौ ज्ञेयौ ।
अन्त्यश्च संनिपातो मध्यस्यासारितस्योक्तः ॥ १५५ ॥
ये पूर्वमङ्गुलिकृताः प्रवेशालि(शनि?)ष्कामसंज्ञया गदिताः ।
ते सर्वे कर्तव्या मध्ये त्वासारिते तज्ज्ञैः ॥ १५६ ॥
अयं(?) ज्येष्ठे तु कर्तव्यं शम्यातालकलान्वितम् ।
शतत्रयोऽथ निष्कामो विक्षेपोऽथ प्रवेशनम् ।
अङ्गुलीनां तु कर्तव्यं कलामानं चतुष्कलम् ॥ १५७ ॥
पूर्वं शम्या कार्या चतुष्कलोऽन्यो भवेत्ततस्तालः ।
शम्या चतुष्कला स्याद्द्विकलस्तालस्तथा चैव ॥ १५८ ॥

---

'अत ऊर्ध्वं प्रवक्ष्यामि गीतकानां तु लक्षणम् ।
सर्वेषामेव गीतानां वस्तुष्वेव यथेषु च ॥' इत्येकमेव पद्यम् ।

१. 'भपन्ति' दि का.

कार्यस्य संनिपातोऽपि पट्कलः पट्कलस्तु तालः स्यात्।
द्विकला च पुनः शम्या चतुष्कलः स्यात्पुनस्तालः ॥ १५९ ॥
शम्या चतुष्कला स्याद्विकलस्तालश्च कर्तव्यः।
पुनरेव संनिपातश्च पट्कलः संविधातव्यः ॥ १६० ॥
विधिरेष एव कृत्स्नः पुनस्तृतीयेऽपि संनिपाते तु।
पुनरेप चेष(?)मङ्गुलिविक्षेपात्संप्रवक्ष्यामि ॥ १६१ ॥
पूर्वं शम्या तथावापो निष्कामश्च ततः पुनः।
विक्षेपोऽथ पुनस्तालः पुनरावाप एव च ॥ १६२ ॥
अनामिकी(का?)कनीयस्यान्नि(स्योर्नि?)ष्कामश्च पुनस्ततः।
ताम्यामेव हि विक्षेपः शम्यायो वापि एव च ॥ १६३ ॥
मध्यमायां ततस्तालो विक्षेपोऽथ प्रवेशनम्।
आवापश्च पुनः कार्यस्तर्जनीनिष्क्रमः पुनः ॥ १६४ ॥
विक्षेपश्च पुनः कार्यः संनिपातस्तथैव वा।
कलाः सप्तदशैवैताः संनिपातो भवेदयम् ॥ १६५ ॥
आवापश्च पुनः कार्यः कनीयस्याथ निर्गमः।
विक्षेपश्च प्रवेशश्च आवापश्च ततः पुनः ॥ १६६ ॥
अनामिकाकनीयस्योस्ततस्तालो भवेत्पुनः।
विक्षेपश्च पुनस्ताभ्यां ततः शम्याः प्रकीर्तिताः ॥ १६७ ॥
आवापस्य कनीयस्यां ततस्तालं नियोजयेत्।
विक्षेपश्च प्रवेशश्च पुनरावाप एव च ॥ १६८ ॥
प्रदेशिन्या च निष्कामो विक्षेपश्च पुनः स्मृतः।
संनिपातः[1] पुनश्चैव चतुर्विंशतिको भवेत् ॥ १६९ ॥
तृतीयः संनिपातस्य एप एव विधिः स्मृतः।
एवं ज्येष्ठस्य विज्ञेयस्तालाङ्गुलिविकल्पितः ॥ १७० ॥

---

१. 'लेप एव' ख.

प्रथमः षोडशकलश्चतुर्विंशतिकस्तथा ।
द्वितीयश्च तृतीयश्च संनिपातकलाधिकः ॥ १७१ ॥
प्रत्येकं पतनान्येषु दक्षाः (तालाः?)सप्त भवन्ति हि ।
शम्यातालकृतानीह संनिपातकृतानि च ॥ १७२ ॥
हृन्यं(?)मष्टमतालं त्रिसंनिपातं त्रिवस्तु चाप्येवम् ।
सप्तदशपातयुक्तं विद्यादासारितं सम्यक् ॥ १७३ ॥
आसारितानामित्येवं गदितं लक्षणं मया ।
गीतानां वस्तुकानां च प्रयोगः परिकल्प(ल्प्य?)ते ॥ १७४ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीतानां वस्तुकेष्वपि ।
विध(वि?)धैककवृत्तानि त्रीण्यङ्गानि समासतः ॥ १७५ ॥
एकैकं तु विदार्येका ते(हे?)तुमद्द्विविधः स्मृतः ।
पद्परं ह्यपरं वृत्तं द्व्यङ्गं सहरसं च तत् ॥ १७६ ॥
विध(वि?)धैककयोः प्रायो मद्रके तु प्रयोजनम् ।
प्रेव(क?)र्याश्चापि वस(स्त्वर्धे) पादे रोविन्दकस्य च ॥ १७७ ॥
रोविन्दकोत्तराभ्यां तु वृत्तमुल्लोपके तथा ।
पाणिकायां बहिर्गीता लास्ये वै परिकीर्तितम् (ता?) ॥ १७८ ॥
प्रवृत्तमवगाढं च द्विविधं सत्वं(वृत्त?)मुच्यते ।
आरोहित्वादवगाढं प्रवृत्तमवरोहतः ॥ १७९ ॥

---

१. 'सर्वेषामेव गीताना वस्तुष्ववयवेषु च । विध(वि?)धैककवृत्तानि त्रीण्यङ्गानि समासतः ॥' इत्यधिकं ख-पुस्तके. २. 'एकतन्तुविदार्येका द्वे चापि विविधैः स्मृतः ।' का. ३. 'विदार्यः परिकीर्तिता. ।' का. ४. 'इतोऽग्रे का. पुस्तके—.
'पदवर्णसमास(सि?)स्तु विदारीत्यभिसंज्ञिता ।
न्यासापन्याससमं शान्तं वस्तु तत्परिकीर्तितम् ॥
विदारयन्ति यस्माद्धि परमप्यक्षरो यदा ।
तदा विदारी विज्ञेया गुरुवर्णानुकारिणी ॥' एषा श्लोकद्वयी समधिका.
५. 'प्रक्र्य-' इत्युत्तरत्र, 'प्रवुर्याश्चापि' का. ६. 'रोविन्दको(को?)तराभ्या तु' का. ७. '°मुखाम्यकस्य हि' का. ८. 'बहिर्गीते' का. ९. 'लास्ये चैव प्रकीर्तिते ।' का. १०. 'इतम्' का. ११. '°मपरो हि च' का.

आरोहणं च[1] द्विविधं तथा चैवावरोहणम् ।
न्यासापन्यासविहितं मार्गान्तर(न्तर?)कृतं तथा ॥ १८० ॥
त्र्यवरैकादशपरा विदार्यः परिकीर्तिताः ।
चतुर्विंशतिरेतासां प्रमाणं परमं स्मृतम् ॥ १८१ ॥
अर्ध्य[2][र्द्धाद्धि?] तृतीयाच संनिपातौ[3]ः प्रमाणतः ।
उ[4]ल्लोप्यके विदारी तु स्मृता वैहायसे[5] तथा ॥ १८२ ॥
विव(वि?)धे[6]न तु तत्कार्यो युग्मवृत्तेन चैव हि ।
न[7]र्धसंनिपाते तु भवेदङ्गसमापनम् ॥ १८३ ॥

---

१. 'तु' का. २. 'अप्यर्धा च तृतीया च' का. ३. 'सनिपातप्रमाणतः ।' का. ४. 'उल्लोप्यते का. (?)' ५. 'वैहायसे' का. ६. 'विविधेन च ताः कार्या युग्मवृत्तेषु चैव हि ।' का. ७. 'नत्यर्धे सनिपातस्य' का. ८. 'इतोऽग्रे का-पुस्तके—

'विव(वि?)धस्त्रिविधो ज्ञेयः कीर्त्यमानान्निबोधत ।
सामुद्रश्च समुद्गोऽपि विवृत्तश्चेति कीर्तितः ॥
न्यासतोऽपि विधौ ज्ञेयो भुक्ता वै गेयकं सदा ।
आद्या तु मद्रके चैव सामुद्रः परिकीर्तितः ॥
लघुवर्णसमं ज्ञेयं सामुद्रे तु विधीयते ।
तत्त्वन्ते च तृतीये च तद्वै गेयकसंज्ञितः ॥
विदार्यङ्गसमोऽर्धे स्यात् अर्धे विसदृशं तथा ।
योगे तु अर्धसामुद्रस्तथा ज्ञेयः प्रयोक्तृभिः ॥
विदारी विषमा ज्ञेया न्यासापन्यास एव च ।
असंप्रयोगबाहुल्यं विवृत्तं परिकीर्तितम् ॥
द्विविधश्चैकतो वापि विज्ञेयं तु यथाक्रमम् ।
न्यासापन्याससंशान्तं सदा ज्ञेयं प्रयोक्तृभिः ॥
सन्यासश्चैव विन्यासो ह्यन्तमध्यो यथाक्रमम् ।
विन्यासः स तु विज्ञेयो विदारीमध्यमस्थितः ॥
विदारी वज्रविन्यासः पदान्ते क्वचिदेव हि ।
न तद् बाहुल्यमुद्दिष्टं प्रयोगस्य प्रयोक्तृभिः ॥ इयानधिकः पाठः ।

[1]गीतानि सप्तमद्रोकोल्लोप्यके च परान्तकम् ।
प्रकर्यो वैणकं चैव रोविन्दकमथोत्तरम् ॥ १८४ ॥
द्विविधं मद्रकं तत्र चतुर्वस्तु त्रिवस्तु च ।
शीर्षकेण समायुक्तं तच्च ज्ञेयं त्रिवस्तुकम् ॥ १८५ ॥
पञ्च षट् सप्त तानि स्युः शीर्षकं च परान्तके ।
प्रकर्यामथ चत्वारि स्युस्त्रीण्यर्धाधिकानि च ॥ १८६ ॥
रोविन्दकं तु सप्ताङ्गे षोडशाङ्गं परं स्मृतम् ।
द्वौ पादौ समवर्णौ तु एकको (कौ ?) वात्र कीर्तितौ ॥ १८७ ॥
प्रवृत्तं विविधं वापि तस्मात्पादौ प्रयोजयेत् ।
सप्ताङ्गं द्वादशाङ्गं वा प्राक्षमो(प्रोक्तमा?)वेणकं बुधैः ॥ १८८ ॥
तत्र व्यन्तं तु सप्ताङ्गं ध्यन्तं द्वादशकं तथा ।
पादः संधिर्मोपघातोपजं (वज्र ?) संपिष्टकं तथा ॥ १८९ ॥
पैंकं चतुरस्रं वाप्युपवर्तनमेव च ।
उत(प?)पातः प्रवेणी च व्यङ्गं संहरणं तथा ॥ १९० ॥
अङ्गानि द्वादशाङ्गस्य स्मृतान्यो(न्या?)वेणकस्य च ।
संपिष्टकोपपाताभ्यां प्रवेणीभ्यां विवर्जितम् ॥ १९१ ॥
उपवर्तनहे(ही?)नं च सप्ताङ्गपरिवर्जितम् ।
नि(वि?)[23]वर्तनं तु सप्ताङ्गो (ङ्ग ?) तुल्यवर्णपदं स्मृतम् ॥ १९२ ॥

---

१. 'ज्ञेयानि सप्त गीतानि मन्द्रकोऽप्योपरान्ततः ।' इति का. २. 'प्रतर्यो(?) वेणको विद्याद् ह्युल्लोत्यु(?)श्चोत्तरं तथा ।' इति का. ३. 'मन्द्रकं' का. ४. 'तत्तु' का. ५. 'वापि' का. ६. 'चापरान्तके' का. ७. 'रोविन्दकस्तु' का. ८. 'समवर्णेन एकेकस्तत्र कीर्तितः ।' का. ९. 'चापि' का. १०. 'तस्य त्वादौ' का. ११. 'प्रोक्तमावेणकं बुधैः' का. १२. 'तत्र त्र्यङ्गं तु' का. १३. 'ऽयङ्ग' का. १४. 'स्मृतम्' का. १५. 'प्रस्तारसंधिमापोस्यो वज्रसविष्टकं तथा ।' का. १६. 'सज्ञं' ख. १७. 'शीर्षकं चतुरस्रं च तथा चैवोपवर्तनम् ।' का. १८. 'उपपात.' का. १९. '°न्यावेणकस्य तु' का. २०. 'सविष्टको' का. २१. 'प्रवेण्या परिवर्जितम्' का. २२. 'उपवर्तविहीनं च सप्ताङ्गमपि कीर्तितम् ।' का. २३. 'विवर्तनं तु सप्ताङ्गं' का.

अन्त(नः?)योर्द्वादशाङ्गे तु तथान्यपदमिष्यते ।
उल्लोप्यकेऽपि चाङ्गानामेष एव विधिः स्मृतः ॥ १९३ ॥
अवगाढप्रवृत्तं च महाजनिकमेव च ।
आगात्र(?)स्यात्तथा व्यङ्गो महाजनिकवर्जितः ॥ १९४ ॥
स्थिति(तः?)प्रवृत्तं संयोगादेकाङ्गो (चा?) या(ङ्गं?)पि कीर्त्यते ।
एकाङ्गे संविधातव्यं महाजनिकमेव च ॥ १९५ ॥
व्यङ्गं चितप्रवृत्तं वा चैकाङ्गं वापि कीर्तितम् ।
व्यङ्गे व्याससमासाभ्यां ध्रुवाधातुविधिः स्मृतः ॥ १९६ ॥
स्थितं प्रवृत्तं च तथा महाजनिकमेव च ।
त्र्यङ्गोच(ङ्गस्तु) स्यादथ व्यङ्गो महाजनिकवर्जितः ॥ १९७ ॥
एकाङ्गोऽपि विधातव्यो महाजनिकसंयुतः ।
एवं व्याससमासाभ्यां बहुधाङ्गविधिः स्मृतः ॥ १९८ ॥
चतुरस्रस्तथा त्र्यस्रो विस्र(?)श्चान्तः प्रकीर्तितः ।
उ(आ?)वेणकस्य संहारो व्यङ्ग एकाङ्ग एव च ॥ १९९ ॥
नांदौ न मध्ये संहारे नित्यं चैव प्रयुज्यते ।
एककं(को?)विविधंवापि (विविधो वापि?) कार्यो ह्यन्ते प्रयोक्तृभिः ॥
उल्लोप्यकं षडवरं शैल्यं चैव ( विंशत्यङ्ग ? ) परं स्मृतम् ।
तच्च संहरणे कार्यं सु(मु?)खप्रतिमुखान्वितम् ॥ २०१ ॥
वैहायसकसंयुक्तं तेनापि च विवर्जितम् ।
त्रिष्वङ्गेष्ववरं ज्ञेयं परं स्याद्द्वादशस्वपि ॥ २०२ ॥

१. 'अनयो' का. २. 'यथान्यपद°' का. ३. 'स्थितं प्रवृत्तं च' का. ४. 'त्र्यङ्गान्तरः स्यान्त(त्त?)था व्यङ्गो' का. ५. 'स्थितप्रवृत्तं' ख. 'स्थितप्रवृत्तसंयोगादेकाङ्गं चापि कीर्त्यते ।' का. ६. 'व्यङ्गं स्थितं प्रवृत्तं वाप्येककाङ्गं प्रकीर्तितम् ।' का. ७. 'व्यङ्गे व्याससमासाभ्याम्' इत्यारभ्य 'चतुरस्रस्तथा त्र्यस्रो विस्र(?)श्चान्तः प्रकीर्तितः ।' इत्यन्तः पाठः का. पुस्तके नास्ति । ८. 'आवेणकस्य' का. ९. 'व्यङ्गेऽप्येकाङ्ग एव वा' का. १०. 'एतदर्धं' का. पुस्तके नास्ति । ११. 'एकेकोविविधोवापि कार्योऽप्यङ्गैर्बुधैः सदा' का. १२. 'विंशत्यङ्गपरं स्मृतम्' का. १३. 'तत्र संहरणं ज्ञेयं मुखप्रतिमुखान्वितम् ।' का. १४. 'पद्यमेतत् का. पुस्तके नास्ति ।

एकोद्यङ्गवरं ( ङ्ग[1]पद्परं[1] ) ज्ञेयं वैहायस(सि[1])कमेव च ।
[2]अस्य चाङ्गत्रयेऽतीते प्रयोगमुपपादयेत् ॥ २०३ ॥
उल्लो[3]प्यकोत्तराभ्या तु मुखप्रतिमुखे स्मृ[4]ते ।
ततोऽङ्गानां समासो वा विस्तारो वा[5] विधीयते ॥ २०४ ॥
मुखप्रतिमुखे चैवै ज्ञेये विविधसञ्ज्ञिते[6] ।
वृ[7]त्तप्रतिमुखं (खे[7]) च स्यादन्या या(दनयो[8])स्तु समासतः ॥२०५॥
उल्लोप्यके तथा शाखा सोत्तरो (रे[9]) सापरान्तके ।
[10]प्रतिशाख्या (खा[1]) तथा चैव सवर्णान्यपदा[ः ?] स्मृताः ॥ २०६ ॥
उत्तरं द्वादशपरं षडङ्गावरमिष्यते ।
[11]आकारपा(वा[1])दहीनेन तुल्य रोविन्दकेन तु ॥ २०७ ॥
अन्ते चा[12]थ विशेषेण स्थाप्यमस्य हि शीर्षकम् ।
एवमङ्गविधिः कार्यं सप्तरूपे प्रयोक्तृभिः ॥ २०८ ॥
अत ऊर्ध्वं प्रवक्ष्यामि गीता[13]ना(ना[1])या तु(वस्तु[1])कल्पनम्[14] ।
गु[15]रुवेदाष्टकं कृत्वा न्यसेल्लघ्वष्टकं पु[16]नः ॥ २०९ ॥
तत्रोपवहनं कार्यं प्रथमे तु गुरुद्वये ।
गुर्वक्षरे तृतीये तु तत स्यात्प्रत्युपोहनम् ॥ २१० ॥
गुर्वक्षरे चतुर्थे तु शम्या कार्या तु पञ्चमे ।
षष्ठसप्तमयोस्ताल शम्या गुर्वक्षरेऽष्टमे ॥ २११ ॥

---

१. 'एकाङ्गं पद्परं ज्ञेयं वैदायसिकमेव च ।' का. २. 'एतदर्धमपि का. पुस्तके नास्ति । ३ 'उल्लाप्यको०' का. ४ 'मुखप्रतिमुख स्मृतम्' का. ५. 'वापि' का. ६ 'विवधसञ्ज्ञिते' का. ७. 'वृत्त प्रतिमुखे च स्यात्' का. ८. 'तु श'त्ताख्य' का. ९ 'सोत्तरे सापरान्तरे' का. १० 'प्रतिशाखा तथा चैषा समवर्णपदा स्मृता ।' का. ११. 'आकारवादहीनेन सह' का. १२ 'चास्याविशेषेण स्थाप्ये मध्ये च शीपकम् ।' का. १३ 'गीतानो वस्तुकल्पनम्' का. १४. 'का. पुस्तकेऽत्र—

'कला षोडश विज्ञेया मात्रा सर्वेष्ववस्तुषु ।
तस्याश्चैव चतुर्भाग पादभाग प्रकीर्तित ॥' इत्यधिकम् ।

१५ 'आदौ गुर्वष्टक कृत्वा' का. १६. 'तथा' का.

ततोऽर्धकलिकान्पातान्कुर्याल्लघ्वक्षरेषु च ।
गुर्वक्षरे तालगीतपातास्तु कलिकाः स्मृताः ॥ २१२ ॥
शम्यातालौ तालशम्ये तेषु कुर्यात्क्रमेण तु ।
तालं शम्यां च तालं च संनिपातं तथैव च ॥ २१३ ॥
एवमेककलो ज्ञेयः कलायोगस्तु भ(म?)द्रके ।
गुरुविश्लेषपादेन द्विकलं परिकीर्तितम् ॥ २१४ ॥
विशेषेण कलास्तत्र पूर्वं पूर्वं निवेशयेत् ।
द्विकले भ(म?)द्रके चैव त्रिकलं स्यादुपोहनम् ॥ २१५ ॥
कलिकं द्विकलं वापि न वा स्यात्प्रत्युपोहनम् ।
द्विकलैर्गुर्वक्षरकृतैः पादमानै(नैः?)र्यथाक्रमम् ॥ २१६ ॥
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं वस्तुसंज्ञितम् ।
त्रिवस्तु द्विकलं ज्ञेयं भवेत्पातो विधीयते ॥ २१७ ॥
गुर्वक्षरेषु ये पाताः शम्यातालादयः स्मृताः ।
त एव पादभागेषु द्विकलेष्वत्र योजयेत् ॥ २१८ ॥
अष्टमी षोडशी शम्या दशमी च यथाक्रमम् ।
चतुर्दश्यां कलायां तु तान्वेदा ( तालं न ? ) द्वादशीयुतम् ॥२१९॥
लघ्वष्टके (क्षरे?) पात(द?)विधिर्यथापूर्वं प्रकीर्तितः ।
वस्तुत्रयेऽपि द्विकले एवं पातान्प्रयोजयेत् ।
शीर्षकं चैव कर्तव्यं षट्कलं पद्मपाणिना ॥ २२० ॥

---

१. 'ततोऽर्धकलितान्' का. २. 'तु' का. ३. 'तालगीते पादास्तु कलिता.' का. ४. 'द्वे वाद्य ( तु ? ) पूर्वशः' का. 'इतोऽग्रे—'शीर्षकं चास्य कर्तव्यं बुधैश्चाप्युदेन तु ।' इत्यर्धमधिकं का. पुस्तके. ५. 'तालयोगस्तु मन्द्रके' का. ६. 'परिचक्षते' का. ७. 'विश्लेषणे कलाश्चात्र यथा पूर्वं निवेशयेत् ।' का. ८. 'द्विकले मन्द्रके चैव' का. ९. 'कलिका द्विकलं चापि भवेच्च प्रत्युपोहनम् ।' का. १०. 'पादभागै.' का. ११. 'पातविधिस्त्वयम्' ख. 'पादे पादविधिस्त्वयम्' का. १२. 'गुर्वक्षरे' का. १३. 'तानेव पादभागेषु द्विकलोऽय प्रयोजयेत्' का. १४. 'तास्वेदा' क. 'तालं न' का. १५. 'लघ्वक्षरे पादविधि-' का. १६. 'प्रकीर्तितम्' का. १७. 'चैवं' का.

[1]कंडंकंडं शैलेन्द्राजसंस्थितमीशं शान्तं शिवं पन्नगेन्द्रपरिबद्धजटं मुनिगणनमितं ध्यानाभिरतं ज्ञानमयं मदनाङ्गहरं विभुं प्रभुं शरणगतोऽहं दैत्यैर्नागैः संस्तुतमीशं त्वां वेदमयं त्वां कर्तारं त्वां भुवनपतिं सर्वलोकनमस्कृतं ऋग्यजुःपति(ठि?)तं गङ्गाधरं शूलधरं भुजगेन्द्रधरं प्रणतोऽस्मि शिवं मृगराजचर्मपरिबद्धतनुं विपुलगतिं वृषभगतिं ज्वलनशिखिसदृशकपिलजटं तमहं नमामि शिवं शिरसा ।

समाप्तं द्विकलमद्रकम् ॥

देवं विमलं प्रणतार्तिहरं मायाधारं मायारूपं जटिलं नमामि शिवं शिरसा ।

शीर्षकं षट्कले समाप्तम् । द्विकलमद्रकम् (?) ।

चतुष्कलं प्रवक्ष्यामि यथावद्द्विजसत्तमाः ।
चतुष्कलैः पादभाजै(गै?)र्यथापूर्वमुदाहृतैः ॥ २२१ ॥
चतुर्भिस्तु भवेन्मात्रा त्रिमात्रं वस्तुसंज्ञितम् ।
पातांश्चैव प्रवक्ष्यामि पादभागैर्यथाक्रमम् ॥ २२२ ॥
चतुर्थे पञ्चमेत्ते(चै?)व (न्त्ये च?) शम्या कार्या तथाष्टके ।
दशमैकादशेप्य [शम्या ?] द्वितीया नवमे स्मृता ॥ २२३ ॥
षष्ठे तु सप्तमे ताला अन्ते च नवमस्य हि ।
दशमैकादशे चैव द्वितीयः समुदाहृतः ॥ २२४ ॥
आद्यं तु द्वादशे प्रोक्तं संनिपातोऽवसानतः ।
एवं पातविधानं स्यात्सर्ववस्तु प्रयोजयेत् ॥ २२५ ॥
[13]द्विर्मायाद्विकलस्यैवं विज्ञेयं च चतुष्कलम् ।
सप्तमे लघुनि त्वन्त्यो द्विर्मावोऽस्मिन्विधीयते ॥ २२६ ॥

---

१. 'कंदुं कंदु' ख. एष गद्यभागः फा. पुस्तके नास्ति । २. 'पादभ.गै.' फा. ३. 'त्रिमात्रः स तु संज्ञित.' फा. ४. 'पादमागे' फा. ५. '०ष्टमे तथा' फा. ६. 'षष्ठे च' फा. ७. 'ताल' फा. ८. 'नवमेऽप्य हि' फा. ९. 'नवमैकादशे चैव' फा. १०. 'आद्ये तु' फा. ११. 'द्वादशं', फा. १२. 'सर्वं वस्तु' फा. १३. फा-पुस्तके तु 'द्विर्मायाद्विकलस्यैवं' इत्यादि श्लोकचतुष्टयस्थाने—

चतुष्कलोऽत्र विहितः कलाष्टकमुपोहनम् ।
एका द्वे च चतुष्कश्च तथा स्यात्प्रत्युपोहनम् ॥ २२७ ॥
यथाक्षरस्य कर्तव्यं मद्रकस्य तु शीर्षकम् ।
चतुष्कलः पञ्चपाणिर्द्विकले द्विकलः स्मृतः ॥ २२८ ॥
चतुष्कलस्तु कर्तव्यो मद्रके तु चतुष्कले ।
त्रिवस्तु त्रिप्रमाणं तु अस्रतालसमुद्भवम् ॥ २२९ ॥
इत्युक्तं मद्रकं पातैस्त्रयोदशभिरन्वितम् ।
गुर्वक्षराणि चत्वारि चत्वारि स्युर्लघूनि च ॥ २३० ॥
तृतीये च चतुर्थे च शम्यातालौ लघूप्व(न्य?)पि ।
तालं शम्यां च ताले च संनिपातं च योजयेत् ॥ २३१ ॥

---

'प्रथमे वस्तुके ह्यादौ कलाष्टकमुपोहनम् ।
प्रत्युपोहनमित्युक्तं द्वितीयं द्विकलं भवेत् ॥
तृतीयं त्रिकलं ज्ञेयं चतुर्थे तु चतुष्कलम् ।
अस्यान्ते शीर्षकं कार्यं षट्पिता पुत्रकेन तु ॥
द्विकले तु यथापाते पञ्चपाणिचतुष्टये ।
द्विके(ती?)यकं तृतीये च चतुर्थे च यथाक्रमम् ॥
परिवर्तसमाप्तिस्तु चतुर्थे सा विधीयते ।
मन्द्रांशोपोहनं वस्तु प्रथमं च द्वितीयकम् ॥
एषा श्लोकचतुष्टयी वर्तते ।

१. 'चतुर्थस्तु त्रिप्रमाणं त्र्यस्रतालसमुद्भवम् ।' इति का. २. 'मन्द्रकम्' का. ३. का पुस्तके तु 'तृतीये च चतुर्थे च' इत्यादि 'वस्तुशाखाख्यमित्येतदुदितं लघ्वन्तकम् ॥ २४१ ॥' इत्यन्तपाठस्थाने—

'द्वितीये गुरुके शम्या तृतीये ताल एव च ।
लघ्वक्षरेऽष्टकमितान् पातानेतान् प्रयोजयेत् ॥
ताल शम्या च तालश्च संनिपातोऽन्त्य एव च ।
त्र्यस्रतालसमुद्भूतं विज्ञेयमवरान्तरम् ।
गुर्वक्षराणि विक्षिप्य त्रिकलं संप्रयोजयेत् ॥
पादभागैस्तथा पङ्क्तिं द्विकलं तु चतुष्कलम् ।
.........शम्यातालपदौ यथाक्रमम् ॥

लघ्वक्षरैककलिकैः पातैः सम्यक्प्रयोजयेत् ।
यथाक्षरं वर्धयेत्वेतद्विज्ञेयं चापरान्तकम् ॥ २३२ ॥
आदौ कलोपवहनं विश्लेषाद्विगुणं भवेत् ।
द्विकले कलिकं ज्ञेयं द्विकलं चाप्युपोहनम् ॥ २३३ ॥
कलिकं कलिकं चेष्टं तथैव प्रत्युपोहनम् ।
एतदेव द्विगुणितं विज्ञेयं तु चतुष्कलम् ॥ २३४ ॥
लघ्वक्षरे तृतीये तु द्विर्भावेऽन्त्या कला स्मृता ।
त्र्यस्रतालसमुद्भूतं पातैः षड्भिर्विभूषितम् ॥ २३५ ॥
वस्तुशाखाख्यमित्येतद्गदितं त्वपरान्तकम् ।
यथा शाखा तथैवास्य प्रतिशाखा विधीयते ॥ २३६ ॥
पश्चिमार्धसमा सा तु तथैवान्यपदा स्मृता ।
शिरश्चैककलेनापि[1] कर्तव्यं पञ्चपाणिना ॥ २३७ ॥
वृत्तौ निवृत्तयोगश्च[2] गते वस्तुचतुष्टये ।
शाखायां प्रतिशाखायां विशेषः पश्चिमे त्वयम् ॥ २३८ ॥
षट्कलापातसंयुक्ते तालिके तु ततः स्मृतः ।
तथैककलयुक्तेऽस्ति विधिवत्पञ्चपाणिना ॥ २३९ ॥
यथाक्षरेणैव[3] भवेदनयोरुपवर्तनम् ।
उपोहनं तु वस्त्वर्धे[4] द्विकलं प्रत्युपोहनम् ॥ २४० ॥

---

पूर्ववत् पातविन्यासः षष्ठपञ्चमयोः स्मृतः ।
आवापक्षेप···युतं पातैरेभिश्चतुष्कलम् ॥
चतुष्कलैः पादभागैः षड्भिस्तु समलंकृतम् ।
वस्तुसंख्यश्च षट्पञ्चसप्तमान् संप्रयोजयेत् ॥
द्वितीये पञ्चमेऽन्त्ये च द्वे शम्ये समुदाहृते ।
तृतीये तु भवेदन्त्यं द्वितीये पञ्चमे स्मृतः ॥
आदौ षष्ठे तु ताल: स्यात् सन्निपातस्ततोऽन्तिमः ।
पूर्ववस्तु समुद्दिष्टः पाता छेदे चतुष्कले ।
··············योगो गदितः त्वापरान्तके ॥' एवच्छ्लोकाष्टकमास्ते ।

1. '०कलेनापि' फा. 2. 'वृत्तौ निवृत्तयोगश्च' इत्यादि पद्यद्वयं फा-पुस्तके नास्ति ।
3. 'यथाक्षरे तु' फा. 4. 'वस्त्वर्धे' फा...

दक्षिणे तु तथा वृत्तौ चतुष्कलमपीष्यते।
उल्लोप्यकं तु द्विगुरु द्विलघ्वन्ते गुरुर्ययो॥ २४१॥
शम्यातालौ द्विरभ्यस्तौ संनिपातोऽन्त्य एव च।
प्रत्यक्षरकृतैः पातैः पञ्चभिः समलंकृतम्॥ २४२॥
चतुरस(सं ?)स्तु (स ?)विच्छेदमेवं ज्ञेयं यथाक्षरम्।
पूर्वोक्तेन विधानेन द्विचतुःकलमिष्यते॥ २४३॥
अस्य चाङ्गत्रये गीते वैहायस(सि?)कमिष्यते।
तदेकाङ्गपरं ज्ञेयं द्वादशाङ्गपरं तथा॥ २४४॥
प्रमाणं द्वादशकलं तथापातमथापि च।
अस्य तु द्विकला शम्या तालश्च द्विकलस्ततः॥ २४५॥
द्विकलश्च (च ?) पुनः शम्या तालश्चैककलैः स्मृतः।
ततः शम्या ततस्तालः संनिपातस्ततः परम्॥ २४६॥
शाखे यत्प्रतिशिखा (प्रतिशाखे ?)तु (स्या ?)नित्यमन्यपदा स्मृता।
यदौ ह्यस्य भवेदन्तस्तदन्ताहरणं बुधैः॥ २४७॥
यथाक्षरेण नियमात्संहार्यं पद्मपाणिना।
स्वैतालेनात(न्त ?)हीनस्य संहारः (रैः ?) परिकीर्त्यते॥ २४८॥
द्विप्रकारनिवृत्तश्च त्र्यंशो(शो ?)ऽथ त्रिविधस्तथा।
त्र्यस्रश्च चतुरस्रश्च मिश्रश्चापि प्रकीर्तितः॥ २४९॥

---

१. 'दक्षिणे तु तथा वृत्तौ' इत्यादि पद्यार्धस्थाने क-पुस्तके—
'द्विकलं दक्षिणे कार्यं वृत्तौ चैव चतुष्कलम्।
न चाङ्गोपोहनं कार्यं शेषाणां तु कदाचन॥
एवं चतुष्कले योगो मया प्रोक्तो पदान्तके।' इत्येतत्सार्धमेकं पद्यम्।
२. 'स्मृतम्' क. ३. 'चतुरस्रं समयेदं वा ज्ञेयं यथाक्षरम्' क. ४. 'द्विचतुष्कल°' क. ५. 'अन्ते चाङ्गत्रयगीते' क. [illegible] °च' क. ७. 'स्मृतः' क. ८. 'द्वि[illegible] ९. 'द्विकलः स्[illegible] (?)' [illegible] ११. '°मतः परम्' [illegible] १४. 'यथाक्षरेण' [illegible] क. १[illegible] स्मृतः'

स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ।
स्यात्पञ्चपाणितालेन तदन्वाहरणं यदा ॥ २५० ॥
तदा स्थितं भवेद्युग्मं तस्य पातविधिस्त्वयम् ।
शम्यापि द्विकला कार्या तालोऽपि द्विकलः स्मृतः ॥ २५१ ॥
चतुष्कलः संनिपातः प्रवृत्तमत इष्यते ।
अस्य तु द्विकला शम्या तथैवैककला पुनः ॥ २५२ ॥
चञ्चत्पुटश्च तालादिः संनिपातस्ततः परम् ।
स्थितं तालेन कर्तव्यं महाजनिकमस्य तु ॥ २५३ ॥
निवृत्ततालः कर्तव्यः प्र(नि ?)वृत्तस्यापि तत्त्वतः ।
अत्र तालविधिः श्रेष्ठः प्रायः समुपवर्तनम् ॥ २५४ ॥
आसप्र(दावु ?)द्धंटे(ट्ट ?)कः कार्यः परिवर्तक एव च ।
युग्मे हि मिश्रतालस्यायुग्मे यन्तः प्रयुज्यते ॥ २५५ ॥
विव(वि ?)धैककसंयुक्तपूर्वं पश्चाद्विधः स्मृतः ।
यथावदन्ततालोऽयं युग्मो मिश्रश्च कीर्तितः ॥ २५६ ॥
अतः परं प्रवक्ष्यामि त्र्यस्रतालविधिं प्रति ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥ २५७ ॥
त्रिकलः संनिपातश्च प्रवृत्तं यौप्यतः परम् ।
प्रवृत्तमस्य कर्तव्यं यथावत्परिवर्तनम् ॥ २५८ ॥

---

१. 'स्थितप्रवृत्ते तस्याङ्गे महाजनिकमेव च ।' का. २. 'तथा' का. ३. 'तथास्थितं' का. ४. 'प्रथमस्य विधिस्त्वयम्' का. ५. 'तालश्च' का. ६. 'तस्यापि' का. ७. 'तालश्चैककल पुन.' का. ८. 'चचत्पुटस्य' का. ९. 'स्थिततालो न कर्तव्यो' का. १०. 'निवृत्तस्यापि' का. ११. 'स्थितमाहाजनिकयो. प्रायः शाखप्रवर्तनम् ।' का. १२. 'आसायुद्घट्टक' का. १३. 'तु' का. १४. 'युग्मोऽप्यन्तः प्रयुज्यते' का. १५. 'विविधैकैकसंयुक्त. सर्वथान्तविधिः स्मृत ।' का. १६. 'युग्मे मिश्रे च' का. १७. 'त्र्यस्रमन्तविधिं प्रति' का. १८. 'प्रवृत्तथा°' का. १९. इतोऽग्रे का पुस्तके
'अत परं प्रवक्ष्यामि त्र्यस्रमन्तविधिं पुनः ।
शम्या तु द्विकला पूर्वं ततस्तालो विधीयते ॥' इत्येव श्लोकोऽधिकः ।
२०. 'प्रवृत्तमस्य कर्तव्यं' का.

[1]यथा क(क्ष?)रप्रवृत्तेन विधिवैलक्ष्यपाणिना।
[2]आस्यो(?)पि स्थिततालेन महाजनिकमिष्यते ॥ २५९ ॥
[3]निवृत्ततालः कर्तव्यस्तथात्र विनिवृत्तिमान्।
[4]युग्मौजमिश्रतालत्वान्मिश्रोऽप्यन्तःप्रवर्तनम् ॥ २६० ॥
[5]विवधैककसंयुक्तः सर्वश्चान्तविधेः स्मृतः।
व्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः ॥ २६१ ॥
तत्र युग्मं भवेद्व्यङ्गं[6] त्र्य[स्रमेका ?]ङ्गमेव च।
प्रवृत्तमपि विज्ञेयं व्यङ्गमेकाङ्गमेव वा ॥ २६२ ॥
महाजनिकमेकाङ्गं व्यङ्गं संहरणं भवेत्[7]।
स्थितादिकः प्रवृत्ताङ्ग[8] एवमन्तर्विधं बुधैः ॥ २६३ ॥
उल्लोप्यके सदा योज्यं[9] ऊहापोहविशारदैः।
[10]प्रकरीवस्तुपपात्रं(?) पाताश्चैकाश्चविंशतिः ॥ २६४ ॥
वस्तुप्रमाणं कर्तव्यं तथैव च चतुष्कलम्।
आद्यमात्राद्वयस्यान्तः शम्यातालान्वितो भवेत् ॥ २६५ ॥
मात्रात्रयस्य चान्यस्य[12] शम्यैका तु ततः स्मृता।
चतुर्थ्यां द्वादशस्तालः पञ्चम्यां चाष्टमः स्मृतः ॥ २६६ ॥

---

१. 'यथाक्षरप्रयुक्तेन समासात्' का. २. 'अन्यापि' का. ३. 'प्रवृत्तः कालः कर्तव्यस्तथास्यान्तनिवर्तिते' का. ४-५. एतार्धद्वयी का पुस्तके नास्ति। ६. 'त्र्यस्रमेकाङ्गमिष्यते' का. ७. 'स्मृतम्' का. ८. 'प्रवृत्तान्तमेवमन्तं विदुर्बुधाः।' का. ९. 'योज्यम्' का. १०. 'इतोऽग्रे का-पुस्तके 'प्रकरीवस्तुपपात्रं (?)' इत्यादि सार्धपद्यस्य स्थाने—

'वस्तु प्रयोगः कर्तव्यः प्रकुर्याद् द्विचतुष्कलम्।
न(नि?)यताक्षरयोगोऽत्र न चात्र द्विकलो भवेत् ॥
आद्यमात्रात्रयस्यान्ते शम्यातालौ प्रकीर्तितौ।
षण्मात्रं पातसंयुक्तं वस्तु कार्यं यथाक्रमम् ॥
उपोहनं तु वस्त्वर्धे प्रथमे च द्विजोत्तमाः।
शम्या अस्य तु मात्रा स्याद् द्वितीया तालसंयुता ॥' इति श्लोकत्रयी वर्तते।

११. 'षण्मात्रा' इति भवेत् का. १२. 'चान्त्या स्याद् शम्यैका च पुनस्त्रया।' का.

षष्ठ्यां तु द्विकला शम्या तालश्च द्विकलो भवेत् ।
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ॥ २६७ ॥
शम्या तालश्च [तालश्च ?]शम्या तालस्तथैव च ।
शम्यातालं[?]सनिपात इति वस्तु प्रकीर्तितम् ॥ २६८ ॥
यदा त्वर्धचतुर्थानि वस्तूनि मकरी भवेत् ।
पश्चिमार्धे तदस्यैव तदर्धं प्राग्निवेशयेत् ॥ २६९ ॥
कनिष्ठासारितेनास्य कार्यं संहरणं ततः ।
पादः पूर्वसमः कार्यस्त्वपरान्तकशाखया ॥ २७० ॥
उं(आ?)वेणके (को? )द्वितीयोऽपि तस्यैव प्रतिशाखया ।
अंनित्यः शीर्षको(कः? ) तालो माषघातस्ततः परम् ॥ २७१ ॥
मार्षघातो द्वादशकलस्तस्य पातविधिः स्व(स्त्र?)यम् ।
कर्तव्या द्विकला शम्या तालो द्विकल एव च ॥ २७२ ॥
पुनश्च द्विकलस्तालः शम्या च द्विकला पुनः ।
ततश्चैककलस्तालसनिपातः कलात्रये ॥ २७३ ॥
प्रायेण माषघातश्चै विव(वि ?)धाङ्गः प्रकीर्तितः ।
संनिपातश्च पश्चार्धे कदाचिदुपवर्तनम् ॥ २७४ ॥
तस्य स्यात्कलिकेनैव तच्चोष (?) पद्मपाणिना ।
संधिर्यथाक्षरेणैव कर्तव्यः पद्मपाणिना ॥ २७५ ॥
एकैकं विव(वि? )धो वापि तस्याङ्गं समुदाहृतम् ।
अन्यस्ये चतुरस्रस्य प्रवृत्तो(त्तौ?) या(यो?) विधि· स्मृतः ॥ २७६ ॥

१. 'शम्या तालश्च तालश्च' का. २. 'शम्याताल' का. ३. 'प्रकीर्तिते' का. ४. 'पश्चिमार्धेपदस्यैतत्तदार्धे' का. ५. 'तालः संवरणे मत ' का. ६. 'आवेणको द्वितीयस्य तस्य च प्रतिशाखया ।' का. ७. 'स एवं पातविन्यासो माषघातमतः परम् ।' का. ८. 'पद्घातो' का. ९. 'शम्या च द्विकला पुन ' का. १०. 'एतदर्धं का-पुस्तके नास्ति । ११. 'तालः' का. १२. 'ऐशु' का. १३. 'विविधाङ्ग.' का. १४. 'संधिर्येव हि तस्यान्ते' का. १५. एतदर्धं का-पुस्तके नास्ति । १६. 'यथाक्षरेणेव' का. १७. 'एकैकं विविधो वापि' का. १८. 'तस्याङ्गे समुदाहृते' का. १९. 'अन्तस्य' का. २०. 'प्रवृत्ते' का.

विव(वि?)धाङ्गेन[1] तेनैव चतुरस्रकमिष्यते ।
संधिवद्वज्रतालश्च[2] द्विधा संपिष्टकं[3] स्मृतम् ॥ २७७ ॥
सप्ताङ्गं[4] द्वादशकलं द्वादशाङ्गे[5] तथैव च ।
निष्काममादितः कृत्वा शम्यास्त्रिस्तः प्रयोजयेत् ॥ २७८ ॥
तालत्रयं[6] ततश्चैव शम्यातालौ[7] ततः परम् ।
शम्यातालौ ततः कार्यौ संनिपातोऽन्त्य एव च ॥ २७९ ॥
तु(आ?)वेणके[8] तु सप्ताङ्गे संपिष्टकमिदं[9] स्मृतम् ।
द्विशम्यातालयोगेन द्वादशाङ्गेऽपि चेष्यते ॥ २८० ॥
पाता नवैकादश[10] वा संपिष्टकम्[11] उदाहृतम् ।
वज्रवत्सं[12](त्सः?)प्रयोक्तव्यमुपवर्तनमेव च ॥ २८१ ॥
युक्ता विव(वि?)धवृत्ताभ्यां[13] प्रवेणी द्विविधा[14] स्मृता ।
पञ्चपाणिः प्रकर्तव्यौ[15] (व्यः?) प्रवेण्या तु यथाक्षरौ[16] ॥ २८२ ॥
द्विकलो वापि मिश्रो वा प्रयोगोऽङ्गवशानुगः ।
अन्ते[17] वास्याः प्रकर्तव्यः कदाचिदुपवर्तनम् ॥ २८३ ॥
पञ्चपाणिविधानेन यथोक्तेनैव तद्भवेत् ।
द्वितीय[18]पाततालेन शपपातश्च कीर्त्यते ॥ २८४ ॥
वज्रतालेन कर्तव्यं क्रमं[19] संहरणस्य तु ।
रोविन्दके तु षण्मात्राः पाता[20]श्चैकान्नविंशतिः ॥ २८५ ॥

---

१. 'विधिनानेन' का. २. 'वज्रकालस्य' का. ३. 'संविष्टकं' का. ४. 'सप्ताङ्गैः' का. ५. 'द्वादशाङ्गैर्दशैव तु' का. ६. 'तालस्तत्र तथैव' का. ७. 'शम्याताल.' का. ८. 'आवेणके' का. ९. 'संविष्टकमिति स्मृतम्' का. १०. 'नवैकादश वा' का. ११. 'संविष्टक°' का. १२. 'वज्रवत्संप्रयोक्तव्यं' का. १३. 'विविधवृत्ताभ्यां' का. १४. 'विविधा' का. १५. 'प्रकर्तव्य.' का. १६. 'यथाक्षरम्' का. १७. 'अङ्गं चास्य प्रकर्तव्यं' का. १८. 'द्वितीया तालपातेन' का. १९. 'अन्ताहरणमस्य तु' का. २०. 'पादभागेश्चतुष्कले.' का.

अर्धा(र्धे!)तीते (च!) मात्राणां पञ्चानां पात इष्यते ।
तालः शम्यार्धतालश्च शम्यातालस्तथैव च ॥ २८६ ॥
पञ्चानामपि मात्राणां विधिरेष यथाक्रमम् ।
चतुर्दशोऽपि पञ्चम्या मात्रायास्ताल इष्यते ॥ २८७ ॥
चतुष्कलां(ला!) तु या तुल्या षष्ठी मद्रकमात्रया ।
इति पादस्तथाष्टौ च कलापादादुपोहनम् ॥ २८८ ॥
ततश्चैव प्रयोक्तव्यं द्विकलं प्रत्युपोहनम् ।
पातश्चैत्संनिपातश्च विव(वि!)धैकप्रयोजिताः ॥ २८९ ॥
वर्णानुकर्षोऽष्टकलः स्त्वैः प्रस्तार इष्यते ।
तुल्यवर्णोपनहनो द्वितीयः पाद इष्यते ॥ २९० ॥
शरीरताल(:!)कर्तव्यः प्रकारोऽपि विशेषतः ।
द्विकलेनैव कर्तव्यो विशेषात्पञ्चपाणिना ॥ २९१ ॥
कला द्वादश निर्दिष्टं प्रमाणं चास्य तत्त्वतः ।
रोविन्दकशरीरं तु षट्कलोपोहनं स्मृतम् ॥ २९२ ॥
विच(वि?)धं वापि वृत्तं [ वा!] तस्यादौ परिकीर्तिता ।
आकारवृंचपरुपोऽत्र.................. ॥ २९३ ॥

१. 'अर्धेऽन्ते चैवमात्राणां' का. २. 'तालशम्या च तालश्च' का. ३. इतोऽग्रे का. पुस्तके—

'अन्ते शम्या तथा चैव सर्वासामपि कीर्तिता ।' इत्यधिकम् ।

४. 'चतुर्दशस्तु पञ्चम्या' का. ५. 'मात्रायां' का. ६. 'चतुष्कला तु तत्तुल्या' का. ७. 'षष्ठमन्द्रकमात्रया' का. ८. 'तथा चाष्टौ कलाः कार्याः प्रथमायामुपोहनम् ।' का. ९. 'प्रयोक्तव्यः द्विकल.' का. १०. 'पाताः स्युः संनिपातान्ताः विविधैकक-योजिता.' का. ११. 'अन्ते' का. १२. 'तुल्यवर्णोपवहनो' का. १३. 'शरीरतालः' का. १४. 'प्रस्तारोऽपि' का. १५. 'विविधो वा प्रगतं वा' का. १६. 'प्राक्चरस्त-मन्त्रर् स्यात्पुष्पं त्रिकमेव वा ।' का. १७. 'का पुस्तके तत्र—

'आकारवृत्तमन्यत् स्याच्चतुष्कं त्रिकमेव वा ॥ ३६७ ॥' इत्यारभ्य,
'परिवर्तं तथैवास्य पुंवाक्यं प्राक् समाचरेत् ।
त्रिवाक्यं पुरुषश्चास्य चतुर्वाक्याङ्गना स्मृता ॥' ४८९ ॥

इत्यन्ता ९२ श्लोका अधिकास्तेऽप्यत्र द्रष्टव्याः—

'आकारवृत्तमन्यत् स्याच्चतुष्कं त्रिकमेव वा ।
तस्योपरि यथेष्टं स्यात् अधस्तादङ्गयोजनम् ॥
अविशेषनिवृत्तं तु शीर्षकं तु प्रयोजयेत् ।
यथाक्षरेण तच्चैव कर्तव्यं पञ्चपाणिना ॥
आदावेकैकमन्तस्य प्रवृत्तो नियमो भवेत् ।
इति रोविन्दकः प्रोक्तः स्यादुत्तरमतः परम् ॥
उत्तरं संप्रवक्ष्यामि यथाविहितलक्षणम् ।
अस्येदमुत्तरस्याथ मुखं प्रतिमुखं भवेत् ॥
उल्लोप्यकपदस्यादौ मात्रा चैका चतुष्कला ।
रोविन्दकपदाकारगणवर्जः प्रयोजयेत् ॥
शाखा षडङ्गा लघवो द्वादशाङ्गा परा स्मृता ।
षट्पाता द्वादशकला शाखा ज्ञेया प्रमाणतः ॥
तस्यास्तु द्विकलस्तालः शम्या चैककला भवेत् ।
तथा च द्विकलस्तालः शम्या च द्विकला ततः ॥
पुनश्चैककलस्तालः सन्निपातः कलात्रये ।
शाखावत् प्रतिशाखा च भवेदन्यपदा तु सा ॥
अविशेषानिवृत्तस्याप्यस्यान्ते नियमो भवेत् ।
शीर्षकश्चैव कर्तव्यं अस्यान्ते पञ्चपाणिना ॥
पञ्चपाणिविधानेन प्रतिशाखा ततः परम् ।
द्विकलः पञ्चपाणिस्तु पूर्वपातैर्यथाक्रमम् ॥
तालोऽयं दक्षिणे मार्गे सप्तरूपस्य कीर्तितः ।
य एव दक्षिणे कालः स वृत्तावपि चेष्यते ॥
चित्रेणैव हि सर्वत्र विशेषो यत्र नोच्यते ।
अर्थयोगादेष एव वृत्ततालविधिर्भवेत् ॥
उल्लोप्यकोत्तरमुखे हित्वा युग्मं तथैककम् ।
अर्थयोगस्तु तत्काले द्विकलः सम्प्रकीर्त्यते ॥
चतुष्कलः स्याद् द्विकलो द्वितीयश्च तथाक्षरः ।
रोविन्दकोल्लोप्यकयोर्मन्द्रकोत्तरयोस्तथा ॥

शरीरेषु विधिर्ह्येष शेषेषु प्रकृतिर्भवेत् ।
प्रकृतावपि तेषां स्यात् विकल्पेन चतुष्कलम् ॥
कालेनैव भवेद्वृत्तावर्धयोगश्चतुष्कले ।
वार्त्तश्चतुष्कलो योगो दक्षिणे स्यात् कदाचन ॥
मन्द्रकोल्लोप्यकयोर्मुखोपवहनेषु च ।
यो दक्षिणे तालविधिर्द्वैसौ स समुदाहृतः ॥
चित्रेर्व्यस्ते समस्ते वा तावुभौ परिकीर्त्तितौ ।
शाखानिवृत्तमन्यत्र चित्रेऽन्न प्रथमार्गिकः ।
इति मार्गत्रये ह्येतत् सप्तरूपं प्रकीर्त्तितम् ॥
द्विविधा प्रकृतिश्चास्य कुलकं छेद्यकं तथा ।
एकार्थं कुलकं तत्र पृथक्छेद्यकमिष्यते ॥
निर्युक्तं पदनिर्युक्तमनिर्युक्तं तथैव च ।
त्रिविधं चैव विज्ञेयं सप्तरूपं प्रयोक्तृभिः ॥
बहिर्गीताङ्गशाखाभिर्युक्तं निर्युक्तमिष्यते ।
बहिर्गीतविहीनं तु पदनिर्युक्तमिष्यते ॥
बहिर्गीताद्विहीनञ्चाप्यनिर्युक्तमिति स्मृतम् ।
इत्येतत्सप्तरूपस्य प्रकृतं द्विविधं स्मृतम् ॥
प्रयोक्तं सप्तरूपं हि समवेताद् विनिःसृतम् ।
देवताराधनं पुण्यमनन्तं गीतवादितम् ॥
सर्वेषामेवगीतानामन्तेषु च्छन्दकं स्मृतम् ।
चतुरस्रं ततस्त्र्यस्रं नवास्रं युग्ममेव च ॥
आसारितापाणिकानां च प्रमाणानां तथैव च ।
अनेनैव विधानेन युग्मौजफलं विभावयेत् ॥
यो गणः पूर्वमुद्दिष्टस्तस्यादौ तु कला भवेत् ।
चतुर्मात्राकृताश्चैव पत्वः समवधारयेत् ॥
अष्टाङ्गा वा षडङ्गा वा युग्मौ यो वा प्रमाणतः ।
इति युग्मे तु कर्त्तव्या आन्तिकी चैव पाणिका ॥
चतुष्पादा तथैवाङ्गा ष्यङ्गा त्र्यङ्गा विभावयेत् ।
अतोऽन्यैस्तैः समस्तैर्वा युग्मौ यो वा प्रकीर्त्तितो ॥
तस्य रूपस्य तालोऽयं मया हि परिकीर्त्तितः ।
चतुरस्रा तथा त्र्यस्रा ध्रुवा ज्ञेया प्रयोक्तृभिः ॥
तासां तालविधानं तु पदप्रमाणं समासतः ।

अङ्किता चोत्थिता चैव चतुरस्रा प्रमाणतः ॥
चतुर्भिः सन्निपातैश्च ज्ञेया चच्चत्पुटा स्मृता ।
सुप्रतिष्ठावसानानां सन्निपातेऽन्त इष्यते ॥
अपकृष्टा स्मृता त्र्यस्रा तथा चापपुटाश्रिता ।
चतुर्भिः सन्निपातैश्च युक्तो पादान्तमिश्रिते ॥
तथाकाशागृहस्तासौ तावच्चच्चत्पुटः स्मृतः ।
विलम्बिता च त्र्यस्रा च स एतद्वितयान्विता ॥
निष्क्रामादिप्रयुक्तेन योज्या चापपुटेन तु ।
पादान्ते सन्निपातस्तु द्विकलेन यथाविधि ॥
शीर्षकाणि च योज्यानि द्विविधं पद्मपाणिना ।
चतुर्भिः सन्निपातैश्च सम्यक्पादान्तसंस्थितैः ॥
पादान्तस्यान्ततालस्य द्विमात्रान्त्यं प्रयोजयेत् ।
मात्राद्वयं च काले तु झंकारो समतां नयेत् ॥
किंचिद्विताविरिक्तायां मात्राभिर्यत्र चैककला ।
स्यात्समलं नयेत्तां तु क्षयवृद्ध्या प्रयोगवित् ॥
वर्णप्रकर्षेण च स्यात् तालानामपि वर्धनम् ।
स्यात् झंकारो नियुक्तानां अक्षरे च कलान्तरम् ॥
कलातालप्रमाणेन यस्मात् शुष्ककदुट्टनात् ।
तथा ध्रुवाणां सर्वेषु कलातालं प्रयोजयेत् ॥
भङ्गतालश्च कर्तव्यो नत्कुटानां यथाविधि ।
कलापातेन संयुक्तस्तालश्चच्चत्पुटो भवेत् ॥
एष एव पुनस्त्र्यस्र खञ्जखेलेति चेष्यते ।
पुनः प्रकृतयो ह्येष भङ्गस्त्वाक्रीडितो भवेत् ॥
यान्यङ्गानि ध्रुवासु स्युर्ध्रुवास्तु भवन्ति हि ।
तानि अष्टकयोगेन योजयेत् षट्कलेन वा ॥
एवमेव मया तालो ध्रुवाणां परिकीर्तितः ।
चतुष्पादावसाने तु सम्प्रवक्ष्यामि लक्षणम् ॥
यद्दैव्यकुसुमावाद्यः(?) शृङ्गाररससंश्रयः ।
वृत्तं विकल्पितं तस्य ताललक्षणमुच्यते ॥
नारीप्रयोज्यं न ह्येयमाश्रितं तु चतुष्पदम् ।
त्र्यस्रा वा चतुरस्रा वा द्विविधा वा चतुष्पदा ॥
एकस्या वा बहूनां वा द्वयोर्वा वाक्ययोजनात् ।

तथा शृङ्गारभूयिष्ठा त्रिविधा स्याच्चतुष्पदा ॥
प्रवृत्तसंज्ञा विज्ञेया तथा च स्थितसंश्रया ।
स्थितप्रवृत्तिसंज्ञा च त्रिविधा स्यात् पुनश्च सा ॥
निष्कामश्चैव शम्या च तालशम्या तथैव च ।
ततोत्तमथ निष्कामः सन्निपातस्तथान्तिमः ॥
अष्टाविंशतिकल्पा तु बुधैर्ज्ञेया चतुष्पदा ।
तस्या विकल्पान् वक्ष्यामि यथावदनुपूर्वशः ॥
प्रवृत्ताख्या द्रुतलया स्थिताख्या च विलम्बिता ।
स्थितप्रवृत्तसंज्ञा च ज्ञेया मध्यलयाश्रिता ॥
ज्ञेयश्चचत्पुटस्तस्य तथा चापपुटः पुनः ।
द्विकलेन विधानेन तस्य चापविधिर्लयम् ॥
षडक्षरा च विपुला मागधी चार्धमागधी ।
समाक्षरपदा चैव तथा च विषमाक्षरा ॥
शाखान्तापहरणा विज्ञेया वाप्यनीकिनी ।
अवसानापहरणा अन्तापहरणा तथा ॥
अभ्यन्तरापहरणा तथा चैवार्धनर्कुटा ।
अर्धसंज्ञा च मिश्रा च तथा चैवान्तर्गीविका (?) ॥
एकावसाना विज्ञेया तथा च नियताक्षरा ।
अर्धप्रवृत्ते एतासां लक्षणं श्रूयतामिदम् ॥
व्यक्तवाक् या लघुप्राया षडक्षरसमन्विता ।
द्रुतवाक्या द्रुतलया ज्ञेया षडक्षरेति सा ॥
गुरुप्लुताक्षरप्राया स्वल्पवाक्या यदा तथा ।
त्रिलया पृथुलाख्या च सुकुमारविधौ स्मृता ॥
त्रिलया त्रियतिश्चैव निम्नवाक्षराम्विता ।
एकविंशतितालेन च मागधी सम्प्रकीर्तिता ॥
गुरुलघ्वक्षरकृता द्रुतमध्यलयान्विता ।
मागध्येवार्ध(र्धे)ताले च युक्ता स्यादर्धमागधी ॥
गुरुलघ्वसमाभिः पदैर्वर्णैस्तथैव च ।
लघुतालैः शनैश्चैव समाक्षरपदा स्मृता ॥
अक्षरैर्विषमायां तु मात्रापादैस्तथैव च ।
लघुतालैरनियमा सा ज्ञेया विषमाक्षरा ॥

सान्त्वन्तः सन्निपातश्च स्या(सा?)त्सुखारोऽन्त्य इष्यते।
समायन्तापहारणो सानुस्वारकृता तथा॥
मध्याद्यन्तैः सन्निपातैरनुस्वारकृताक्षरैः।
शेषैरनिलया पादैर्विज्ञेया सा लनीकिनी॥
अवसानापहरणा नित्यं ज्ञेयाऽमिताक्षरा।
अनुस्वारकृता चैवमन्तापहरणा स्मृता॥
द्वितीया सन्निपातेन मध्येऽक्षरसमन्विता।
अभ्यन्तरापहरणा सानुस्वारेव सा स्मृता॥
अर्धेन भिद्यते या तु विज्ञेया सार्धनर्कुटा।
त्र्यस्रा अनेन विधिना ह्यर्धखण्डेन कीर्त्यते॥
खञ्जनर्कुटनाभ्यां तु मिश्रभावो यदा भवेत्।
त्र्यस्रा वा चतुरस्रा वा तद्मिश्रेव कीर्त्यते॥
उपश्लेषेण यस्यास्तु स एवार्थः समाप्यते।
शीर्षकं सा तु विज्ञेया शीर्षितेन विभूषिता॥
एकपादावसानस्तु यस्य स्यादर्धवर्णतः।
एतावसानेव बुधैः सा ज्ञेया तु चतुष्पदा॥
पूर्वपादेन तस्य स्यात् सर्वत्र गुरुलाघवः।
पादे पादावसाने च सा ज्ञेया नियताक्षरा॥
यस्या स्थितप्रवृत्तं वा भवत्यर्धनिवेशितम्।
अर्धप्रवृत्ता सा तु स्यादुभाभ्यामपि वा कृता॥
निष्क्रामश्चैव शम्या च ताल शम्या तथैव च।
आवापः सन्निपातश्च षडस्या मातृकाः स्मृताः॥
उपोहनं तु त्रिविधं सुकुमारे प्रकीर्तितम्।
द्व्यवरं त्र्यवरं तस्य कलाभिः प्रत्युपोहनम्॥
विकलाख्यं चान्तकलं सन्निपातपरं स्मृतम्।
सन्निपातापहरणा आदौ मध्येऽन्ततोऽपि वा॥
वाक्यद्वयाभिनिष्पन्ना नानावाक्यापि सा स्मृता।
एकपादा द्विपादा वा त्रिपादा च प्रकीर्त्यते॥
चतुष्पादापि वा भूत्वा नालः परमिहेष्यते।
कृत्वा तु पादबहुला न शोभां जनयिष्यति॥
वर्णस्य प्रकृतिर्ह्यन्यद्वस्त्यकिर्हि···स्यति।
तस्मात्स्थिता स्याद् द्विपदा खेकेनैव यदा स्मृता॥

चतुष्पदा प्रवृत्ता तु सम्यक् प्रोक्ता प्रयोक्तृभिः ।
तत्रैकरूपैकपदा स हि पादपता(दा?) स्मृता ॥
षड्विंशत्परमा सा हि सन्निपातपदा भवेत् ।
आभ्यामुभयप्रमाणे तु त्रिपादः परिकीर्त्यते ॥
सन्निपातप्रमाणेन ज्ञेयो मध्यलयस्तथा ।
लास्यमित्येव यत्पूर्वं मया वः परिकीर्त्तितम् ॥
लक्षणं तस्य वक्ष्यामि प्रयोगञ्च यथाक्रमम् ।
लासनाल्लास(स्य?)मित्युक्तं स्त्रीपुम्भावसमाश्रयम् ॥
भाणवत् चक्रहास्यं स्याद्धृदयस्थु(?) च तद्भवेत् ।
एकार्थं पृथगर्थं वा तदङ्गेषु प्रकीर्त्तितम् ॥
अङ्गानि दश चैवास्य तेषां वक्ष्यामि लक्षणम् ।
गेयपादं स्थितं पाठ्यं आसीनं पुष्पगन्धिका ॥
प्रच्छेदका(कः?) त्रिमूढश्च सैन्धवाख्यं द्विमूढकम् ।
उत्तमोत्तमकं चैव विचित्रपदमेव च ॥
उक्तप्रत्युक्तभावश्च लास्याङ्गानि प्रकीर्त्तिताः ।
लास्ये दशविधं ह्येतदङ्गनिर्देशलक्षणं ॥
आसीनकाख्यं योज्यं स्यात् प्रयत्नादासनस्थया ।
स्थितवाद्यश्च भौमीभिः···चारीभिर्युतम् ॥
नृत्तकाले च वाद्ये च गृहमोक्षे तथैव च ।
गीताङ्गानां विधिर्यः स्यात् स लासो प्रायशः स्मृतः ॥
अङ्गान्येतानि लास्ये स्युर्दशोक्तानि समासतः ।
एतेषां चैव वक्ष्यामि प्रयोगं लक्षणं तथा ॥
स्थापितैर्भाण्डविन्यासैः पटे चैवापकर्षिते ।
बृंहणः पूर्ववर्षेषु चासने परिकल्पिते ॥
मार्दवेषु मृदङ्गेषु शिराशि प्रतियोजिते ।
प्राक् शुष्कासारितं कार्यं तन्त्रिवेणुप्रयोजितम् ॥
मार्गसारितताडेन ततश्चासारितं बुधैः ।
परिवृत्तैस्त्रिभिर्युक्तमतश्चोपोहनं भवेत् ॥
त्र्यस्रेण विकटेन स्यात् ततश्च परिधानकम् ।
प्रयोक्तव्यं प्रयोगज्ञैः परिवर्त्तात्मकं तथा ॥
परिवर्ते तथैवास्य पुंवाक्यं प्राक् समाचरेत् ।
भिवाक्यं पुरुषश्चास्य चतुर्थाङ्गमात्मा स्मृता ॥

त्रिवाक्यं [पुरुषश्चास्य?] (स्यात्) चतुर्वाक्यं गता स्मृता।
कार्यं तथा निर्वहणं प्रत्येकं परिधानके ॥ २९४ ॥
इत्येतत्प्रथमं खण्डं लोके गेयपदं स्मृतम्।
स्थितपा(वा?)द्यस्य वक्ष्यामि विधानं चाप्यतः परम् ॥ २९५ ॥
वृत्तमेकप्रथमे द्वे योजयेत्पद्मपाणिना।
ततः परं ते भूयोऽपि युग्मतालेन वा स्मृते ॥ २९६ ॥
अवसानं तु कर्तव्यं त्व(च?)रितं पद्मपाणिना।
द्विकलेनेति कर्तव्यं स्थितपाठ्यं प्रयोक्तृभिः ॥ २९७ ॥
उपोह्य तालं त्र्यस्रं वा पूर्वया तैस्तैः समैस्तथा।
आसीनपा(वा?)द्यं युञ्जीत सर्वैर्भावैस्तु पौरुषैः ॥ २९८ ॥
एवं चतुर्भिः पादैस्तु समैरर्थवशानुगैः।
आसीनपा(वा?)द्यं कर्तव्यं विधिवत्पद्मपाणिना ॥ २९९ ॥
अतीतयुग्मतालेन श्लोकैः कार्यस्ततः परम्।
अष्टादश द्वादश वा पदानि तु ततः पुनः ॥ ३०० ॥

---

१. 'चतुर्वाक्याङ्गना स्मृता' का. २. 'प्रारयथे' का. ३. 'खण्डं' का. ४. 'गेयपादमिति स्मृतम्' का. ५. 'स्थितवाद्यस्य' का. ६. 'वृत्तमेकमथ द्वे वा' का. ७. 'अतः परं च द्वे भूयः खञ्जिते सम्प्रयोजयेत्' का.

८. 'चञ्चत्पुटेन कर्तव्या द्विकलेन ततः परम्।
यथाक्षरेण चायुक्त्या सनिपातैस्तथाष्टभिः ॥' इति पद्यमधिकमत्र।

९. 'अवसाने तु कर्तव्यं चरितं पद्मपाणिना।' का. १०. 'योक्तव्य स्थितवाद्यप्रयोक्तृभिः।' का.

११. 'वृद्धपादपदैः समैः' का. १२. 'आसीनवाद्यं युञ्जीत भावैः सर्वैश्च पौरुषैः।' का. १३. 'गेयं' का. १४. '°रर्थपरानुगैः°' का. १५. अस्यार्धस्य स्थाने का. पुस्तके तु—

'आसीनवाद्ये कर्तव्यः प्रयोगः शीर्षकस्य तु।
अष्टभिः सन्निपातैश्च युक्तं तालादिनैव तु ॥
यथाक्षरप्रवृत्तेन विधिवत् पद्मपाणिना।' इति सार्धं पद्यम्।

१६. 'श्लोकः' का. १७. 'च' का.

कुर्यात्तु(दु ?)त्तरतालेन ताले निर्वहणं बुधः ।
एतदासीनपा(वा ?)द्यस्य विधानं परिकीर्तितम् ॥ २०१[३] ॥
स्यात्पुष्पगण्डिका नाम यदङ्गं तन्निबोधत ।
तत्रैकं पौरुषं श्लोकं समवृत्तं प्रयोजयेत् ॥ २०२ ॥
चतुर्भिः संनिपातैश्च ज्ञेयं चच्चुपुटाश्रयम् ।
पादे पादे तथैवं च वाद्यं नृत्तं तथैव च ॥ २०३ ॥
ततश्चान्ये स्मृतं वृत्ते खञ्जनर्कुटसंज्ञिते ।
अन्ते निर्वहणे चास्य शीर्षकं पञ्चपाणिना ॥ २०४ ॥
आविद्धशर्याङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ।
ज्योत्स्नायां मन्दिरायां वा सलिले दर्पणेऽपि वा ॥ २०५[८] ॥
छायासुदृश्यकान्तस्य प्रहर्ष्येण विभूषितम् ।
नृत्तं मत्तप्रसादक्रीडायां हेलादिभिरलंकृतम् ॥ २०६ ॥
अङ्गप्रस्वेदकं तत्राविन्याल्लास्यं प्रयोगवित् ।
चच्चपुटस्य तालेन तस्य प्रक्रीडितं भवेत् ॥ २०७ ॥
मात्रावृत्तसमैः पादैः श्लोकबन्धो भवेदथ ।
वैहृस्वाक्षरार्थसंयुक्तं तोटकं पञ्चपाणिना ॥ २०८ ॥

१. 'कुर्यादुत्तरतालेन ततो निर्वहणं भवेत्' का.　२. '°वाद्यस°' का.
३. इतोऽग्रे का. पुस्तके—

'विचित्रवृत्तसंयुक्तं पुंस्त्रियोर्गतिचेष्टितैः ।
अन्योन्यान्तरिते नित्यगीतवाद्येन भूषितम् ॥
पदेपदेऽङ्गहारैश्च वाद्येन च समन्वितम् ।' एतदधिकं सार्धं पद्यम् ।

४. 'स्यात् पुष्पगन्धिकानाम' का.　५. 'चतुर्भिः संनिपातैश्च' इत्यादिपद्यद्वयं का. पुस्तके नास्ति ।　६. 'स्यात् द्विपदुमच्छेदविधलास्यप्रयोगवित् ।' का.　७. 'मन्दिरे वा पि' का.　८. 'दर्पणेऽपवा' का.　९. 'छाया यौवनस्य कान्तस्य प्रदर्शनि विभूषितम् ।' का. १०. 'नृत्तप्रधाने क्रीडायां' का. ११. एतदर्धं का. पुस्तके नास्ति । १२. 'भेदेन' का. १३. 'स्मृतम्' का. १४. 'संनिपातैस्तु पञ्चभिः' का. १५. 'बहुस्वराभिः संयुक्तं' का.

द्विकलेन प्रकर्तव्यं मिश्रेणैककलेन वा ।
[1]प्ररोचकं च कर्तव्यं गुरुप्रायोक्षरान्वितम् ॥ ३०९ ॥
यथाक्षरेण त्र्यस्रेण संनिपातैस्तथाष्टभिः ।
विव(वि ?)धैककसंयुक्तं [2]कैशिकीजातिमाश्रिता ॥ ३१० ॥
[3]त्र्यङ्गविच्छेदकं विन्द्यात्युक्तं प्रक्रीडितादिभिः ।
अनिष्ठुरश्लक्ष्णपदं गान्धारीजातिमाश्रितम् ॥ ३११ ॥
चञ्चत्पुटेन योक्तव्यं (नि)त्रि[4]मूढं[द्वि ?]कलेन तु ।
चतुःषष्टिः संनिपातास्तास्मिंश्चैव प्रकीर्तिताः ॥ ३१२ ॥
यथामार्गकलोपेता [5]विदारी विव(वि ?)धान्वितः (ता ?) ।
[6]अङ्गहारान्सविष्कम्भानेव चात्र प्रयोजयेत् ॥ ३१३ ॥
केवलं पौरुषैर्मार्गैर्वाद्यं [7]नाश्नाति तेन यत् ।
[8]नर्कुटं खञ्जकं चैव त्रिविधं [9]न प्रयोजयेत् ॥ ३१४ ॥[10]
सैन्धवीमाश्रितं भाषां ज्ञेयं सैन्धवकं बुधैः ।
[11]रूपवाद्यादिसंयुक्तं युग्मतालकृतं तथा ॥ ३१५ ॥
[12]वितस्तालिप्त[13]मार्गेणे सैन्धवं वाद्यमिष्यते ।
न पां[14]ठ्यं स्वरपमप्यत्र प्रकुर्वीत विचक्षणः ॥ ३१६[15]॥

---

१. 'शीर्षकं च प्रकर्तव्यं गुरुप्रायाक्षरान्वितम्' का. २. 'कैशिनी' ख., 'कैशिकी॰जातिसश्रयम्' का. ३. 'अङ्ग' ख., 'अङ्गप्रच्छेदकं कुर्यात्' का. ४. 'त्रिमूढं द्विकलेन तु' का. ५. 'विदारी विविधान्विता' का. ६. 'अङ्गहाराः ।' का. ७. 'वाद्यं नाव्यसु(?)तं नयेत्' का. ८. 'नरकुटं' का. ९. 'विधाने सप्रयोजयेत्' का. १०. इतोऽग्रे का. पुस्तके—

'इति त्रिमूढमुद्दिष्टं नानारससमाश्रयम् ।
नातिस्पष्टाङ्गहारं तु नातिरेचितभूषितम् ॥' श्लोकोऽयमधिकः ।

११. 'रूपवाद्यादिसंयुक्तं सैन्धवं स्याद्यथोद्धतम् ।' का. १२. 'एतदर्धं का. पुस्तके पौर्वापर्येणास्ति १३. 'वितस्तालिप्तलेशाढ्यं' का. १४. 'जपाद्यं' का. १५. इतोऽग्रे का. पुस्तके—

मुखप्रतिमुखोपेतं तथा चक्षुपुटाश्रयम् ।
यथाक्षरैः संनिपातैस्तथा द्वादशभिर्युतम् ॥ ३१७ ॥
ने(नै ?)कयुक्तिविचित्रार्थे पौरुषं भावमाश्रितम् ।
एकाङ्ग(ङ्गं ?) शीर्षकं गत्यादिभूपं(मूढं ?) परिकीर्तितम्
उत्तमोत्तमके त्वादौ नर्कुटं संप्रयोजयेत् ।
श्लोकं विचित्रार्थपदं तदा चैवोपपादयेत् ॥ ३१९ ॥
ततश्च वस्तुकं कार्यमपरान्तकशाखया ।
यथाक्षरेण कार्यं तु शीर्षकं पञ्चपाणिना ॥ ३२० ॥
उत्तमोत्तमकं प्रोक्तं हेलानृत्तविभूषितम् ।
कोपप्रसादबहुलं सवि(साधि ?)क्षेपैरुपकमैः ॥ ३२१ ॥
संलापरचितैर्नित्यमुक्तमस्युक्तमिष्यते ।
वैआर्भेन प्रकर्यास्तु तस्य वा (ता?)लविधिः स्मृतः ॥ ३२२ ॥
ततस्तु शीर्षकं कार्यं सयुक्तं पञ्चपाणिना ।
उक्तमत्युक्तमेवं हि यथोक्तं परिकीर्तितम् ॥ ३२३ ॥

एवमेतद्बुधैर्ज्ञेयं माणं(नं ?) तालप्रमाणतः।[3]
[1]ध्रुवागाथापाणिकादीनां सप्तरूपं प्रकीर्तितम् ॥ ३२४ ॥
[2]यस्तु तालं न जानाति न स गा(ता ?) न वादकः।
तस्मात्सर्वप्रयत्नेन कार्यं तालावधारणम् ॥ ३२५ ॥
अङ्गभूता हि तालस्य यतिपाणिलयाः स्मृताः।[6]
त्रयो लयास्तु[7] विज्ञेया द्रुतमध्यविलम्बिते[8] ॥ ३२६ ॥
[9]छन्दोक्षरपदानां हि संमत्वं[10] यत्प्रकीर्तितम्।

---

१. इतः पूर्वं का. पुस्तके—
'दशाङ्गं लास्यमित्येतन्मया वः परिकीर्तितम्।
प्रकरणे द्वादशाङ्गानि तथैव च भवन्ति हि ॥
धश्वार इति विज्ञेयो लास्यच्छेदे विपर्ययात्।' इत्यधिकं सार्धं पद्यम्।
२. 'गीततालविकल्पनम्' का. ३. इतोऽग्रे का. पुस्तके—
'ततः कार्यः प्रयत्नस्तु नाट्यताले प्रतिष्ठितः।
सर्वस्यैव हि नाट्यस्य आतोद्यानां तथैव च ॥
ततः कालेन संयुक्तो भवेन्नित्यं प्रमाणतः।
हीनं प्रकृष्टवर्णं वा गानं तालेन धार्यते ॥
तस्मादेतत् प्रयत्नेन विज्ञातव्यं प्रयोक्तृभिः।' इत्यधिकमत्र सार्धं श्लोकद्वयम्।
४. 'ध्रुवगाथा पाणिका चैव सप्तरूपं प्रकीर्णकम्।
— — चतुष्पदा वर्धमाने ताले चैव विभाव्यते ॥'
५. का. पुस्तके तु पूर्वोत्तरार्धयोः पौर्वापर्यम्—का.
'तस्मात् पूर्वं प्रयत्नेन कार्यं तालावधारणम्।
यस्तु तालं न जानाति न स गाता न वादकः ॥' इति।
६. इतोऽग्रे का. पुस्तके—
'पूर्वोक्तं वै विधानं च तच्च मे सन्निबोधत।' इत्यर्धमधिकम्।
७. 'लयाश्च' का. ८. '°विलम्बिताः' का. ९. 'इतः पूर्वं' का. पुस्तके—
'मार्गेषु व्यक्तिमायान्ति गीतं(त?)वाद्योभयात्मकम्।
चित्रस्तु यतयश्चान्या मार्गेषु लयसंश्रया।
समा स्रोतोगता चैव गोपुच्छेति यथाक्रमम् ॥
पादवर्णप्रकर्षाणामक्षराणामथापि च।
नियमे या यतिः सा तु गीतवाद्यादिभिः स्मृता।'
इत्यधिकमत्र सार्धं पद्यद्वयम्।
१०. 'तु समत्वं यत्र कीर्तितम्' का.

कलाकलान्तरकृतः[1] स लयो मौन(नाम ?)संज्ञितः[2] ॥ ३२७ ॥
[3]श्रोतोगता च गोपुच्छा समा(?) चात्र विधाय च ।
[4]निलयत्र(?)भूत्यवर्णानामक्षराणामथापि वा ॥ ३२८ ॥
नियमौ(मो?) योयतिः स्यात्तु गीतवाद्यसमाश्रया ।
[5]समपाणिश्च विज्ञेयो ह्यवपाणिस्तथैव च ॥ ३२९ ॥
तथैवोपरिपाणिश्च गीतवाद्यसमाश्रयः ।
[6]लये नयं समं वाद्यं समपाणिः प्रकीर्त्यते ॥ ३३० ॥
ध्रुवाद्यदवकृष्टं स्यात्सोऽर्धपाणिः प्रकीर्तितः ।
लयस्योपरि यद्वाद्यं पाणिः स उपकीर्त्यते ॥ ३३१ ॥
ततः स्थितलयो यो वै संनिपातो विधीयते[7] ।
[8]सं तु मध्यलयप्राप्यसंनिपातद्वयं भवेत् ॥ ३३२ ॥॥

---

१. 'कृतं' का. २. 'नाम संज्ञितः' का. ३. का. पुस्तके तु पद्यार्धस्यास्य स्थाने—

'आद्यन्ते चैव मध्ये च लयवर्णपदैः समा ।
वाद्यप्रधानभूयिष्ठा चित्रा ज्ञेया समा यतिः ॥
क्वचिच्चैवावविष्टेत क्वचिच्चैव प्रधावति ।
वाद्ये श्रुतप्रधा(?)हतो ज्ञेया स्रोतोगता यतिः ॥
गुरुभिर्लघुभिश्चैवमपि भावितमक्षरम् ।
लम्बिता येन भूयिष्ठा गोपुच्छा दक्षिणे यतिः ॥' इति पाठः ।

४. एतत्पद्यं का. पुस्तके नास्ति ।

५. 'समपाण्यवपाणिश्च तथा च परिपाणिकम् ।
यद्गुपान्त्यक्षराणां च समवायो लयो भवेत् ॥' इति का.

६. का. पुस्तके सार्धपद्यस्यास्य स्थाने—
'लयात् प्रभृति एतेषां प्रमाणं परिवर्तते ।
पाणिः कल्पाद्(?)तु सोऽन्येष्वन्येषु पाणिषु ॥' इति वर्तते ।

७. 'भवेदप' का. ८. इतः प्रभृत्यध्यायसमाप्तिपर्यन्तग्रन्थस्यास्य स्थाने का. पुस्तके—

'तुल्यमध्यचलं प्राप्य संनिपातचतुष्टयम् ।
सा तत्र चान्तरकल्पं कृतं एव स्थो हि यः ॥

रुतं चापि लयं प्राप्य संनिपातचतुष्टयम् ।
यावत्तत्रान्तरकृता हृ(द्रु?)तमध्यलयो हि सः ॥ ३३३ ॥
सोऽर्धपाणिस्तु विज्ञेयास्तत्त्वज्ञैर्हृ(द्रु?)तलयाश्रयाः ।
अत ऊर्ध्वं प्रमाणं तु कलानां न विधीयते ॥ ३३४ ॥

इति भारतीये नाट्यशास्त्रे तालविधानो नामाध्याय एकत्रिंशः ।

---

द्वात्रिंशोऽध्यायः ।

ध्रुवासंज्ञानि तानि स्युर्नारदप्रमुखैर्द्विजैः ।
गीताङ्गानीह सर्वाणि विनियुक्तान्यनेकशः ॥ १ ॥
या ऋचः पाणिका गाथा सप्तरूपाङ्गमेव च ।
सप्तरूपप्रमाणं च तद्ध्रुवेत्यभिसंज्ञितम् ॥ २ ॥
एभ्यस्त्वङ्गान्यथोद्धृत्य नानाछन्दःकृतानि च ।
काव्यत्वं यानि गच्छन्ति तानि वक्ष्याम्यहं द्विजाः ॥ ३ ॥
मुखं प्रतिमुखं चैव वैहार्यस(सि?)कमेव च ।
स्थितप्रवृत्ते वज्रं च संधिः संहरणं तथा ॥ ४ ॥

---

सोपपाणिस्तु विज्ञेयस्तज्ज्ञैर्द्रुतलयाश्रयः ।
मध्ये च यान्तरकला ठकुले(?) च या ॥
उपर्युपरिपाणिश्च सञ्ज्ञो यो वाद्यसंश्रय. ।
अत ऊर्ध्वं कलानां तु प्रमाणेन विधीयते ॥
यतपः पाणयश्चैव लयाश्चैव प्रयोक्तृभि· ।
यथाक्रमं हि कर्तव्यं गीतयुक्तिमवेक्ष्य च ॥
एवं ध्रुवातालविधिः कर्तव्यो गानयोगतः ।
अत ऊर्ध्वं प्रवक्ष्यामि ध्रुवाणामङ्गकल्पनम् ॥
इति भारतीये नाट्यशास्त्रे तालव्यञ्जको नाम एकत्रिंशोऽध्यायः ।

१. ध्रुवेति संज्ञितानि' का. २ 'यान्यङ्गानीहमुखेषु तानि मे संनिबोधत' का. ३. 'सप्तरूपं' का. ४. 'हि' का. ५. 'सा ध्रुवेत्यभिसंज्ञिता' का. ६. '°ङ्गेभ्य' का. ७. 'ध्रुवात्वं' का. ८. 'वैहायसिकमेव च' का. ९. 'स्थिरप्रवृत्ते वज्रश्च' का.

प्रस्तारो मापघातः स्यादुपवर्तनमेव च ।
उपघातः प्रवेण्यौ च चतुरस्रं सुशीर्षकम् ॥ ५ ॥
संपि(वि ?)ष्टका(ता ?)न्ताहरणे माहाजनिकमुच्यते ।
ध्रुवाणामङ्गसंज्ञानि पञ्चानामपि नित्यशः ॥ ६ ॥
एकवस्तु ध्रुवा ज्ञेया द्विवस्तुपरिगीतिकाः ।
प्रिय(त्रिव ?)स्तु मद्रकं ज्ञेयं चतुर्वस्तु चतुष्पदा ॥ ७ ॥
वाक्यवर्णा ह्यलंकारा यतयः पाणयो लयाः ।
ध्रुवमन्योन्यसंबद्धा यस्मात्तस्माद्ध्रुवा स्मृताः(ता ?) ॥ ८ ॥
ध्रुवास्तु पञ्च विज्ञेया नानासंस्थानसंश्रयाः ।
एतासां संप्रवक्ष्यामि ससरूपाङ्गकारणम् ॥ ९ ॥
मौखि(खे ?)शिक्या स्मृतं तत्र मद्रवं सोपवर्तनम् ।
वक्त्रं च शीर्षकं चैव शीर्षकार्धं विनिर्दिशेत् ॥ १० ॥
प्रस्तारो मापघातश्च माहाजनिकमेव च ।
प्रवेणी ह्यवपातश्च अर्द्दि(द्धि ?)तायां तथैव च ॥ ११ ॥
मुखप्रतिमुखोपेता ह्यवकृष्टाभिधीयते ।
वैहायसन्ताहरणे स्थितायां संप्रकीर्तितौ ॥ १२ ॥
संहारश्चतुरस्रं च खञ्जनर्कुटके तथा ।
संधिः प्रस्तारसंयुक्तस्त्वन्तरायां प्रकीर्तितौ ॥ १३ ॥
यान्यङ्गानि कलाश्चैव गीतकान्तर्गतानि तु ।
तानि छन्दोगतैर्वृत्तैर्विमार्ग्यन्ते ध्रुवास्तथा ॥ १४ ॥

---

१. 'प्रस्तारश्चोपवर्तश्च मापघातस्तथैव च ।' भ. २. 'चतुरस्रावपाते च प्रवेश्यो शीर्षकं तथा ।' भ. ३. 'संपिष्टतान्ताहरणे' भ. ४. '°मेव च' भ. ५. पद्यमेतत् प. पुस्तके नास्ति । ६. 'ध्रुववर्णा ह्यलंकारा लया यत्योपपाणयः ।' भ. ७. 'अपरस्परसंबद्धा यस्मात्तस्माद् ध्रुवा स्मृता' भ. ८. '°श्च' भ. ९. 'नानापस्थानसमाश्रयाः' भ. १०. 'एतासां चैव वक्ष्यामि स्वतरूपाङ्गकल्पनम् ।' भ. ११. 'उपपातः प्रवृत्तश्च प्रावेशिक्यपि प्रकीर्त्यते ।' भ. १२. 'ध्रुवासौ शीर्षकस्मृते' भ. १३. 'प्रपातश्च' भ. १४. 'अद्दितायाः प्रकीर्तिता' भ. १५. इतः प्रभृति श्लोकद्वयी प. पुस्तके नास्ति । १६. 'विमार्ग्यन्ते ध्रुवास्तथा ।' भ.

त्र्यस्रश्च चतुरस्रश्च तालः कार्यो ध्रुवात्मकः।
षट्कलोऽष्टकलश्चैव यः पूर्वं परिकीर्तितः॥ १५॥
पूर्वेषामेव गीतानां यान्यङ्गानि स्मृतान्यथ।
तेषां मध्याद्यासु कार्यो मक्षकं (!) विव(वि !)धोऽथ वा॥ १६॥
पदवर्णसमासैस्तु विदारीत्यभिसंज्ञिता।
एतेषां संप्रवक्ष्यामि विधि(धिं !)प्रकृतिसंभवम्॥ १७॥
ज्येष्ठानां वृत्तसंयुक्तं कुर्यादादौ तथैव च।
विव(वि !)धं चैव मध्यानां नीचानामेककं तथा॥ १८॥
त्र्यस्रं वा चतुरस्रं वा योगं ज्ञात्वा प्रयोजकम्।
तेन प्रमाणयोगेन ध्रुवा स्यादावसानिकी॥ १९॥
गायत्र्यां चातिशक्कर्यामन्तरे या व्यवस्थिता।
तेन प्रमाणयोगेन ध्रुवा कार्यावसानकी॥ २०॥
शक्कर्यां चातिकृत्यां च यान्तरे स्यावसानकी।
तेषां मात्रा द्विविहिता ध्रुवा पादमयी स्मृता॥ २१॥
यतिछन्दोविधानेन गुरुलघ्वक्षरान्वितः।
कार्यो मात्राप्रमाणेन ध्रुवार्धो(पा !)दोऽवसानिकः॥ २२॥
मध्यमोत्तमयोः कार्या चतुरस्रावसानिकी।
मध्यावसाना कर्तव्या त्र्यस्रा चैवावसानिके॥ २३॥

---

१. 'ध्रुवात्मम' का. २. 'यस्तु पूर्वं प्रकीर्तित.' का. ३ 'सर्वेषामेव' का. ४. 'तेषां सविविधं एकैकं च भविष्यति' का. ५ एतदर्धं का. पुस्तके नास्ति। ६. 'चैव वक्ष्यामि विधिं' का.

७. 'उत्तमाना भवेद्वृत्तं मध्याना विविधं स्मृतम्।
नीचानामेककं कार्यं ध्रुवा पञ्चविधा बुधैः॥' इति का.

८. 'श्लोकं ज्ञात्वा प्रयोजक.' का. ९. 'कार्यावसानिकी' का. १० 'गायत्र्याश्चातिशक्कर्या' का. ११. 'वा' का. १२. 'पादप्रमाणेन' का. १३. 'शक्कर्याश्चातिकृत्याये'…… ……का. १४. 'नरत्वेवसानिके तेषां मध्यार्धविहिता ध्रुवा।' का. १५. 'ध्रुवापादो' का. १६. 'मध्यमोत्तमतो कर्तव्या ध्रुवा त्र्यस्रावसानिकी।' का. १७. एतदर्धं नास्त्येव का. पुस्तके।

अथे[1](थ ?) पूर्णपदी या तु तस्या वृत्तं प्रयोजयेत्[2] ।
तत्रेष्टवृत्तप्रामाण्याद्ध्रुवा[3] कार्या[4] प्रमाणतः ॥ २४ ॥
ध्रुवास्तु पञ्च विज्ञेया नानावृत्तसमुद्भवाः ।
यथास्थानरसोपेता ह्युत्[5]तमाधममध्यमा [ः] ॥ २५ ॥
कनीयसीग्रहा कां[6]चित्संनिपातग्रहापरा ।
तथा[7] कारेग्रहा काचित्त्रिविधा तु ध्रुवा स्मृता ॥ २६[8] ॥
गन्धर्वे[9] यत्स्मृतं पूर्वं स्वरतालपदात्मकम् ।
पदं तस्य भवेद्वस्तु स्वरतालानुभावितम् ॥ २७[10]॥
यत्[11]स्यादक्षरसंबद्धं तत्सर्वं पदसंज्ञितम् ।
निबद्धं चाति(नि ?)बद्धं[12] च येनमेन[13](ह्येवमेतद् ?)द्विधा स्मृतम् २८
अतालं च सतालं च द्विप्रकारं तदुच्यते ।[14]
सतालं च ध्रुवार्थेषु निबद्धं सर्वसाधकम्[15] ॥ २९ ॥
यत्तु वा करणोपेतं सर्वातोद्यानुरञ्जनम् ।[16]
अ[17]तालेन निबद्धं च पदतालं प्रकीर्तितम् ॥ ३० ॥
नियताक्षरसंबद्धं[18] छन्दोयतिसमन्वितम् ।
निबद्धं तु पदं ज्ञेयं सतोलपतनाक्षरम् ॥ ३१ ॥

---

१. 'अथ पूर्णपदी' का.　२. 'प्रवेशनम्' का.　३. 'कार्यावसानिकी' का.
४. ''थ' का.　५. 'हि' इति नास्ति का. पुस्तके　६. 'कनिष्ठिकाग्रहा कापि' का.
७. 'तथा पापग्रहा चैव' का.　८. 'इतोऽग्रे का. पुस्तके—

'प्राविशिकी तु प्रथमा द्वितीयाक्षेपिकी स्मृता ।
प्रासादिकी तृतीया च चतुर्थी चान्तरा ध्रुवा ॥'
नैष्क्रामिकी च विज्ञेया पञ्चमी च ध्रुवा बुधैः ।
एतेषां चैव वक्ष्यामि छन्दोऽसनिदर्शनम् ॥' इत्यधिकमत्र ।

९. 'गान्धर्वं यन्मया प्रोक्तं' का.　१०. ''भावकम्' का.　११. 'यत्किंचिदक्षरकृतं' का. १२. 'चानिबद्धं च' का.　१३. 'तत्पदं द्विविधं स्मृतम्' का.　१४. 'तद्भवेत्' का.　१५. 'तच्च वै स्मृतम्' का.　१६. 'तुरञ्जकम्' का. १७. 'अतालमनिबद्धं च पदं तु ज्ञेयमेव च । का.　१८. 'संबन्धं' का.　१९. 'नानाछन्दःसमुद्भवम्' का.

आलिङ्गयश्चैव कर्तव्यो लयमात्रमथापि च ।
मुखं तस्याङ्गुलानि स्युरष्टावेव समासतः ॥ २१२ ॥
पणवस्यापि कर्तव्यो दीर्घत्वे[2] षोडशाङ्गुलः ।
कृशा[3](शो ?)मध्याङ्गुलान्यष्टौ पञ्चा[4]ङ्गुलमुखस्तथा ॥ २१३ ॥
अष्टौ[5](ओष्ठः?) तस्य तु कर्तव्यो(?) तज्ज्ञैरध्यर्धचा(मः?)ङ्गुलम् ।
मध्यं च सुषिरं[6] तस्य चत्वार्ये[7]वाङ्गुलानि च ॥ २१४ ॥
दर्दरश्च[8] घटाकारो नवाङ्गुलीमुखस्तथा ।
मुखं तस्य च कर्तव्यं घटस्य सदृशं बुधैः ॥ २१५ ॥
द्वादशाङ्गुलविस्तीर्णं पीनोष्ठं(ष्ठः?) च समन्ततः ।
अतः परं प्रवक्ष्यामि चर्मलक्षणमुत्तमम् ॥ २१६ ॥
न वैरोपहतं[12] चर्म न च काकमुखाहतम् ।
न[13] दोषापहतं क्लिन्नं न धूमाग्निविदूषितम् ॥ २१७ ॥
एभिर्दोषै[14]र्विनिर्मुक्तं चर्म निर्घेत्सितं[15](?) गवा ।
मुख[16]पल्लवसंकाशं हिमकुन्देन्दुसप्रभम् ॥ २१८ ॥
स्निग्धामिषविहीनं तु क्लिन्नं चर्म प्रशस्यते ।
विधिनैव मुखाणानि चर्माण्याहृत्य बुद्धिमान् ॥ २१९ ॥

---

तथोर्ध्वकश्च कर्तव्यश्चतुस्तालप्रमाणकः ।
मुखं तस्याङ्गुलानि स्युः अष्टावेव समासतः ॥
पणवश्चापि कर्तव्यो दीर्घत्वात् षोडशाङ्गुलः ।
कृशो मध्याङ्गुलस्याष्टौ पञ्चाङ्गुलमुखं तथा ॥' का.

१. 'पणवश्चापि' का. २. 'दीर्घत्वात्' का. ३. 'कृशो मध्याङ्गुलस्याष्टौ' का. ४. 'पञ्चाङ्गुलमुखं तथा' का. ५. 'ओष्ठं तस्य च कर्तव्यं तज्ज्ञैरध्यार्धमङ्गुलम्' का. ६. 'तु' का. ७. 'चत्वारो वाङ्गुलानि तु' का. ८. 'दर्दरस्य' का. ९. 'नवत्यष्टि-मुखस्तथा' का. १०. 'समासतः' का. ११. 'ऊर्ध्वे' का. १२. 'न जीर्णोपहतं चर्म न च काकमुखाहतम्' का. १३. 'न मे दोषगतं किंचित् न च धूमादिदूषितम्' का. १४. 'षड्भिर्दोषै.' का. १५. 'निर्वर्तितं' का. १६. 'मुखपल्लवसंकाशं' इत्यारभ्य 'अङ्किकालिङ्ग्यकोर्ध्वकान्' इत्यन्तः पाठः का. पुस्तके नास्ति ।

सी(शी?)तोदके निशामेकां स्थापयित्वा समुद्धरेत्।
वद्धैः सुललितैर्दान्तैर्गोमयैरतिमर्दितैः ॥ २२०॥
चन्द्रकैस्तनुभिः पश्चान्मृदङ्गान्योजयेद्बुधः।
पुष्पावर्तं ततः कुर्यात्रिवर्ति चन्द्रिकाश्रयम् ॥ २२१ ॥
कक्षाख्यं वै परिकरं ग्रीवाख्यं स्वस्त्रिकं तथा।
शतानि त्रीणि कुर्वीत पुष्करैर्ध्येक्षराणि तु ॥ २२२ ॥
दश तत्र हि बद्धास्तु प्रक्षेप्या वचि(?) संश्रयेत्।
निहित्वा(?) त्वक्षिके वाम्रे तृतीये संप्रवेशयेत् ॥ २२३ ॥
सर्वेष्वेव प्रयोगोऽयमक्षिकेषु विधीयते।
न वै मृदङ्गे दातव्यं रोहणं सततं बुधैः ॥ २२४ ॥
गव्ये घृते च तैले च तिलपिष्टं तथैव च।
बद्ध्वा ह्यनेन विधिना अङ्गिकालिङ्ग्यकोर्ध्वकान् ॥ २२५ ॥
देवता[1]भ्यर्चनं कृत्वा ततः स्था[2]प्या महीतले।
चित्रायामथ वा हस्ते शु[3]क्लपक्षे शुभे तिथौ ॥ २२६ ॥
उपाध्यायः शुचिर्वि[4]द्वान्कुलीनो रोग[5]वर्जितः।
[6]मतिमान्नीतितत्त्वज्ञो मधुरो नियतेन्द्रियः ॥ २२७ ॥
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः।
मण्डलत्रयमालिख्य गोमयेन सुगन्धिना ॥ २२८ ॥
ब्रह्माणं शंकरं विष्णुं त्रिषु तेषु प्रकल्पयेन्[7]।
[8]आलिङ्ग्यं स्थापयेत्पूर्वं[9] ब्रह्मणो मण्डले कृते ॥ २२९ ॥
[10]ऊर्ध्वकं तु द्वितीयेऽस्मिन्रुद्र[11]नाम्नि निधापयेत्।
तिर्यग्[12]उत्सङ्गिकं सम्यग्वैष्णवे मण्डले न्यसेत् ॥ २३० ॥

---

१. '°भ्यर्चनां' का. २. 'स्थाप्य' का. ३. '°ह्नि पुण्ये शुभे तिथौ' का. ४. 'विद्वान्' का. ५. 'रागवर्जित' का. ६. 'घनज्ञो गीततत्त्वज्ञो' का. ७. 'प्रकल्पयेत्' का. ८. 'आलिङ्ग्य' का. ९. 'ब्रह्माणं पूर्वमण्डले' का. १०. 'ऊर्ध्वगं' का. ११. 'रुद्रनाम्ना निपातयेत्' का. १२. 'तिर्यक् स्थिता' का.

बलिपुष्पोपहारैश्च पूजयेत्पुष्करांस्तथा ।
पायसं घृतमध्वक्तं चन्दनं कुसुमानि च ॥ २३१ ॥
शुक्लानि चैव वासांसि दत्त्वालिङ्गे स्वयंभुवे ।
त्र्यम्बकाय च दातव्यः सगणायोर्ध्वके बलिः ॥ २३२ ॥
स्वस्तिके लेपिकापूपपिण्डकेण्डरिकैः सह ।
उन्मत्तकरवीरार्कपुष्पैरन्यैश्च भूषितः ॥ २३३ ॥
बलिः कार्यः प्रयत्नेन रक्तो रक्ताम्बरैः सह ।
वैष्णवे मण्डले स्थाप्यः सर्वबीजगतोऽङ्किके ॥ २३४ ॥
स्रग्गन्धालेपनैः पीतैश्चरुभिश्च सपायसैः ।
वाचयित्वा द्विजान्स्वस्ति दत्त्वा पूर्वं च दक्षिणाम् ॥ २३५ ॥
पूजयित्वादिगन्धर्वान्पश्चाद्वाद्यं समाचरेत् ।
तन्त्रीभिः पणवं नद्धैस्सुमृद्यामिः समन्ततः ॥ २३६ ॥
ततः पुष्करिकाश्चैव योजयेत सुचर्मणा ।
एवं मृदङ्गपणवाः कर्तव्या दर्दरास्तथा ॥ २३७ ॥
दैवतानि च वक्ष्यामि येषां ते च भवन्ति हि ।
वज्रेक्षणः शङ्कुकर्णो ग्रामणीश्च तथा महान् ॥ २३८ ॥

---

१. 'नानापुष्पैर्विचित्रिते.' का.
२. 'आलिङ्गे च बलिं दद्यात् मधुपायससंमिश्रितम् ।
आपूपोऽपिकामिश्रामालिके संप्रदापयेत् ॥' का.
३. 'अनन्तरं च दातव्यः सर्वमेवोर्ध्वगे बलिः ।
स्वस्तिकाधूपिकाधूपरूपकैश्चलितैः सह ॥' का.
४. 'उन्मत्तकरवीरैश्च पुष्पैरन्यैश्च भूषितैः ।' का.
५. 'मण्डपे स्थाप्य सर्वबीजकृतो हितम् ।' का. ६. 'शुद्धसाल्म्बनैः पीतै.' का.
७. 'स्वस्ति' का. ८. 'दत्वापूर्वप्रदक्षिणान्' का. ९. 'पूजयित्वा तु' का.
१०. 'तु स्यात्' का. ११. 'मृद्याभिः' का. १२. 'पादपुष्करिकाश्चैव' का.
१३. 'योजयेत्तत्र कर्मणा' का. १४. 'मृदङ्गपणवा यापि कर्तव्या दर्दुरस्तथा ।' का.
१५. 'यान्येषां च भविष्यति' का. १६. 'वज्रेक्षणशङ्कुकर्णौ ग्रामणी तु तथा महान्' का.

एतास्तु देवता विप्रा मुरजेषु प्रकीर्तिताः ।
[1]मृन्मयत्वान्मृदङ्गा(ङ्ग ?)स्तु भाण्डं भ्रमयतीति च ॥ २३९ ॥
मुरजास्तूर्ध्वकरणादातोद्यं तोदनादपि ।
भाण्डस्यादौ प्रणीतोऽद्य पणवश्च विधीयते ॥ २४० ॥
दारयोतो(?) दारयति तस्माद्भवति दर्दरः ।
[2]स्रष्टा मृदङ्गात्पणवान्दर्दरश्च महामुनिः ॥ २४१ ॥
मेघे सुस्वरसंयोगं मृदङ्गानामथासृजत् ।
विद्यु[3]ज्जिह्वो भवेद्वामो मेघस्य तु महास्व[4]नः ॥ २४२ ॥
[5]ऐरावतो महामेघस्तथा चैवोर्ध्वको भवेत् ।
[6]आलिङ्ग्यके च व········[नाम्ना मेघो ?]····बलाहकः ॥ २४३ ॥
दक्षिणे पुष्क[7]रे मेघः किकि[8]लीनामयोजितः ।
मृदङ्गश्चै[9]व नाम्ना तु ऊर्ध्वके [10]नेन्घयो[नान्यथो]च्यते ॥ २४४ ॥
[11]अङ्किकैः सिद्धिरित्येथ(व ?)मालि[12]ङ्ग्यश्चापि पिङ्गलः ।
भूतप्रियो[13] बलिस्तेभ्यो दातव्यः सिद्धिमिच्छता ॥ २४५ ॥
[14]अपूजयित्वा ह्येतान्वै नैव प्रेक्षां प्रयोजयेत् ।
[15]कैरीपस्य तु संघाते मृदङ्गं स्थापयेद्बुधः ॥ २४६ ॥
(?)पसंघ[16]तानंकथ्यांश्च तथा चावनताः पुनः ।
आतोद्यपणवैश्चैव नर्तकोपनताश्च्या ॥ २४७ ॥

---

१. 'मृन्मयत्वात्' इत्यादि पद्यद्वयं का. पुस्तके नास्ति ।
२. 'दृष्टा मृदङ्गपणवदर्दरं च महामुनिः ।
मेघैस्तु रससंवादान् मृदङ्गो नाम वारणम् ॥' का.
३. 'विद्युज्जिह्वा' का. ४. 'महास्वनः' का. ५. 'ऐरावणो महामेघः तथा चोर्ध्वगतो भवेत् ।' का. ६. 'आलिङ्गे च तडित् ख्याता' का. ७. 'पुष्करो' का. ८. 'कोकिलानामतः स्मृतः' का. ९. 'च' का. १०. 'ऊर्ध्वगो नान्ययोच्यते' का. ११. 'अङ्गारसिरिरित्येव' का. १२. '॰माडिङ्ग्यश्चाष्टपिङ्गलः' का. १३. 'तत्प्रियोऽपि' का. १४. 'पूजयित्वा सा देवीं प्रेक्षां रङ्गे प्रकल्पयेत् ।' का. १५. 'रीपस्य ?' का. १६. इत प्रभृति सार्धपद्यद्वयी का. पुस्तके नास्ति ।

शान्तिकर्म प्रयुञ्जीत वि[धि]दृष्टेन कर्मणा ।
चत्वारः पणवाः कार्या दशरूपविधौ पुनः ॥ २४८ ॥
आतोद्यास्वपि तान्येव नानावस्थासु वादयेत् ।
नाटके सप्रकरणे भाणके सप्रहासने ॥ २४९ ॥
मृदङ्गं पणवं चैव दर्दरं चैव वादयेत् ।
एवमेतद्बुधैर्ज्ञेयं मृदङ्गानां तु लक्षणम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वादकानां तु लक्षणम् ॥ २५० ॥
(?) गीतवाद्यचलयाव्यसहस्तोक्षरविशारदोऽथ लघुहस्तः ।
(?) किंद्रावणो विज्ञेयः सिद्धिस्थाने ध्रुवाकुशलः ॥ २५१ ॥
कलरिभितमधुरकहस्तः सुनिविष्टो रक्तमार्जनो बलवान् ।
सुविदितशरीरबुद्धिर्मृदङ्गवादी गुणैरेतैः ॥ २५२ ॥

---

१. 'नाटकेऽङ्के प्रकरणे वीथ्यां भाणे डिमे तथा ।
मृदङ्ग पणवीश्चैव दर्दरं चोपकारयेत् ॥' का.

२. 'अत ऊर्ध्वं प्रवक्ष्यामि उपहस्तस्य लक्षणम् ।
कर्तरी समहस्तश्च हस्तपाणित्रयं तथा ॥
वर्तनाद् दण्डहस्तश्च पक्षिञ्छाकरस्ततः ।
तर्जन्याङ्गुष्ठयोगेन स्वग्रे जातिपतिस्ततः ॥
पर्यागापतनैर्ज्ञेया कर्तरी हस्तयोर्द्वयोः ।
समयोः समतालेन द्वयोर्हस्तसमाश्रयोः ॥
पर्यायतः प्रभातो य. समहस्त इति स्मृतः ।
विभावितव्या वामस्य पार्ष्णिनाङ्गुलिभिस्तथा ॥
सकृद्दक्षिणहस्तस्य हस्तपाणित्रयं भवेत् ।
पूर्वदक्षिणहस्तेन क्रमाद्वामेन पादतः ॥
चत्वारो यत्र वर्तन्ते वर्तनाद्वर्तनाः स्मृताः ।
प्रथमं वामहस्तेन गृहीत्वा दक्षिणेन तु ॥
प्रहाराः क्रमपादेन दण्डहस्त. समस्तयोः ।
सौष्ठवं लाघवञ्चैव बाहुल्यं दृढतापि च ॥
सर्वेषाञ्चैव हस्तानां गुणाश्चत्वार ईरिताः ।
एवमेतन्मया प्रोक्तं हस्तानामपि लक्षणम् ॥' इति का. पुस्तके ।

आलेपनप्रमाणज्ञश्चतुर्मार्गकृतश्च सः ।
प्रतिग्रहीता सिद्धीनामङ्गदोषविवर्जितः ॥ २५३ ॥
स्वभ्यस्तकरणैः साम्ये गीतज्ञो गुणितग्रहः ।
सुसंगीतप्रयोगज्ञो मृदङ्गी तु भवेद्गुणैः ॥ २५४ ॥
भ्रान्तोऽर्धहस्तकालज्ञश्छिद्राचरणपण्डितैः ।
अभ्यस्तकरणैश्चैव भवेत्पाणविको गुणैः ॥ २५५ ॥
निश्चलो निर्गुणः शीघ्रो लघुहस्तो विधानवित् ।
वादनान्तरवेदी च दर्दरी तु प्रशस्यते ॥ २५६ ॥

एतत्सर्वं नाट्ययोगं समीक्ष्य प्रोक्तं वाद्यं सर्वलोकानुभावात् ।
नोक्तं यच्चेदागमाद्वस्तुबुध्या सद्भिः कार्यं मार्गजातीः समीक्ष्य ॥ २५७ ॥
स्फुटप्रहारं विशदं विभक्तं रक्तं विघुष्टं करलेपनं च ।
त्रिमार्जनापूरितरागरम्यं मृदङ्गवाद्यं गुणतो वदन्ति ॥ २५८ ॥
वाद्ये तु यत्नः प्रथमं तु कार्यः शैयानि(?) नाट्यस्य वदन्ति वाद्यम् ।
वाद्ये च गीते च हि सुप्रयुक्ते नाट्यप्रयोगो न विपत्तिमेति ॥ २५९ ॥

इति भारतीये नाट्यशास्त्रे पुष्करवाद्यो नामाध्यायः पञ्चत्रिंश(चतुस्त्रिंश):।

---

पञ्चत्रिंशोऽध्यायः ।

विन्यासं भूमिकानां तु संप्रवक्ष्यामि नाटके ।
यादृश्यो यस्य कर्तव्या विन्यासे भूमिकास्ततः ॥ १ ॥
गतिर्वाग्ङ्गदेष्वेभिः(?) सत्त्वशीलैः समासतः ।
परीक्ष्य पात्रं तज्ज्ञास्तु युञ्च्या(?)द्भूमिनिवेशने ॥ २ ॥
तस्मादन्विष्य हि गुणान्कार्यः पात्रसमाश्रयः ।
न खेदजननं बुद्धेराचार्यस्य भविष्यति ॥ ३ ॥

---

१. 'द्रया(श्या)हि' ख. २. 'ऽत्र हि' ख. ३. 'भूभागं' क. ४. 'यादृशैरेव कर्तव्या' क. 'यादृशी' ग. ख. ५. 'पुरुषैर्भूमिकास्तया' क. ६. 'गतिवागङ्गचेष्टाभिः' क. ७. 'सत्त्वशीलसमाश्रय' क. ८. 'परीक्ष्य पात्रं' इत्यारभ्य 'पात्रं युञ्ज्यात् स्वभूमिषु' इत्यन्तं पाठः क. पुस्तके नास्ति ।

आधायो यमजा(?)श्चैव गुणानज्ञान्स्वभावजान् ।
ततः कुर्याद्यथायोगं नृणां भूमिनिवेशनम् ॥ ४ ॥
अङ्गप्रत्यङ्गसंयुक्तमहीनाङ्गं वयोऽन्वितम् ।
न स्थूलं न कृशं चैव न दीर्घं न च मन्थरम् ॥ ५ ॥
स्निग्धाङ्गं द्युतिमन्तं च सुस्वरं प्रियदर्शनम् ।
एतैर्गुणैस्तु संयुक्तं देवभूमिषु योजयेत् ॥ ६ ॥
स्थूलं प्रांशुं बृहद्देहं मेघगम्भीरनिस्वनम् ।
रौद्रस्वभावनेत्रं च स्वभावभ्रुकुटीमुखम् ॥ ७ ॥
रक्षोदानवदैत्यानां भूमिकासु प्रयोजयेत् ।
पुरुषाणां प्रयोगस्तु तथाङ्गक्रिययान्वितः ॥ ८ ॥
सुनेत्राः सुभ्रुवः स्वङ्गाः सुललाटाः सुनासिकाः ।
स्वोष्ठाः सुगण्डाः सुमुखाः सुकण्ठाः सुशिरोधराः ॥ ९ ॥
स्वङ्गप्रत्यङ्गसंयुक्ता दीर्घाश्च मदमन्थराः ।
न स्थूला न कृशाश्चैव समावेन व्यवस्थिताः ॥ १० ॥
सुशीला ज्ञानवन्तश्च तथा च प्रियदर्शनाः ।
कुमारराजभूमीषु प्रयोज्या भरतोत्तमाः ॥ ११ ॥
अङ्गैरविकलैर्वीरं स्फुटं वचनकर्मणि ।
न दीर्घं नैव च स्थूलमूहापोहविचक्षणम् ॥ १२ ॥
अहीनं च प्रगल्भं च प्रत्युत्पन्नविनिश्चयम् ।
सेनापतेरमात्यानां भूमिकासु प्रयोजयेत् ॥ १३ ॥
पिङ्गाक्षं दीर्घनासं च ह्रस्वमुच्चमथापि वा ।
कञ्चुकिश्रोत्रियादीनां भूमिकासु नियोजयेत् ॥ १४ ॥
एवमन्येष्वपि तथा नाट्यधर्मप्रवेशने ।
दशावस्थानुरूपेण पात्रं युञ्ज्यात्स्वभूमिषु ॥ १५ ॥
मन्थरं वामनं कुब्जं विकृतं विकृताननम् ।
निर्दिष्टघननेत्रं[1] काणाक्षं स्थूलं चिपिटनासिकम् ॥ १६ ॥

---

१. 'विघष्टनेत्रकर्णाणा स्थूलं विह्वलनासिकम् ।
दुर्वेषं तु स्वभावं च विकृताकारमेव च ॥' म.

दुर्जनं दुःस्वभावं च विकृताकारमेव च ।
दासभूमौ प्रयुञ्जीत बुधा(धो[1]) दासाङ्गसंयुतम् ॥ १७ ॥
प्रकृत्या तु कृशं क्षामं तपे[2]श्रान्ते सुयोजयेत् ।
तथा च पुरुषं स्थूलमुपयोगे[3]षु योजयेत् ॥ १८ ॥
यदि वा नेतरा[4]ः सन्ति प्रकृत्या पुरुषा द्विजाः ।
आचार्यबुद्ध्या योक्तव्या भावचेष्टास्वभावतः ॥ १९ ॥
या यस्य सदृशी चेष्टा ह्यु[5]त्तमाधममध्यमा ।
सा[6] तथाचार्ययोगेन निव(य[7])म्या भावभाविनि(नी[7]) ।[8]
अत ऊर्ध्वं प्रवक्ष्यामि भरतानां विकल्पनाम् ॥ २० ॥

---

१ 'बुधो' का. २. 'तत्र श्रान्तेषु' का. ३. 'सरोगेषु' का. ४ 'नेदृशा सन्ति' का. ५ 'हि' इति नास्ति का. पुस्तके। ६. 'तथा चान्ययोगेन' का. ७. 'नियम्या भावभाविनी' का.

८ 'एवमन्येष्वपि तथा नाट्यधर्मी प्रशस्यते ।
देशवेषानुरूपेण पात्र योज्य हि भूमिषु ॥
बहुबाहो बहुमुखस्तथा च विकृतानन ।
पशुश्वापदसिंहाश्च खरोष्ट्रा वारणास्तथा ॥
एते चान्ये च बहवो नानारूपा भवन्ति ये ।
आचार्यबुद्ध्या कर्तव्या मृत्काष्ठजनचर्मभि ॥
स्वाभाविकेन भावेन प्रविशेद्रङ्गमण्डपम् ।
आत्मरूपमवच्छाद्य वर्णकैर्भूषणैरपि ॥
यादृश यस्य यद्रूप प्रकृत्या तस्य तादृशम् ।
वयोवेषानुरूपेण प्रयुक्त नाट्यकर्मणि ॥
यथा जन्तुस्वभाव हि परित्यज्यान्यदेहिकम् ।
परभाव प्रकुरुते परदेह समाश्रित ॥
एव बुध परं भाव सोऽस्मीति मनसा स्मरन् ।
वागङ्गगतिलीलाभिश्चेष्टाभिश्च समाचरेत् ॥
अनुरूपा विरूपा च तथा रूपानुसारिणी ।
त्रिप्रकारा भवेन्नृणां प्रकृतिस्त्वपि भाविता ॥
नानावस्थावयोपेता भूमिकादिष्टतास्तथा ।
समुद्योतमये नाट्ये स्वभावकरणाश्च या ॥

---

* अयं श्लोकः पुस्तके न दृश्यते ।

स्त्रियस्तु स्त्रीगते भावे पुरुषाः पौरुषे यथा ।
यथा वयस्तथा तस्मिन् अनुरूपेति सा स्मृता ॥
यो बालः स्थाविरीं भूमिं वृद्धो वा बालभूमिकाम् ।
तद्भावैः कुरुते नाट्यं सा विरूपेति कीर्तिता ॥
पुरुषः स्त्रीगतं भावं यो वा प्रकुरुते पुनः ।
रूपानुसारिणी ज्ञेया प्रयोगे भरतोत्तमैः ॥
छन्दतः पौरुषीं कुर्यात् भूमिकां स्त्रीप्रयोगतः ।
न परस्परचेष्टाभिः कुर्यातो वृद्धबालिशौ ॥
भूमिकं सुकुमारञ्च नित्यं स्त्रीभिरनुष्ठितम् ।
अलयं मानुषीणान्तु दिव्यमानुषयोस्तथा ॥
रम्भोर्वशीप्रभृतिषु स्वर्गे नाट्यं प्रतिष्ठितम् ।
तथैव मानुषे लोके राज्ञामन्तःपुरेष्वपि ॥
उपदेष्टव्यमार्यैस्तु शास्त्रवुध्यांगनासु च ।
सुकुमारप्रयोगोऽयं राज्ञामामोदकारकः ॥
शृङ्गाररसमासाद्य ताश्चारीष्वेव योजयेत् ।
यस्मात्स्वभावोपगतो विलासः स्त्रीषु दृश्यते ॥
तस्मात्स्वभावमधुरमङ्गं सुलभसौष्ठवम् ।
पौरुषं यत्तु ललितं सोऽलंकारपरो भवेत् ॥
स्वयं तु भूमिकान्यासं बुधः स्त्रीणां प्रयोजयेत् ।
तुल्योपि स्थापकोपेतो भूमिकान्यास इष्यते ।
स्त्रीषु योज्यः प्रयत्नेन प्रयोगः पुरुषाश्रयः ॥
संगीतकमपरिक्लेशो नित्यं प्रमदाजनस्य गुण एव ।
मधुरकर्कशत्वं भवति नाट्यप्रयोगेन ॥
प्रमदा नाट्यविलासैर्लतेव कुसुमैर्विचित्रलावण्याः ।
कामोपचारकुशला भवन्ति काम्ये विशेषज्ञाः ॥
योग्यासु च प्रयत्नः कर्तव्यः सततमप्रमादेन ।
न हि योग्यां विना भवति भावरससौष्ठवं किंचित् ॥
प्रयोगो द्विविधश्चायं विज्ञेयो नाट्यमन्वितः ।
सुकुमारस्तथाविद्धो नानाभावरसाश्रयः ॥
नाटकस्य प्रकरणं भाणो वीथ्यङ्क एव च ।
ज्ञेयानि सुकुमाराणि मानुषैराश्रितानि तु ॥
युद्धोद्धता वेगकृतासंरम्भबहुलाश्च ये ।
न ते स्त्रीभिः प्रयोक्तव्याः प्रयोज्याः पुरुषैर्हि ते ॥

न चाविद्याङ्गभावस्तु च्छेद्यमेयाद्द्वात्रिंशकम् ।
मायेन्द्रजालबहुलं पुस्तनैपथ्यदीपिनम् ।
पुरुषप्रायसञ्चारमल्पस्त्रीकमनोद्धतम् ।
सात्त्वत्यारभटीयुक्तं नाट्यमाविद्धसंज्ञितम् ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतासां विद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यसमन्विताः ॥
एवं प्रयोगः कर्तव्यो भूमिकानां विकल्पनम् ।
अत्रोच्यते यथानाट्यमाहार्यगुणसम्भवः ॥
कथं राजगुणाः कार्या नटैरल्पपरिच्छदैः ।
अत्रोच्यते यथा लोके नाट्यधर्मिप्रवृत्तिता ॥
तदेवं सर्वसंपन्नं नाट्यमेतन्मया कृतम् ।
वर्णकैस्त्वादितस्तत्र भूषणैश्चाप्यलंकृतः ॥
गाम्भीर्याहार्यसंपन्नो राजचिह्नो भवेन्नटः ।
सप्तद्वीपाश्रयश्चैवमयथैको भवेन्नरः ॥
वर्णकैर्याति तेनेह कार्यं लग्नविचेष्टितम् ।
आचार्यबुद्ध्या कर्तव्यं सौष्ठवाङ्गपुरस्कृतम् ॥
राजवद् भरतस्तस्माद् राजापि नटवद् भवेत् ।
यथा नटस्तथा राजा यथा राजा तथा नटः ॥
द्रव्याणां यः परीवारो पार्थिवानां स एव हि ।
नाटके संप्रयोक्तव्यो देशभाषावयोऽन्वितः ॥
एवं राजोपचारे तु कार्यः पुरुषसश्रयः ।
अत ऊर्ध्वं प्रवक्ष्यामि प्रयोक्तॄणां तु तद्गुणान् ॥

तत्र सूत्रधारगुणान् वक्ष्यामः । पुष्पाभिधानमेव तल्लक्षणं अभिमतवाक्संस्काराः तालविधानज्ञता स्वरवादिनतत्त्ववेदनम् ॥

चतुरातोद्यकुशलः शास्त्रकर्मसुशिक्षितः ।
नानापाषण्डकार्यज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥
वेश्योपचारनिपुणः कामशास्त्रविचक्षणः ।
नानागीतप्रचारज्ञो रसभावविशारदः ॥
नाट्यप्रयोगकुशलो नानाशिल्पसमन्वितः ।
पादच्छन्दोविधानज्ञः सर्वशास्त्रविचक्षणः ॥

ग्रहनक्षत्रतत्त्वज्ञो देहव्यापारपण्डितः ।
पृथिवीद्वीपवर्षाणां पर्वतानां जनस्य च ॥
प्रमाणचरितज्ञश्च राजवंशप्रसूतिवित् ।
श्रोता शास्त्रार्थकाराणां श्रुत्वा चैवावधारकः ॥
अवधार्य प्रवक्ता च शास्ता चैवोपदर्शने ।
एवंगुणस्तथाचार्यः सूत्रधारो विधीयते ॥
स्वाभाविकान् गुणांश्चैव गदतो मे निबोधत ।
स्मृतिमान् मतिमान् धीर उदारः स्थिरवाक् कविः ॥
अरोगो मधुरः क्षान्तो दान्तश्चैव प्रियंवदः ।
मन्युदोषविनिर्मुक्तः सत्यवाक् दक्षिणः शुचिः ॥
अलुब्धप्रतिपत्तौ च स्वाभाविकगुणास्त्वमी ।
सूत्रधारगुणैश्चैव किंचिदूनैः समन्वितः ॥
मध्यमप्रकृतिस्तज्ज्ञैर्विज्ञेयः पारिपार्श्विकः ॥
उज्ज्वलो रूपवांश्चैव हृद्योपचरणक्रियः ।
मेधावी च विधानज्ञः स्वकर्मकुशलो नरः ॥
सूत्रधारगुणैर्युक्ताः सर्व एव प्रयोगिणः ।
वेश्योपचारकुशलो मधुरो दक्षिणः कविः ।
ऊहापोहक्षमो वाग्मी चतुरश्च विटो भवेत् ॥
उज्ज्वलवस्त्राभरणः क्रुध्यत्यनिमित्ततः प्रसीदति च ।
अधमो मागधभाषी भवति शकारो बहुविकारः ॥
वामनो दन्तुरः कुब्जो द्विजिह्वो विकृताननः ।
खलतिः पिङ्गलाक्षश्च स विधेयो विदूषकः ॥
कलहप्रियो बहुकथो विरूपो गन्धसेवकः ।
मान्यामान्यविशेषज्ञश्चेटोऽप्येवंविधः स्मृतः ॥
एवंगुणैश्च संयुक्ता नाट्ययोगविचक्षणा ।
कलाप्रयोगे चाचार्यैर्योविज्ञाभिरता सदा ॥
शीलया हावभावाढ्या सत्त्वेन विनयेन च ।
माधुर्येण च संयुक्ता चतुःषष्टिकलान्विता ॥
स्त्रीदोषवाक्छलत्वैर्दोषैश्च विवर्जिता ।
प्रियकारिणी प्रियकथा प्रियदक्षा जितश्रमा ॥
एभिर्गुणैस्तु संयुक्ता गणिका परिकीर्तिता ।
रूपगुणशीलयौवनमाधुर्यैश्चैवरागेण ॥

भरताश्रयाच भरतो विदूषकस्तौरिपो ने(न्ये) च(?) ।
नेन्दी ससूत्रधारो नाट्यरसो नायकश्चैव ॥ २१ ॥
मुकुटाभरणविकल्पैर्विज्ञेयो माल्यवस्तुविविधैश्च ।
कारककुशीलवाद्या विज्ञेया नामतश्चैव ॥ २२ ॥
धुर्यवदेको यस्मादुद्धारोऽनेकभूमिकायुक्तः ।
भाण्डग्रहोपकरणैर्नाट्यं भरतो भवेत्तस्मात् ॥ २३ ॥
लोको ह्यदाश्रयकृतां सर्वप्रकृतिप्रचारसंयुक्ताम् ।
नानाश्रया प्रकुरुते तथा च नार्यां च सर्वत्र ॥ २४ ॥
प्रत्युत्पन्नप्रतिमो नर्मकृता नर्मगर्भनिर्भेदैः ।
छेदविभूषितवदनो विदूषको नाम विज्ञेयः ॥ २५ ॥
नरपतिस्तूर्यमतिः सर्वातोद्यप्रवादने कुशलः ।
तूरपतिमहयुक्तो(हि)विज्ञेयस्तौरिपो नाम ॥ २६ ॥
नटइ(य)ति धात्वर्थभूतं नाटइ(य)ति लोकवृत्तान्तम् ।
रसभावसत्त्वयुक्तं यस्मात्तस्मान्नटो भवति ॥ २७ ॥
स्तुत्याभिवादनकृतैर्मधुरवाक्यैः समङ्गलाचारैः ।
सर्वं स्तौति हि लोकं यस्मात्तस्माद्भवेद्बहुधा ॥ २८ ॥
तस्मिन्…………साश्चर्यो वदति नाट्ययोगेषु ।
प्राकृतसंस्कृतपाठ्यो नान्दी नामेति विज्ञेयः ॥ २९ ॥

---

विशारदा स्निग्धा मधुरा पेशलवचनाभिरक्तकण्ठी च ।
योग्या यामश्रुभिता लयतालज्ञा रसैस्तु संयुक्ता ॥
एवंविधगुणैर्युक्ता कर्तव्या नायिका तज्ज्ञैः ।
आस्थानरागविनिरुक्षा आविद्धगतिचेष्टिता ॥
दीर्घरोषा च दीना च तयोद्वृत्तोद्भटा सदा ।
सर्वाभरणसंयुक्ता गन्धमाल्योपशोभिता ॥
एवमेता प्रकृतयो ज्ञेया नाट्यप्रयोक्तृभि ।
अत ऊर्ध्वं प्रवक्ष्यामि भरताना विकल्पनम् ॥' इत्यधिक पाठ क. पुस्तके।

१ 'नान्दी' इति लभे. २. 'धुर्यं' क. ख. ३. 'दुर्धरो' क. ख. ४. 'तथाल-नार्यां' इति भवेत्.

गानस्य च वाद्यस्य च पाठ्यस्याप्येकभावविहितस्य ।
शास्त्रोपदेशयोगात्सूत्रज्ञः सूत्रधारस्तु ॥ ३० ॥
(?)यस्माद्यथोपदिष्टान्तास्त्रभावानसत्त्वयुक्तान् ।
(?)भूमिर्विकल्पैति यति च नाट्यकारः कीर्तितस्तस्मात् ॥ ३१ ॥
चतुरातोद्यविधानं सर्वस्य तु शास्त्रोदविहितस्य ।
गच्छति यस्मान्नाट्ये तस्माद्वै नायको भवति ॥ ३२ ॥
नानाप्रकृतिसमुत्थं करोति यः शीर्षकं मुकुटयोगे ।
विविधैर्वेषविशेषैः स च मैकुटकार(?) विज्ञेयः ॥ ३३ ॥
यश्चाभरणं कुर्याद्बहुविधिविहितं स चाभरणम् ।
कर्ता यश्चोपकरणयोगास्य तेन नाम्ना विधातव्यः ॥ ३४ ॥
यो वै माल्यं कुरुते पञ्चविधं माल्यकृत्स विज्ञेयः ।
यश्चापि वेषयोगं स च वेषकरस्तु विज्ञेयः ॥ ३५ ॥
चित्रज्ञश्चित्रकरो वस्त्रस्य च रञ्जनाद्भवेद्रजकः ।
जत्वश्मलोहकाष्ठैर्द्रव्यकरः कारुकश्चैव ॥ ३६ ॥
नानातोद्यविधाने प्रयोगयुक्तः प्रवादने कुशलः ।
आतोद्येऽप्यतिकुशलो यस्मात्स कुशीलवस्तस्मात् ॥ ३७ ॥
यत्स्वस्तनाचरन्ते शिल्पं वा कर्म वा प्रयोगं वा ।
तेनैवापगत(?)गुणा विज्ञेया नामतः पुरुषाः ॥ ३८ ॥
एवं तु नाटकविधौ जातिर्नटसंश्रया तु भेदैर्या ।
नाट्योपकरणयुक्ता नानाशिल्पप्रयुक्ता च ॥ ३९ ॥

इति भारतीये नाट्यशास्त्रे भूमिविकल्पो नामाध्यायः षट्त्रिंशः (षट्त्रिं.) ।

---

षट्त्रिंशोऽध्यायः ।

एवं तु मुनयः श्रुत्वा सर्वं भावं तदा ।
पुनरूचुरिदं वाक्यं ...॥ १ ॥

१. 'सूत्रज्ञः' इति भवेत्. २. 'भूमिविकल्प' क. ग. ३. 'वै' क. ग. ४. '...' घ.

यस्त्वया गदितो[1] ह्येष नाट्यवेदः पुरातनः।
एकचित्तैः सदा[2]स्माभिः सम्यक्समुपधारितः॥ २॥
एक[3]श्च संशयोऽस्माकं तन्नो व्याख्यातुमर्हसि।
को वा[4]न्यो यन्निवेद्यस्य निश्चयं वेत्ति तत्त्वतः॥ ३॥
न वयं परिहासेन[5] विरोधेन[6] च नान्यथा।
इच्छा[7]मो भगवन्नाट्यमुपदेशार्थमेव तु॥ ४॥
अस्माभिश्च तदा नोक्तं[8] व्याच्छेदो [न] भवेदिति।
इदानीं रूपशिक्षार्थं[9] नाट्यं गुह्यं प्रकाशयं[10]॥ ५॥
लोकस्य चरितं नाट्यमित्यवोचस्त्वमीदृशम्।
शेषाणां[11] लोकगुह्यानां निश्चयं कर्तु[12]मर्हसि॥ ६॥
लोकस्यै[13] कस्य चरितं पूर्वरङ्गे द्विजर्षभ।
किमर्थं[14] पुज्यते घोषप्रयुक्तः किं करोति च॥ ७॥[15]
कस्मा[16]च्चैव मुनिः शौचं शुचिश्चरति सूत्रधृक्।
कथमुर्वीतले नाट्यं स्वर्गान्निपतितं विभो॥ ८॥
कथं तदायं[17] वंशश्च नैष्ट(ट?)संज्ञः[18] प्रतिष्ठितः।
सर्वमेतद्यथातत्त्वं कथयस्व महामुने॥ ९॥
[19]तेषां तु वचनं श्रुत्वा मुनीनां भरतो मुनिः।
प्रत्युवाच पुनर्वाक्यं गुह्यार्थाभिनयं प्रति॥ १०॥

---

१. 'कथितो' का. २. 'सहास्माभि.' का. ३. 'भगवन् संशयो यो यत्' का. ४. 'को ह्यन्यो नाट्यवेदस्य निश्चयं वक्तुमर्हति' का. ५. 'परिभावेन' का. ६. 'न विरोधेन नेर्ष्यया' का. ७. 'पृच्छामो भगवन्नाट्यमुपदेशाभिपूर्वकम्' का. ८. 'नोक्तव्या' क-ख. तदा 'छेदो भवेदिति' का. ९. 'तत्सर्वं निखिलेनेदं' का. १०. 'निदर्शय' का. ११. 'तेषां नो लोकगुह्याना' का. १२. 'वक्तुमर्हसि' का. १३. 'देवस्य' का. १४. 'किमर्थं पूज्यते ह्येष प्रयुक्तं किं करोति वा' का. १५. इतोऽग्रे का. पुस्तके 'प्रीतं किं दैवतं तत्र प्रीतिं वा किं करोति च।' इत्यधिकं पद्यार्धम्। १६. 'कस्मादेव पुनः शौचं शुभं चरति सूत्रधृक्।' का. १७. 'तदायं' का. १८. 'नटसंज्ञः प्रकीर्तित.' का. १९. पद्यमेतत् का. पुस्तके नास्ति।

कथयामि कथां गुह्यां यन्मां पृच्छथ सुव्रताः ।
पूर्वरङ्गविधानस्य तां च मे संनिबोधत ॥ ११ ॥
प्रोक्तवानसि यत्पूर्वं शुभं विघ्ननिबर्हणम् ।
तस्यानुबन्धेन मया पूर्वरङ्गः प्रकीर्तितः ॥ १२ ॥
शस्त्राणां प्रतिकारार्थं शरीरावरणं यथा ।
क्रियते हि यथा पापं हुतेनैव प्रशाम्यति ॥ १३ ॥
एवं जप्यै(पै?)श्च होमैश्च देवताभ्यर्चनेन च ।
स्तुत्याशीर्वचनैः शान्तैः कर्मभावानुकीर्तनैः ॥ १४ ॥
सर्वातोद्यनिनादैश्च तथा गतिस्वनेन च ।
मयो पापापकरणे कृते विघ्ननिबर्हणे ॥ १५ ॥[11]
स्तुतिगीताभिसंहृष्टैर्देवैरभिहितोऽस्म्यहम् ।
नितरां परितुष्टाः स्म प्रयोगेणामुना तव ॥ १६ ॥
देवतासुरमानन्द्य यस्माल्लोकं च निन्दति ।
तस्मादयं प्रयोगस्तु नान्दीनामा भविष्यति ॥ १७ ॥
गीतवाद्यौ तु नान्दी हि यत्र काकस्वनः शुभः ।
तस्मिन्देशे विपाप्मा नो म(मा?)ङ्गल्ये च भविष्यति ॥ १८ ॥

१. इतः पूर्वं का. पुस्तके 'भरत उवाच—' इति वर्तते । २. 'ब्रवीमि वो ह्ययं विप्राः यन्मां पृच्छत सुव्रताः ।' का. ३. 'पूर्वरङ्गविधानस्य तां च मे संनिबोधत ।' का. ४. 'यत्पूर्वमहं' का. ५. 'परिहारार्थं' का. ६. 'शरीराचरणं यथा' का. ७. 'तथा सर्वगतं पापं स्मृतेनैव प्रशाम्यति' का. ८. 'एवं जप्यैश्च होमैश्च का. ९. 'युक्तः' का. १०. '०कीर्तनात्' का. ११. 'यथा गीतस्वनानि च' का. १२. 'मया च पापहरणे' का. १३. 'ह्यदम्' रा-क. १४. 'स्तुतिगीतादिसंहृष्टो येनाथ ह्रियते पुमान् ।' का. १५. 'नितरां परितुष्टाः स्म' इत्यार्धं तथा 'देवतासुरमानन्द्या' इत्यार्धं च का. पुस्तके न स्तः । १६. 'नान्दीनाम' का. १७. 'गीतवाद्यानुनादी च' का. १८. 'काकुस्वरः' का. १९. 'तु पाप्मो' का. २०. 'माङ्गल्यश्च भविष्यति का.

[1]यावत्तं पूरयेद्देशं ध्वनिर्नाट्यसमाश्रयः ।
[2]न स्थास्यन्ति हि रक्षांसि तं देशं न विनायकाः ॥ १९ ॥
आवाहे च विवाहे च यज्ञे नृपतिमङ्गले ।
नान्दीशब्दमुपश्रुत्य हिंसौ[3](स्राः?) नश्यन्ति चैव हि ॥ २० ॥
[4]वाद्यं नाट्यं तथा गेयं चित्रं वादित्रमेव च ।
वेद[5]मन्त्रार्थवचनैः समं ह्येतद्भविष्यति ॥ २१ ॥
श्रुतं मया देवदेवात्तत्त्वतः[6] शंकरोदितम् ।
स्नानजप्यसहस्रेभ्यो यत्र[7] संगीतवादितम् ॥ २२ ॥
यस्मिन्[8]नातोद्यनाट्यस्य गीतवाद्यध्वनिः शुभः ।
[9]भविष्यत्यशुभं देशो नैव तस्मिन्कदाचन ॥ २३ ॥
एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया ।
[10]नानास्तुतिकृतैर्वाक्यैर्देवताभ्यर्चनेन च ॥ २४ ॥
यतोऽभिवादने क्लिष्टं शि[11]तं तद्रङ्गमण्डले ।
[12]ततस्तस्य हि तच्छौचं विहितं तु द्विजोत्तमाः ॥ २५ ॥
शौचं कृत्वा यतो मन्त्रपूजनं जर्जरस्य तु ।
उच्यते पूर्वरङ्गेऽस्मिंस्तस्माच्छौचं प्रकीर्तितम् ॥ २६ ॥
.....................चैवमाद्यमेतन्महीतले ।
व[13]क्तव्यं सर्वमेतद्धि न शक्यं हि निगूहितम् ॥ २७ ॥
[14]सं[वि ?]मेतत्तया सर्वे नाट्यवेदसमन्विताः ।
[15]सर्वलोकप्रहसनैर्वाद्यं तेनाद्य संश्रये ॥ २८ ॥

१. 'यावन्तं पूरयेद्देश ध्वनिरातोद्यसश्रय' का. २. 'तावत्तानां शुभं किंचित् न च विघ्नविनायकाः' का. ३. 'हिंसा' इति का. ४. 'वाद्यं नाट्यं तथा गेयं चित्रं वादित्रमेव च' का. ५. 'वेदमन्त्रार्थवचनैस्तथैव च' का. ६. 'ततश्च शंकरोदितम्' का. ७. 'श्रेष्ठं मे गीतवादितम्' का. ८. 'यस्मिन्नातोद्यनाट्यस्थो गीतवाद्यश्च निःस्वनः' का. ९. 'भविष्यत्यशुभं तस्मिन् देशे नैति कदाचन' का. १०. 'यत्र स्तोत्रकृतैर्मन्त्रैर्देवताभ्यर्चनं प्रति' का. ११. 'शिरसा रङ्गमण्डले' का. १२. इतः प्रभृति पद्यद्वयी का. पुस्तके नास्ति। १३. 'तथा विधिसमापन्नं न शक्यं विनिगूहितुम्' का. १४. 'ममैते तनयाः सर्वे नाट्यवेदमदान्विताः ।' का. १५. 'सर्वलोकप्रहसनैर्याप्यन्ते दाससंश्रये.' का.

कस्यचित्त्वथ कालस्य शिल्पकं[1] ग्राम्यधर्मकम् ।
ऋषीणां न्यङ्गकरणं[2] कुर्वद्भिर्महं[3]संश्रयम् ॥ २९ ॥
अश्रव्यं(?)[4] सुदुराचारं ग्राम्यधर्मप्रवर्तितम्[5] ।
निष्ठुरं चास्र(प्र?)शस्तं[6] च काव्यं सर्सद्धियोजितम्[7] ॥ ३० ॥
तच्छ्रुत्वा मुनयः सर्वे भीमरोषं[8] प्रकम्पिताः ।
ऊचुस्तान्भरतान्क्रुद्धा[9] निन्दयन्तं[10] इवाग्नयः ॥ ३१ ॥
मा तावद्भो द्विजा युक्तमिदमस्मद्विडम्बनम्[11] ।
को नामायं परिभवः किंवा नास्मा[12]सु संमते ॥ ३२ ॥
यस्मोज्ज्ञानमदोन्मत्ता[13] न चेच्छाविनयान्विताः ।
तस्मादेतद्धि भवतां कुज्ञानं नाशमेष्यति ॥ ३३ ॥
ऋषीणां ब्राह्मणानां च समवा[14]यसमागमे ।
निर्ब्रह्मणो[15] निराम्(हु?)तः शूद्राचारो भविष्यति[16] ॥ ३४ ॥
येश्च[17] वा भवतां वंशः स चाशौचो भविष्यति ।
[18]ये च वो वंशजास्तेऽपि भविष्यन्त्यथ नर्तकाः ॥ ३५ ॥
[19]परोपस्थानवन्तश्च पुंस्त्रीबालोपजीविनः ।
[20]शापं दत्तं तथा ज्ञात्वा सुतेभ्यो मे तदा सुराः ॥ ३६ ॥
सर्वे विमनसो भूत्वा तानृषीन्समुपस्थिताः ।
[21]याचमानैस्ततः प्रोक्तं देवैः शक्रपुरोगमैः ॥ ३७ ॥

---

१. 'शिल्पकर्म ममाभ्यघात्' का. २. 'ऋषीणामङ्ग करणं' का. ३. 'कुर्वद्भि-र्भाण्डं संश्रयम्' का. ४. 'अमार्य सुदुराचारं' का. ५. 'प्रवर्तनम्' का. ६. 'चाप्रशस्तं च' का. ७. 'संसदि योजितम्' का. ८. 'भीमरोषाः प्रवेपिता.' का. ९. 'ऊचुस्ते भरतान् सर्वान्' का. १०. 'निर्दहन्त इवाग्नयः' का. ११. 'नस्मा-भिसेवितम्' का. १२. 'तस्मात्' का. १३. 'भवता विनयाभया.' का. १४. 'समवायेऽप संगमे' का. १५. 'निर्ब्रह्मवर्णाभूत्वा शूद्राचारा भविष्यथ' का. १६. श्लोकोऽयं का. पुस्तके 'शूद्रास्ते वेषते भूत्वा तत्कर्म समवाप्स्यथ' इति पद्यार्धेनाधिकम् । १७. 'यश्च वो भवतां वंश न च शुद्धो भविष्यति ।' इति का. १८. 'येऽप्यारि वंशजाता.' का. १९. 'परोपस्थानवन्तश्च च स्त्रीचारपुनर्भवाः ।' का. २०. 'तान्-जन्म ततो ज्ञात्वा पुत्राणां मे सुरास्तदा ।' का. २१. 'याचद्भिश्च तथा प्रोक्तं' का.

[1]यावत्तं पूरयेद्देशं ध्वनिर्नाट्यसमाश्रयः ।
[2]न स्थास्यन्ति हि रक्षांसि तं देशं न विनायकाः ॥ १९ ॥
आवाहे च विवाहे च यज्ञे नृपतिमङ्गले ।
नान्दीशब्दमुपश्रुत्य हिंसा[3](स्राः?) नश्यन्ति चैव हि ॥ २० ॥
[4]वाद्यं नाट्यं तथा गेयं चित्रं वादित्रमेव च ।
वेद[5]मन्त्रार्थवचनैः समं ह्येतद्भविष्यति ॥ २१ ॥
श्रुतं मया देवदेवा[6]द्भवतः शंकरोदितम् ।
स्नानजप्यसहस्रेभ्यो य[7]त्र संगीतवादितम् ॥ २२ ॥
[8]यस्मिन्नातोद्यनाट्यस्य गीतवाद्यध्वनिः शुभः ।
[9]भविष्यत्यशुभं देशे नैव तस्मिन्कदाचन ॥ २३ ॥
एवं पूजाधिकारार्थं पूर्वरङ्गः कृतो मया ।
[10]नानास्तुतिकृतैर्वाक्यैर्दैवताभ्यर्चनेन च ॥ २४ ॥
यतोऽभिवादने क्लिष्टं शि[11]तं तद्रङ्गमण्डले ।
[12]ततस्तस्य हि तच्छौचं विहितं तु द्विजोत्तमाः ॥ २५ ॥
शौचं कृत्वा यतो मन्त्रपूजनं जर्जरस्य तु ।
उच्यते पूर्वरङ्गेऽस्मिंस्तस्माच्छौचं प्रकीर्तितम् ॥ २६ ॥
......................चैवमाद्यमेतन्महीतले ।
[13]वक्तव्यं सर्वमेतद्धि न शक्यं हि निगूहितम् ॥ २७ ॥
[14]स[र्वे ?]मेतत्त्वया सर्वे नाट्यवेदसमन्विताः ।
[15]सर्वलोकप्रहसनैर्वाद्यं तेनाद्य संश्रये ॥ २८ ॥

१. 'यावन्तं पूरयेद्देशं ध्वनिरातोद्यसंश्रयः' का. २. 'तावत्तानां शुभं किंचित् न च विघ्नविनायका.' का. ३. 'हिंस्रा' इति का. ४. 'वाद्यं नाट्यं तथा गेयं चित्रं वादित्रमेव च' का. ५. 'वेदमन्त्रार्थवचनैस्तथैव च' का. ६. 'ततश्च शंकरोदितम्' का. ७. 'श्रेष्ठं मे गीतवादितम्' का. ८. 'यस्मिन्नातोद्यनाट्यस्थो गीतवाद्यध्वनिश्चयः' का. ९. 'भविष्यत्यशुभं तस्मिन् देशे नैति कदाचन' का. १०. 'यत्स्तोत्रस्तैर्मन्त्रैर्देवताभ्यर्चनं प्रति' का. ११. 'शिरसा रङ्गमण्डले' का. १२. इतः प्रभृति पद्यद्वयी का. पुस्तके नास्ति। १३. 'तथा विधिसमापन्नं न शक्यं विनिगूहितुम्' का. १४. 'ममैते तनयाः सर्वे नाट्यवेदमदान्विताः ।' का. १५. 'सर्वलोकप्रहसनैर्याप्यन्ते हास्यसंश्रये.' का.

कस्यचित्त्वथ कालस्य शिल्पकं[1] ग्राम्यधर्मकम् ।
ऋषीणां[2] न्यङ्गकरणं कुर्वद्भिर्महैः[3] संश्रयम् ॥ २९ ॥
अर्थव्यं[4](?) सुदुराचारं ग्राम्यधर्मप्रवर्तितम्[5] ।
निष्ठुरं चाश्ल(प्र?)शस्तं[6] च काव्यं संसद्भि[7]योजितम् ॥ ३० ॥
तच्छ्रुत्वा मुनयः सर्वे भीमरोषं[8] प्रकम्पिताः ।
ऊचुस्तान्भरताक्रुद्धा[9] निन्दयन्त[10] इवाग्नयः ॥ ३१ ॥
मा तावद्भो द्विजा युक्तमिदमस्माद्विडम्बनम् ।
को नामायं परिभवः किंवा नास्मासु[11] संमते ॥ ३२ ॥
यस्मा[12]ज्ज्ञानमदोन्मत्ता [13]न चेच्छाविनयान्विताः ।
तस्मादेतद्धि भवतां कुज्ञानं नाशमेष्यति ॥ ३३ ॥
ऋषीणां ब्राह्मणानां च समवाय[14]समागमे ।
[15]निर्ब्रह्मणो निराहू(हु?)तः शूद्राचारो भविष्यति[16] ॥ ३४ ॥
येश्च[17] वा भवतां वंशः स चाशौचो भविष्यति ।
[18]ये च वो वंशजास्तेऽपि भविष्यन्त्यथ नर्तकाः ॥ ३५ ॥
[19]परोपस्थानवन्तश्च पुंस्त्रीबालोपजीविनः ।
शापं[20] दत्तं तथा ज्ञात्वा सुतेभ्यो मे तदा सुराः ॥ ३६ ॥
सर्वे विमनसो भूत्वा तानृषीन्समुपस्थिताः ।
याचमानै[21]स्ततः प्रोक्तं देवैः शक्रपुरोगमैः ॥ ३७ ॥

१. 'शिल्पकर्म समाभ्यघात्' का. २. 'ऋषीणामङ्गं करणं' का. ३. 'कुर्वद्भिर्भोण्डं संश्रयम्' का. ४. 'अग्राह्यं सुदुराचारं' का. ५. 'प्रवर्तनम्' का. ६. 'चाप्रशस्तं च' का. ७. 'सरादि योजितम् का. ८. 'भीमरोषाः प्रकोपिता.' का. ९. 'ऊचुस्ते भरतान् सर्वान्' का. १०. 'निर्दहन्त इवाग्नयः' का. ११. 'नाम्नाभिसमतम्' का. १२. 'तस्मात्' का. १३. 'भवता विनयाश्रया.' का. १४. 'समवायोऽप्यगमे' का. १५. 'निर्ब्रह्माचरणाभूत्वा शूद्राचारा भविष्यथ' का. १६. इतोऽग्रे का. पुस्तके 'शूद्रास्ते केवलं भूत्वा तत्कर्म समवाप्स्यथ' इति पद्यार्धमधिकम् । १७. 'यश्च वो भवतां वंश स च शूद्रो भविष्यति ।' इति का. १८. 'येऽन्यापि वंशजाता.' का. १९. 'तथोपस्थानवन्तश्च स स्त्रीबालकुमारकाः ।' का. २०. 'शापजन्म ततो ज्ञात्वा सुतानां मे सुरास्तदा ।' का. २१. 'तावद्भिश्च तथा प्रोक्तं' का.

[1]इदानीं दुःस(ख ?)मुत्पन्नं नाट्यमेतद्विनङ्क्ष्यति ।
[2]ऋषिभिश्च ततः प्रोक्तं न हि त्वेतद्धि वक्ष्यति ॥ ३८ ॥
शेष[3]मन्यत्र यत्प्रोक्तं सर्वमेतद्भविष्यति ।
एतच्छ्रुत्वा तु वचनं मुनीनामुग्रतेजसाम् ॥ ३९ ॥
वि[4]षण्णास्ते ततः सर्वे श्रुत्वा तं समुपस्थिताः ।
प्रो[5]क्तवन्तश्च मां पुत्रास्त्वयाहो नाशिता वयम् ॥ ४० ॥
[6]अनेन नाट्यघोषेण शूद्राचारा हि यत्कृताः ।
[7]ममापि सान्त्वयित्वोक्ता मा क्रोधं भजतानघाः ॥ ४१ ॥
कृ[8]तानुविहितोऽस्माकं नूनमेष विधिः सुतौ[9] ।
मुनीनां न मृषा वाक्यं भविष्यति कदाचन ।
निधनं च[10] मनो मा भूद्युष्माकमिति सान्त्विताः ॥ ४२ ॥
[11]जानीध्वं तत्तथा नाट्यं ब्रह्मणा संप्रवर्तितम् ।
शि[12]ष्येभ्यश्चैतदन्येभ्यः प्रयच्छामः प्रयोगतः ॥ ४३ ॥
मा वै प्रणश्यतामेतन्नाट्यं दुः[13]खंप्रवर्तितम् ।
महाश्रयं महापुण्यं वेदाङ्गोपाङ्गसंभवम् ॥ ४४ ॥
[14]अप्सरोभ्य इदं चैव यथातत्त्वं तथा स्तुतम् ।
नाट्यं दत्त्वा ततः सर्वे प्रायश्चित्तं चरिष्यं[15]ति ॥ ४५ ॥

इति भारतीये नाट्यशास्त्रे नटशापो नाम सप्तत्रिंशः ( ष[16]ट्त्रिंशः ) अध्यायः ।

---

१. 'इदानीं दुःखमुक्तश्च सर्वमेतद्विनिश्चयु ।' का. २. 'ऋषिभिश्च ततो (?) प्रोक्तं न चैतद्विविनश्यति ।' का. ३. 'शेषमन्यत्तु' का. ४. 'विपण्णास्ते सुराः सर्वे पुनरात्मावनैषिणः ।' का. ५. 'प्रोक्तवन्तस्तु मा क्रुद्धा बहुशो नाशितास्त्वया ।' का. ६. 'अनेन नाट्यदोषेण शूद्राचारप्रियाः कृताः ।' का. ७. 'मया च सान्त्वयित्वोक्तं' का. ८. 'कृतान्तविहितोऽस्माकं' का. ९. 'स्मृतः' का. १०. 'तु' का. ११. 'जानीध्वं तु तथा नाट्यं ब्रह्मणा संप्रकीर्तितम् ।' का. १२. 'शिष्येभ्यश्च तदन्येभ्यः प्रयच्छध्वं प्रयोगतः' का. १३. 'दुःखात् प्रवर्तितम्' का. १४. 'अप्सरोभ्युदयश्चैव यथोक्तं न मया श्रुतम्' का. १५. 'चरिष्यथ' का. १६. का. पुस्तकेऽत्राध्यायसमाप्तिर्नास्ति ।

सप्तत्रिंशोऽध्यायः।[1]

[2]...............लिप्रयोगा(गे?)र्वीप्रोक्तवांस्तुष्टु।
कस्यचित्त्वथ कालस्य नहुषो नाम पार्थिवः ॥ १ ॥
प्राप्तं[3] या देवराज्यं हि नयबुद्धिपराक्रमैः।
प्रशशास तदा राज्यं देवैर्व्युष्टिमपाप्नुवन्[4] ॥ २ ॥
गान्धर्वं चैव नाट्यं च इष्टां[5] चिन्तामुपागमत्।
इष्टिचिन्तासु[6] मनसा कथमेष गृहे मम ॥ ३ ॥
नाट्यप्रयोगो हि भवेद्दिवि देवर एव सन्।
कृताञ्जलिः प्रयोगोर्वी प्रोक्तवान्सुपुरान्नृपः[7] ॥ ४ ॥
अप्सरोभिरिदं[8] सार्धं नाट्यं भवतु नो गृहे।
प्रत्युक्तश्च[9] ततो देवैर्बृहस्पतिपुरोगमैः ॥ ५ ॥
दिव्याङ्गनानां[10] नैवेह मानुषैः सह संगतिः।
हितं[11] पथ्यं च वक्तव्यो भवान्स्वर्गाधिपो हि यत् ॥ ६ ॥
आचार्यास्तत्र[12] गच्छतु(न्तु?)....[गत्वा कुर्वन्तु?]...ते प्रियम्।
प्रोक्तवांस्तु ततो[13] मां तु नृपतिः स कृताञ्जलिः ॥ ७ ॥
इदमिच्छामि[14] भगवन्नद्य(नाट्य?) सुर्व्यां प्रवर्तितम्।
पूर्वमाचार्यकं[15] चैव भवतो हि प्रतिश्रुतम् ॥ ८ ॥

---

१. 'सोऽयं' का. पुस्तके षट्त्रिंशाध्यायान्तर्गत एव। २. एतदर्धं का. पुस्तके नास्ति। ३. 'प्राप्तवान् देवराज्यं च' का. ४. 'देवी व्युष्टिमाप्नुवन्' ५. 'दृष्ट्वा चिन्तामुपागतः' का. ६. का. पुस्तके तु—

'स चिन्तयित्वा मनसा कथमेषोऽप्य उन्मनाः।
मम नाट्यप्रयोगोऽयं भवेदिति ससम्भ्रमः ॥' का.

७. 'प्रोक्तवानमरान् नृपः' का. ८. 'इदमप्सरसामित्थं' का. ९. 'प्रयुक्तः स ततो देवैः' का. १०. 'सुराङ्गनानां संपर्कोऽयं मानुषैः सह सङ्गमः।' का. ११. 'हितं पथ्यं च कर्तव्यं भगवन् स्वर्जयेष्यया।' का. १२. 'आचार्यास्तत्र गच्छन्तु गत्वा कुर्वन्तु ते प्रियम्।' का. १३. 'प्रोक्तवांश्च' का. १४. 'इदमिच्छामि भगवन् नाट्यमुर्व्यां प्रतिष्ठितम्।' का. १५. 'पूर्वमाकुलितं चैव द्व्योर्हि किल वः श्रुतम्।' का.

व्यक्तभावात्त्विदं लब्धं त्वत्सकाशाद्विजोत्तम ।
पितामहगृहेऽस्माभिरेतदन्तःपुरे जने ॥ ९ ॥
पितामहक्रियायुक्तं पूर्वस्यां संप्रवर्तितम् ।
तस्याः प्रणाशशोकेन उन्मदोपरते नृपे ॥ १० ॥
विपन्नेऽन्तःपुरजने पुनर्नाशमुपागतम् ।
प्रणाशमेतदिच्छामि भूयस्तत्संप्रयोजितम् ॥ ११ ॥
(?)तिथियज्ञक्रियास्ते तद्यथासन्मङ्गलैः शुभैः ।
तस्मि(स्मि ?)न्मम गृहे बद्धं नानाप्रकृतिसंश्रयम् ॥ १२ ॥
स्त्रीणां ललितविन्यासं प्रणाशो नाशयिष्यति ।
तथास्त्विति मया प्रोक्तो नहुषः पार्थिवस्तदा ॥ १३ ॥
सुताश्चाहूय संप्रोक्ताः सं(सा?) पूर्वं सुरैः सह ।
अयं हि नहुषो राजा याचते नः कृताञ्जलिः ॥ १४ ॥
गम्यतां सहितैर्भूमिं प्रयोक्तुं नाट्यमेव हि ।
करिष्यामश्च शापान्तमस्मिन्सम्यक्प्रयोजिते ॥ १५ ॥
ब्राह्मणानां नृपाणां च भविष्यथ न कुत्सिताः ।
तत्र गत्वा प्रयुज्यन्तां प्रयोगा वसुधातले ॥ १६ ॥
न शक्यं चान्यथाकर्तुं वचनं पार्थिवस्य हि ।
अस्माकं चैव सर्वेषां नहुषस्य (च) महात्मनः ॥ १७ ॥

---

१. 'व्यक्तभावाश्रयं लब्ध्या त्वत्सकाशाद् द्विजोत्तमाः ।' का. २. 'पितामहगृहेऽस्माकं' का. ३. 'पितामहक्रियायुक्तमुर्वश्याः संप्रकीर्तितम् ।' का. ४. 'तस्याः प्रणाशशोकेन उन्मादापहृतेन वै' का. ५. '°मुपागतः' का. ६. 'प्रकाशमेतदिच्छामो भूतले संप्रकीर्तितम् ।' का. ७. 'तिथियज्ञक्रियास्त्वेवं यथा स्यान्मङ्गलं शुभम् ।' का. ८. 'तस्मान् मम गृहे यन्धं' का. ९. 'स्त्रीणां ललितविन्यासैर्यश्चो वः प्रथयिष्यति ।' का. १०. 'यथा' का. ११. 'साम पूर्वं' का. १२. 'तु' का. १३. 'च' का. १४. 'करिष्यामि च' का. १५. 'न भविष्यन्ति कुत्सिताः' का. १६ 'तत्र गत्वा प्रयुज्यन्तां प्रयोगं वसुधातले ।' का. १७. 'युष्माकं चैव संक्षेपात्' का. १८. 'नहुषस्य महात्मनः' का.

[1]आत्मोपदेशसिद्धं हि नाट्यं प्रोक्तं स्वयंभुवा ।
[2]शेषं प्रस्तारतन्त्रेण को(ल)हलः कथयिष्यति ॥ १८ ॥
[3]प्रयोगान्कारिकाश्चैव निरुक्तानि तथैव च ।
अप्सरोभिरिदं सार्धं [4]क्रीडनीयकहेतुकम् ॥ १९ ॥
अधिष्ठितं मया [5]स्वर्गे स्वातिना नारदेन च ।
[6]ततश्च वसुधां गत्वा नहुषस्य गृहे द्विजाः ॥ २० ॥
स्त्रीणां प्रयोगं बहुधा बुद्धिं(म[?]:)न्तो यथाक्रमम् ।
[8]तत्रोपभोगतस्ते तु मानुषीषु ममात्मजाः ॥ २१ ॥
[9]बुद्धिमन्तोऽधिकस्नेहास्ते स्तुतिर्द्विजसत्तमाः ।
पुत्रानुत्पाद्य बद्ध्वा च प्रयोगं [10]वै यथाक्रमम् ॥ २२ ॥
ब्रह्मणा समनुज्ञाताः प्राप्ताः स्वर्गं [11]पुनः सुताः ।
एवमुर्वीतले नाट्यं [12]शिष्यैः समवतारितम् ॥ २३ ॥
भरतानां च वंशोऽयं [13]भविष्यं च प्रवर्तितः ।
[14]कोहे(ह?)लादिभिरेवं तु वत्सशाण्डिल्यधूर्तिलैः ॥ २४ ॥
[15]मर्त्यधर्मक्रियायुक्तैः किं चेच्छाल्मवस्थितैः ।
एतच्छास्त्रं [16]प्रणीतं हि नराणां बुद्धिवर्धनम् ॥ २५ ॥
[17]त्रैलोक्यस्य क्रियोपेतं सर्वशास्त्रनिदर्शनम् ।
[18]मङ्गल्यं ललितं चैव………………॥ २६ ॥

---

१. आत्मोपदेशसिद्धिश्च नाट्ये प्रोक्ता स्वयंभुवा' का. २. 'शेषमुत्तरतन्त्रेण कोहलः कथयिष्यति ।' का. ३. 'प्रयोगः' का. ४. 'क्रीडनीयकं' का. ५. 'सर्वे स्वातिना नारदेन च ।' का. ६. 'ततस्ते' का. ७. 'दृष्टवन्तो' का. ८. 'तत्र चोत्पाद्य वै पुत्रान् मानुषीभ्यो ममात्मजाः ।' का. ९. 'बद्धवन्तोऽधिकं सर्गं तेषां च विविधाश्रयम् ।' का. १०. 'वै' का. ११. 'पुनस्तदा' का. १२. 'शापात् समवधारितम्' का. १३. 'भविष्यच्च प्रकीर्तितम्' का. १४. 'कोहलादिभिरेतैर्वा वात्स्यशाण्डिल्यधूर्तिलैः ।' का. १५. 'मर्त्यधर्मतया युक्तैर्यत्किंचित्कालमवस्थितैः ।' का. १६. 'प्रयुक्तं तु' का. १७. 'त्रैलोक्यक्रिययोपेतम्' का.

१८. 'श्लोकार्धस्यास्य स्थाने 'माङ्गल्यं ललितं चैव ब्रह्मणो वदनोद्भवम् ।
सुपुण्यं च पवित्रं च शुभं पापविनाशनम् ॥' इति पद्यं का. पुस्तके ।

ये[1] इदं शृणुयान्नित्यं प्रोक्तं चेदं स्वयंभुवा ।
कुर्यात्प्रयोगं यश्चैवमथवाधीतवान्नरः ॥ २७ ॥
या गतिर्वेदविदुषां या गतिर्यज्ञकारिणाम्[2] ।
या गतिर्दानशीलानां तां गतिं प्राप्नुयाद्धि सः[3] ॥ २८ ॥
दानधर्मेषु[4] सर्वेषु कीर्तनेषु महत्फलम् ।
प्रोक्षणीयप्रदानं हि[5] सर्वदानेषु शस्यते[6] ॥ २९ ॥
न तथा गन्धमाल्येन देवा[7] मुह्यन्ति पूजिताः ।
यथा[8] नाट्यप्रयोगस्थैर्नित्यं तुष्यति मङ्गलैः ॥ ३० ॥
गान्धर्वं चेह[9] नाट्यं च यः सम्यं[10]वपरिपालयेत् ।
स[11] ईश्वरगणेशानां लभते सद्गतिं पराम् ॥ ३१ ॥
एवं नाट्यप्रयोगे बहु[12]विधिविहितं कर्मशास्त्रप्रणीतं
नोक्तं[13] यच्चात्र लोकादनुकृतिकरणात्संविभाव्यं तु तज्ज्ञैः ।
किं[14] चान्यत्संप्रपूर्णा भवतु वसुमती नष्टदुर्भिक्षरोगा
शान्तिर्गोब्राह्मणानां भवतु नरपतिः पातु पृथ्वीं समग्राम् ॥ ३२ ॥
महापुण्यं प्रशस्तं च लोकानां नयनोत्सवम् ।
नाट्यशास्त्रं समासेदं(?)भारतस्य यशोवहम् ॥ ३३ ॥

इति भारतीये नाट्यशास्त्रे गुह्यविकल्पो नामाध्यायः सप्तत्रिंशः ।

समाप्तश्चायं [ग्रन्थः[15]] । नन्दिभरतसंगीतपुस्तकम् (?)

---

१. 'य इदं शृणुयात् प्रोक्तं नाट्यमेतत् स्वयंभुवा ।
प्रयोगं यश्च कुर्वीत प्रेक्षते चावधानवान् ॥' का.
२. 'यज्ञयाजिनः' का. ३. 'नरः' का. ४. 'नृपधर्मेषु सर्वेषु कीर्त्यते स महाफलम् ।' का. ५. 'तु' का. ६. 'पूज्यते' का. ७. 'देवास्तुष्यन्ति' का. ८. 'यथा नाट्यप्रयोगस्थैस्तुष्यन्ति स्तुतिमङ्गलैः' का. ९. 'चैव' का. १०. 'सम्यगनुपश्यति' का. ११. 'लभते सद्गतिं पुण्यां समब्रह्मर्षिभिर्नरः ।' का. १२. 'बहुबहु' का. १३. 'न प्रोक्तं यच्च लोकादनुकृतिकरणं तच्च कार्यं विधिज्ञैः ।' का.
१४. 'किं चान्यत् सस्यपूर्णा भवतु वसुमती शाश्वती नष्टरोगा ।
शान्तिर्गोब्राह्मणानां नरपतिरवनिं पातु चेमां समग्राम् ॥' इति का.
१५. 'इति भारतीये नाट्यशास्त्रे नाट्यावतारो नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ समाप्तश्चायं ग्रन्थः' ॥ इति का.